सरस्वतीभवन-ग्रन्थ माला
[ १२१ ]

श्रीदलपतिमहाराजप्रणीते
नृसिंहप्रसादे

# संस्कारसारः




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

सरस्वतीभवन-ग्रन्थमाला

[ १२१ ]

श्रीदलपतिमहाराजप्रणीते

नृसिंहप्रसादे

# संस्कारसारः



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA-GRANTHAMĀLA

[ Vol. 121 ]

Nṛsimhaprasāde

# SAṂSKĀRASĀRA

OF

Śrīdalapatimahārāja

Edited By

ĀCĀRYA ŚRĪ RĀMAGOVINDA ŚUKLA

Lecturer & Head of Dharmaśāstra Deptt.

Sampurnanand Sanskrit University

Varanasi



VARANASI

1985

Published by :—
**Director, Research Institute,**
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi.

Available at :—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi 221002.

First Edition—500 Copies.
Price Rs. 50·00



Printed by—
Ghanshyam Upadhyaya
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press
Varanasi.

# सरस्वतीभवन-ग्रन्थमाला

[ १२१ ]

श्रीदलपतिमहाराजप्रणीते

## नृसिंहप्रसादे

# संस्कारसारः

सम्पादकः

आचार्यश्रीरामगोविन्दशुक्लः

प्राध्यापकोऽध्यक्षश्च

धर्मशास्त्रविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये




वाराणस्याम्

२०४२ तमे वैक्रमाब्दे १९०७ तमे शकाब्दे १९८५ तमे खैस्ताब्दे

प्रकाशकः —
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये,
वाराणसी ।

प्राप्तिस्थानम् —
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१००२.

प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्—५०.०० रूप्यकाणि

मुद्रकः —
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीयमुद्रणालयस्य
वाराणसी ।

# प्रास्ताविकम्

चतुर्दशविद्यासु धर्मशास्त्रमन्यतमविद्यातयाभिमतं मनीषिभिः। धर्मशास्त्रमिदं जन्मन आरभ्य मरणान्तं यावत् समग्रं मानवजीवनमभिव्याप्नोतीति परमोपकारकं मनुष्यमात्रस्य भारतीयस्य। दायादिविवादनिर्णये तावदिदमेव शास्त्रं प्रमाणतया समास्थेयं भवति न्यायालयेष्विति राजमान्यत्वमेतदीयं प्रथते। आङ्गलदेशीयैः शासकैरीदृशीमेतदीयामुपयोगितां विभाव्य प्रमुखेषु महानगरेषु पुस्तकालया विद्यालयाश्च संस्थापिताः पौरजनसाहाय्येन।

मौहम्मदीयानां शासकानां समयेऽपि न्यायालयेषु वादनिर्णयावसरे धर्मशास्त्रग्रन्थानां मतानि न्यायाधीशैरपेक्ष्यन्ते स्म। पुराणस्मृत्यादिषु विकीर्णानां मतानां नैकत्र समुपलब्धत्वाद् विविधशास्त्रमन्थनपूर्वकं तादृशनिबन्धग्रन्थरचनया धर्मशास्त्रस्य सौलभ्याय शासकैराश्रितपण्डिताः प्रेर्यन्ते स्म। धर्मशास्त्रनिबन्धग्रन्थरचनापरम्पराप्रारम्भस्तावदभूद् द्वादशख्रीस्तशताब्दाल्लक्ष्मीधरकृतकल्पतरुग्रन्थप्रणयनेन सत्रैव। एषा खल्वखण्डपरम्परा शताब्दसप्तकं यावदक्षुण्णा दृश्यते।

अयं नृसिंहप्रसादाख्यो धर्मशास्त्रनिबन्धग्रन्थो निबन्धग्रन्थरचनाशृङ्खलायां स्वेष्टदेवस्य नृसिंहस्य प्रसादरूपतया तन्नाम्ना पञ्चदशख्रीस्तशताब्द्या अन्ते षोडशशताब्द्याश्च प्रारम्भे सन्दृब्धो निजामसाहसमस्तसाम्राज्यधुरन्धरेण मन्त्रिणा भारद्वाजकुलानुगेन दलपतिराजेन बुक्कवीरमहीपतिप्रधानमन्त्रिसायणस्य वेदव्याख्येव द्वादशभागेषु। तत्र नृसिंहप्रसादस्य तृतीयचतुर्थषष्ठभागाः सरस्वतीभवनग्रन्थमालायाः ५३, ५४, ५५ तमाख्यपुष्पतया प्रकाशितचराः समभूवंश्चतुस्त्रिंशदधिकैकोनविंशतिशततमे ख्रीस्ताब्दे।

तस्यास्योपयोगिनो ग्रन्थस्यान्येऽपि भागाः प्रकाशनार्हाः सन्तीति तत्सम्पादनाय केचिद् विद्वांस इह दिशि सम्प्रेरिताः। तेषु पण्डिततारकनाथ-

भट्टाचार्यः स्मृतिशेषतामभजत् । संस्कारसाराख्यस्य प्रथमस्य भागस्य सम्पादनार्थम् अनुसन्धानसंस्थानस्यान्यतमानुसन्धानाधिकारी पण्डितरामगोविन्दशुक्ल-महाशयो नियोजितो निरवर्तयत् सम्पादनमेतदीयं यथायथम् । इह प्रथमे भागे षोडशसंस्काराणां निरूपणं समग्रधर्मशास्त्रवाङ्मयं निर्मथ्य व्यधायि ग्रन्थकारेण । सम्पादकेन खलु ग्रन्थेऽस्मिन् समुद्धृतानां श्लोकानामनुक्रमसूची, अनिर्दिष्टग्रन्थ-श्लोकानुक्रमणिका, स्मृतानां ग्रन्थानां ग्रन्थकाराणां च नामानुक्रमणिका योजिताः परिशिष्टतयेति ग्रन्थोऽयं महते लाभाय सेत्स्यति जिज्ञासूनामिति मनुते

विजयदशम्यां
२०४२ वै०
(२३-१०-८५ ख्री०)



**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः
अनुसन्धानसंस्थानस्य

# भूमिका

इदं किल श्रूयते 'नासदासीन्नो सदासीत् तदानीम्' इति श्रुतिप्रामाण्यात् सर्वतोऽम्भःप्राये शेषशयने शयानस्य भगवतो जागराव्यवहितक्षणे 'स ईक्षत् लोकान्नुत्सृजा' इति जगत् सिसृक्षाङ्कुरोऽन्तः प्रादुर्बभूव । तदा अतर्क्यैश्वर्योऽखिलशक्त्याधारो निमित्तोपादानादिकारणान्तरनिरपेक्षः स्वयमात्मनैव ब्रह्मादिक्रमेण चतुर्विधभूतनिकायगर्भितं स्थावरजङ्गमात्मकं जगद् धर्माधर्मौ तत्प्रतिपादकानि पुराणानि स्मृत्वा तदनु वेदान् प्रकाशयामास । तदाहुर्मात्स्ये—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ॥

इत्थं व्यवहाराय तत्तच्छब्दानां तेन तेनार्थेन सम्बन्धं ग्राहयित्वा अखिलधर्माधर्मप्रतिपादकशास्त्रपदे वेदान् स्थापयित्वा ऋषिभ्यः स्वाङ्गजेभ्यः प्रतिपादितवान् ।

अत एव अपरार्को धर्मस्य वेदप्रतिपादितत्वं समर्थयति—

धर्मशुद्धिमभीप्सद्भिर्न वेदादन्यदिष्यते ।
धर्मस्य कारणं शुद्धं मिश्रमन्यत् प्रकीर्तितम् ॥
अतः स परमो धर्मो यो वेदादधिगम्यते ।
अवरः स तु विज्ञेयः यः पुराणादिषु स्मृतः ॥
वेदार्थवित्तमैः कर्म यत् स्मृतं मुनिभिः पुरा ।
तद्यत्नेन समातिष्ठेत् तन्निषिद्धं तु वर्जयेत् ॥
ते हि वेदार्थतत्त्वज्ञा लोकानां हितकाम्यया ।
प्रदिष्टवन्तो यं धर्मं तं धर्मं न विचालयेत् ॥
वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेद् यदि ।
ऋषिभिर्निश्चिते तस्मिन् का शङ्का स्यान्मनीषिणाम् ॥
एतेभ्योपि यदन्यत् स्यात् किञ्चिद् धर्माभिधायकम् ।
तद्दूरतरतो विद्धि मोहस्तस्याश्रयो मतः ॥

ततश्च भगवदुपदिष्टो वेदराशिरनेकशाखामण्डलभिन्नः चातुर्वर्ण्यचातुराश्रम्यनित्यानुष्ठातव्याद्यनेकविभागो नाबुधैर्ग्रहीतुं शक्य इति महाप्रभावै-

मन्त्रद्रष्टृभिर्महर्षिभिर्यथायथं विभज्य वेदार्थोपोद्बलका लोकव्यवहारक्षमा नैकस्मृती रचयाम्बभूवुः ।

अथ कुशाग्रमतिभ्योऽन्तरङ्गतया सुप्रतिष्ठिता भविष्यत्पुराणे स्मृतयः षट्त्रिंशदेवाभिहिताः । यथा—

मन्वादिस्मृतयो यास्तु षट्त्रिंशत् परिकीर्तिताः ।
तासां वाक्यानि क्रमशः समासेन ब्रवीमि ते ॥ इति ।

ताश्च मनु-विष्णु-यम-दक्ष-आङ्गिरः-अत्रि-बृहस्पति-उशना-आपस्तम्ब-वसिष्ठ - कात्यायन - पराशर-व्यास - शङ्ख-लिखित-संवर्त-गौतम-शातातप-हारीत-याज्ञवल्क्य-प्रचेतस-बुध-देवल-सोम-जमदग्नि-विश्वामित्र-प्रजापति-नारद -पैठीनसि-पितामह-बोधायन-छागलेय-जाबालि-च्यवन-मरीचि-कश्यपा इति षट्त्रिंशदेव परिगणिताः । अन्याश्च स्मृतय एषामविरोधेन प्रामाण्यं भजन्ते ।

आस्तां महर्षिव्यवहारक्षमाणां श्रुतिस्मृतिधर्मसूत्राणां विवेचनेन । अस्मादृशामाधुनिकानां सकलवेदतदर्थस्मृतिदर्शनासमर्थानां निर्वाहाय विदितयाथातथ्यैः महर्षिभिर्विरचिता धर्मशास्त्रग्रन्था अधुनापि कुशलमतिभिर्धार्यमाणा दृश्यन्ते । तेषु नानाविधविपुलधर्मशास्त्रग्रन्थेषु मन्दमतीन् आकलय्य अनेके निबन्धग्रन्था विद्वद्भिर्विरचिताः । ते च कालादर्शः, हेमाद्रिदीपिका, विवरणसहायः, प्रयोगपारिजातः, मदनपारिजातः, कृत्यकल्पतरुः, माधवस्मृतिचन्द्रिका, स्मृतिरत्नावली, स्मृतिदर्पणः, स्मृतिचिन्तामणिः स्मृतिभास्करः, मेधातिथितिलकः, अपरार्कः, मार्कण्डेयः, भोजराजविश्वरूपनिबन्धः, नारायणीयस्मृतिमहार्णवः, गणेशवाक्यमीमांसा, स्मृतिमीमांसा, निबन्धसर्वस्वम्, कर्मविपाकसमुच्चयः, कर्मविपाकः, प्रवरमञ्जरी, जातिविवेकश्चेति प्रसिद्धाः । एतान् अन्यांश्च मूलग्रन्थानवलोक्य नृसिंहप्रसादाख्योऽयं धर्मशास्त्रनिबन्धग्रन्थः श्रीमद्भिः दलपतिमहाराजैर्विरचितः ।

**धर्मशास्त्रपदार्थः**

तत्र धर्माय शास्त्रं धर्मशास्त्रम्, धर्मस्य शास्त्रम्, धर्मप्रयोजकं शास्त्रम्, धर्मप्रयोजनं शास्त्रम् इति विग्रहबहुत्वेऽपि धर्मशब्दस्यार्थज्ञानं विना धर्मशास्त्रपदस्यार्थनिर्धारणं दुःशकमिति धर्मस्तावद् विविच्योच्यते । 'धारणाद् धर्मः' इति पुराणेषु व्युत्पत्तिः । यं लोको धारयति स धर्मः, उत यो लोकं धारयति स धर्म इति विचिकित्सायां **'धर्मो धारयति प्रजाः'** इति पुराणेषु संदेहनिवर्तकं वाक्यम् । एतेन धर्म एव लोकस्य धारक इति निश्चीयते ।

अथ कोऽयं धर्मः, यो लोकं धारयतीति प्रश्ने—

यमार्याः क्रियमाणं हि शंसत्यागमवेदिनः।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥

इति केचित्, तन्न, धर्मे प्रत्यक्षप्रमाणाभावात्। प्रत्यक्षं हि वर्तमानस्यैव भवति, धर्मस्तु भूतभविष्यद्वर्तमानरूपकालत्रयानवच्छिन्नानुष्ठेयकर्मकरणोपकरणोपेतभावनारूपतया वर्तमानत्वात्, नानुमानं प्रमाणम्, हेतोरग्रहणात्, नोपमानं प्रमाणम्, सादृश्यमूलकत्वादुपमानस्य; नार्थापत्तिः प्रमाणम्, प्रत्यक्षावगतानुपपद्यमानार्थपूर्वकत्वात्।

नापि चोदना लक्षणोऽर्थो धर्मः, चोदनाया अनिरुक्तेः। नापि श्रेयःसाधनताधर्मः, अनिरुक्तेः। अतो धर्मे शब्दस्यैव प्रमाणात्वमङ्गीकार्यम्। तत्र श्रुतिः-'धर्मे विश्वस्य जगतः प्रतिष्ठा' इति। स्मृतिरपि 'वेदोऽखिलो धर्ममूलम्' इति।

अत्र याज्ञवल्क्यः—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् सङ्कल्पजः कामो **धर्ममूलमिदं** स्मृतम् ॥ इति।

मनुरपि—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्यासत्यमक्रोधो दशकं **धर्मलक्षणम्**।

अत्र लक्षणं हेतुः।

इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा।
अलोभ इति **मार्गोऽयं धर्मस्याष्टविधः** स्मृतः।

इत्थं धर्मस्य मूलहेतुमार्गेषु निर्णीतेषु धर्मस्य स्वरूपं निर्णीतं भवति।

स च धर्मो द्विविधः—प्रवृत्तिसंज्ञको निवृत्तिसंज्ञकश्च। तत्राभ्युदयफलकः प्रवृत्तिधर्मः, वेदस्य कर्मकाण्डदेवताकाण्डयोः प्रतिपादितः। निःश्रेयसफलको निवृत्तिधर्मो ज्ञानकाण्डेन प्रतिपादितः। तथोक्तम्—

प्रवृत्तिसंज्ञके धर्मे फलमभ्युदयो मतः।
निवृत्तिसंज्ञके धर्मे फलं निःश्रेयसं मतम् ॥

अत्र धर्मे श्रुतिर्मन्त्रब्राह्मणात्मिका, स्मृतिर्वेदमूलिका, आचारो वेदस्मृत्यविरुद्धः पुराणम् अर्थवादतया धर्मे प्रामाण्यं भजते। एतेन वेदविहितकर्मणां स्मृतिषु तत्तद्वर्णानां कृते निर्धारितत्वेन स्वीकृतो धर्मः। ये वदन्ति वेदस्यैव

प्रामाण्यं धर्मे, न तु स्मृतिपुराणानां प्रामाण्यम्, ते परास्ताः । इत्थं धर्मशब्दे ज्ञाते तत्प्रतिपादकशास्त्रेषु धर्मशास्त्रत्वमिति सिद्धम् ।

## नृसिंहप्रसादः

नृसिंहभक्तिप्रवणेन दलपतिमहाराजेन निर्मितोऽयं नृसिंहप्रसादाख्यो ग्रन्थोऽद्यावधि न कुत्रापि मुद्रितः । वाराणसेयसंस्कृतविश्वविद्यालयस्य पुस्तकालये सरस्वतीभवनेऽस्य ग्रन्थस्यानेकाः पाण्डुलिपयो वर्तन्ते, यासामाधारेण कतिपयभागा मुद्रिताः सन्ति । अस्य ग्रन्थस्य द्वादशसाराः सन्ति । तत्र (१) संस्कारसारः, (२) आह्निकसारः, (३) श्राद्धसारः, (४) कालसारः, (५) व्यवहारसारः, (६) प्रायश्चित्तसारः, (७) कर्मविपाकसारः, (८) व्रतसारः, (९) दानसारः, (१०) शान्तिसारः, (११) तीर्थसारः, (१२) प्रतिष्ठासारः । एते सर्वे साराः पूर्णतया उपलब्धाः सन्ति । क्वचित् क्वचित् कतिपयपृष्ठानामवाच्यता कष्टवाच्यता वा दृष्टिपथमायाति ।

## अस्य निर्माणकालः

अयं ग्रन्थोऽनेकैर्निबन्धैरर्वाचीनो निर्णयसिन्धुधर्मसिन्धुवीरमित्रोदयादिग्रन्थेभ्यः प्राचीनो वर्तते । निर्णयसिन्धुवीरमित्रोदययोरस्य नामग्रहणात् । अयं अर्वाचीनैः प्रमाणतया गृहीतोऽपि वर्तते । वीरमित्रोदयस्त्वस्यैवाधारेण निर्मित इति ग्रन्थदर्शनादेव बोद्धुं शक्यते । अयं ग्रन्थो देवगिरि (दौलताबाद)स्थितेन अहमदनिजामशाहस्य धर्माधिकारिणा महाराजपदलाञ्छनेन दलपतिमहाराजेन लिखितः । अहमदनिजामशाहश्च हैदराबादराज्यस्य संस्थापकः १४९०-१५०८ ई० वर्षं यावद् राज्यञ्चकार । अतोऽयं ग्रन्थोऽपि १४९०-१५०८ ई० वर्षाभ्यन्तर एव निर्मित इति निश्चीयते ।

## संस्कारसारः

नृसिंहप्रसादस्यायं प्रथमो भागोऽद्य यावद् मुद्रित एव संस्कृतविश्वविद्यालयस्य सरस्वतीभवनाख्ये पुस्तकालये सुरक्षित आसीत् । वैदिकधर्मस्य षोडश संस्काराः सपद्धति अस्मिन् निरूपिताः सन्ति । योऽल्पकायः संस्काराणां सम्बन्धे विपुलज्ञानवर्धक इति मत्वा तात्कालिकेन कुलपतिना पण्डितश्रीकरुणापतित्रिपाठिना सम्पादनाय सानुग्रहं प्रादायि । मयाऽप्यस्य पाण्डुलिपिं दृष्ट्वा अस्य ग्रन्थस्य यथामति सम्पादनं विहितम् । अस्य सम्पादनावसरे सरस्वतीभवनपुस्तकालयेऽवरुद्धे जाते मूलपुस्तकस्य मुद्रणवेलायां कथमप्यलाभे यत्र कुत्रचित्

काठिन्यमपि मयानुभूतम्, तथापि भगवत्कृपया अयं ग्रन्थो मुद्रितोऽभवत्। अहमेतदर्थमनुसन्धानसंस्थानस्य निदेशकं डॉ० **भगीरथप्रसादत्रिपाठिमहोदयं** धन्यवादेन योजयामि। अस्य विश्वविद्यालयस्य कुलपतिचरस्य **पण्डितश्रीकरुणापतित्रिपाठि**महोदयस्यानुग्रहं मन्ये।

अत्र निर्णीतोऽर्थः संक्षिप्य लिख्यते

## पुण्याहवाचनम्

ग्रहशान्त्यनुसारेण **गौरीगणेशादीन्** सम्पूज्य पुण्याहवाचनकलशं विधाय जानुभ्यां स्थितो भूत्वा द्वयोः पात्रयोः ब्राह्मणैरनुज्ञातो जलं पातयेत्। अन्तःस्थितेन पात्रेण परिवारं गृहं च मार्जयेत् वहिस्थं पात्रं कश्चन शूद्रो नापितः कर्मकरो वा असञ्चरे देशे ग्रामाद् बहिः स्थापयेत्, हस्तौ पादौ च प्रक्षाल्य पुनः कर्मणि साहाय्यकं कुर्यात्। इदं च कर्म कर्मारम्भात् प्राक् कार्यम्।

## मधुपर्कः

अयम् आचार्यर्त्विक्प्रवरराजप्रियस्नातकानामगमने विधीयते, दधि मधु घृतं मधुपर्कः। अस्य विधिः पद्धत्यां निरूपितो द्रष्टव्यः।

## नान्दीश्राद्धम्

इदं संस्काराणां यज्ञदानानाञ्च प्रकरणे कर्तव्यम्। एनम् आभ्युदयिकश्राद्धं वृद्धिश्राद्धमपि कथयन्ति। अत्र पिण्डदानं न भवति। सव्येन देवतीर्थेन उपवीतिना क्रियते। अस्य करणेन पितरः षण्मासं प्रीणिताः भवन्ति।

## संस्काराः

एते द्विजानां ब्राह्मणक्षत्रियवैश्यानां मन्त्रतः कार्याः। शूद्रस्य तु पौराणिकैः मन्त्रैर्द्वादशसंस्काराः क्रियन्ते। तत्र द्विजानां उपनयनान्ताः संस्काराः नियताः, अन्ये तु समावर्तनाद्या अनियताः। अत्र ग्रन्थे षोडश संस्काराः वर्णिताः। ते च (१) गर्भाधानम्, (२) पुंसवनम् (३) सीमन्तोन्नयनम् (४) जातकर्म, (५) नामकरणम्, (६) निष्क्रमणम्, (७) अन्नप्राशनम्, (८) चूडाकरणम् (९) कर्णवेधः, (१०) उपनयनम्, (११) वेदारम्भः, (१२) गोदानम् (केशान्तः) (१३) समावर्तनम्, (१४) विवाहः (१५) अग्न्याधानम् (१६) अन्त्यकर्म च (दाहः)। अत्र केचन

त्रेताग्निपरिग्रहं पठन्ति। कर्णवेधान्तःसंस्कारा यथाकालमकृता उपनयन-संस्कारात् पूर्वं प्रायश्चित्तेन सह कर्तव्याः। संकरजातीनां विनामन्त्रं। अन्त्यजानां पञ्चसंस्काराः कर्तव्याः।

## गर्भाधानम्

अयं संस्कारः पुष्पदर्शनात् पश्चात् पुत्रार्थी समासु कन्यार्थी विषमासु रात्रिषु कुर्यात्। अधुना अयं संस्कारः लुप्तप्रायो दृश्यते, लोको बधूमानीय सत्य-नारायणकथादिकं श्रावयित्वा कुर्वन्ति। अत्रैव यदि गर्भाधानमन्त्रानपि पुरोहितः पठेत्, तर्हि अस्य प्रचलनं अतीव सुकरम्। अयं संस्कारो न गर्भसंस्कारः, किन्तु योनिसंस्कारः, अत एकवारमेव कर्तव्यः। प्रतिगर्भं कर्तव्य इत्यपि केचिद् वदन्ति। अस्य योनिसंस्कारकत्वात् प्रतिगर्भं कर्तव्यताया अनुपयुक्तत्वम्।

## पुंसवनम्

अयं संस्कारः पुमपत्यप्राप्त्यर्थं क्रियते। अयं संस्कारो गर्भाधाने जाते तृतीये चतुर्थे वा मासि कर्तव्यम्। अयं हस्तः, मूलम्, श्रवणः, पुनर्वसू, मृगशिराः, पुष्य एषु पुंसंज्ञकेषु नक्षत्रेषु कार्यः। अत्र शुक्रसोमबुधबृहस्पतिवारा विहिताः। भद्रारिक्तावर्जास्तिथयः, रात्रिश्च शोभनः कालः। अयं संस्कारो वृद्धिश्राद्धं विधाय कर्तव्यः। कर्ककन्यामिथुनलग्नानि विहायान्येषु नवषु लग्नेषु कर्तव्यः।

## अनवलोभनं

अयं न संस्कारः, किन्तु गर्भरक्षणाभिधं कर्म। इदं चतुर्थे मासि कर्तव्यम्। इदं कर्म यथा कालमननुष्ठितो न पुनः क्रियते, अस्य संस्कारत्वाभावात्। संस्कारास्तु अयथाकालमपि क्रियते।

## सीमन्तोन्नयनम्

यस्मिन् कर्मणि सीमन्तः केशेषु पृथगाकृतिसन्नियते तत्सीमन्तोनयनम्। अयं संस्कारः चतुर्थे, षष्ठे, अष्टमे वा मासि कर्तव्यः। केचन अयमपि संस्कारः प्रथमे गर्भे एव कर्तव्यः, अन्ये तु गर्भसंस्कारकः, अतः प्रतिगर्भमावर्तनीयः। ग्रन्थ-कारस्य मतेनायं संस्कारो गर्भक्षेत्रयोरुभयोः संस्कारकः, अतः प्रथमगर्भे अवश्यमनुष्ठेयः, अन्यत्र संस्कारेऽकरणे दोषो नास्ति। अत्र हस्तमूलश्रवण पुनर्वसू मृगशिराःपुष्यप्रभृतीनि पुंनक्षत्राणि ग्राह्याणि। सिंहवृश्चिकव्यतिरिक्ता राशयः शुभाः। अयमपि संस्कारो वृद्धिश्राद्धानन्तरं कर्तव्यः।

## सोष्यन्ती कर्म

इदमपि कर्म सुखप्रसवार्थं क्रियते, न संस्कारार्थम् । इदं कर्म दशमे मासि प्रसवात् पूर्वं कर्तव्यम् ।

## विष्णुबलिः

गर्भस्याष्टमो मासो वैष्णवो मासः विष्णुगर्भस्य देवता । अतो विष्णुबलिर्गर्भपुष्टये कर्तव्यः । इदं कर्म प्रतिगर्भं कर्तव्यः । अत्र श्रवणंरोहिणी पुष्यश्च प्रशस्तः । द्वितीया सप्तमी द्वादशी च शुभा तिथिः ।

## गुर्विणीधर्मा

गुर्विणी अवस्करेषु, मुसलोपलेषु, तुषाङ्गारभस्मास्थिकस्मलेषु नोपविशेत् । जलावगाहनम्, शून्यगृहम्, वल्मीकस्पर्शम्, उद्विग्नताम्, नखत्रिलेखनम्, कलहम्, गात्रभङ्गम्, मुक्तकेशताम्, अशुचित्वम्, वस्त्रराहित्यम् आर्द्रचरणताम्, अमङ्गल्यवचनम्, उत्तरशिरोधःशिराशयनं, हास्याधिक्यं च वर्जयेत् । अप्रसन्नवदना, वृक्षच्छायावस्थाना, सनिद्रा न तिष्ठेत् । मङ्गलकर्मरता, देवद्विजपूज्यपूजारता च तिष्ठेत् ।

## जातकर्म

अयं संस्कारः पुत्रे जाते कर्तव्यः । अत्र पिता पुत्रमुखमवलोक्य देवस्थाने कूपोदकेन वा शीतेन जलेन स्नात्वा उत्तराभिमुखो जातकर्म कुर्यात् ? अयं संस्कारो नाभिवर्द्धनात् प्राक् क्रियते । आशौचपाते आशौचापगमे कर्त्तव्यः । अयं संस्कारः शूद्रेणापि कर्त्तव्यः । नान्दीश्राद्धादिकं कृत्वा क्रियते । नाभिवर्द्धनात् पूर्वं जननाशौचं न भवति । मूलादिजनेन मुखमदृष्ट्वैव स्नानम् । प्रथमे पञ्चमे षष्ठे दशमे च दिने दानप्रतिग्रहयोर्न दोषः । अयं संस्कारः कन्यापुत्रयोर्द्वयोरपि भवति । अत्र नान्दीश्राद्धे नान्नप्रयोगः ।

## नामकरणम्

अयं संस्कार एकादशाहे द्वादशाहे वा विधीयते । ब्राह्मणस्य, क्षत्रियाणां त्रयोदशे षोडशे वा दिने । वैश्यानां षोडशे विंशतितमे वा दिने, शूद्राणां द्वाविंशे मासान्ते वा नामकरणं कार्यम् । मुख्यकाले नामकरणे मुहूर्तविचारो नास्ति ।

कालातिक्रमे तु शुभनक्षत्रादिकमावश्यकम्। अपराह्णे रात्रौ वा नामकर्म न कार्यम्। अश्विनीरोहिण्युत्तरामृगपुनर्वसुपुष्यहस्तस्वातीअनुराधाश्रवणधनिष्ठाशतभिषारेवतीनक्षत्राणि वृषसिंहवृश्चिकलग्नानि च प्रशस्तानि। स्त्रीणामपीदं कर्म एवमेव कार्यम्।

## खट्वारोहणम्

इदं दशमे, द्वादशे, षोडशे वा दिने कार्यम्।

## निष्क्रमणम्

गृहाच्छिशोः प्रथमनिर्गमो निष्क्रमणम्। अयं संस्कार आयुःश्रीवर्द्धको भवति। कालातिक्रमे चतुर्थे मासि कर्त्तव्यम्।

## कर्णवेधः

अयं कन्यापुत्रयोः संस्कारः। कार्तिके पौषे चैत्रे फाल्गुने शुक्लपक्षे शुभे दिने कर्तव्यः। चन्द्रगुरुशुक्रवाराः प्रशस्ताः। अयं संस्कारो दशमे द्वादशे षोडशे दिने प्रथमे सप्तमे अष्टमे दशमे वा मासे कर्तव्यः।

## अन्नप्राशनम्

अयं संस्कारः षष्ठे, अष्टमे, दशमे द्वादशे वा मासे कर्तव्यः। अन्नप्राशनं शुभे मुहूर्ते अलङ्कृत्य मातुरुत्सङ्गगतस्य विधीयते। अत्र काञ्चने अन्नपात्रे पायसं पाययेत्।

## चूडाकर्म

अयं संस्कारो जन्मतो गर्भतो वा प्रथमे द्वितीये तृतीये पञ्चमे वर्षे प्रशस्तः। अत्र जन्मतः प्रथमे, गर्भतो द्वितीये इति बोध्यम्। अयं संस्कारो जन्मनक्षत्रं विहाय अश्विनीश्रवणस्वातीचित्रापुष्यपुनर्वसुधनिष्ठारेवतीज्येष्ठामृगहस्तेषु नक्षत्रेषु, प्रतिपद् रिक्तातिथिं विना तिथिषु रविभौमशनिव्यतिरिक्तेषु दिनेषु, अत्रापि ब्राह्मणस्य रवौ, क्षत्रियस्य भौमे, वैश्यशूद्रयोः शनौ विधेयम्। उपनयनेन सह दोषो नास्ति। गर्भिण्यां मातरि पञ्चममासात् परं चूडा न कार्या। संस्काराः स्त्रीणाममन्त्रकाः कार्याः। चौलोत्तरं सपिण्डैर्मासत्रयं पिण्डदानं तिलतर्पणं न कार्यम्। उत्तरायणे सूर्ये चैत्रं विहायान्यमासेषु कार्यः।

## क्षौरम्

इद पापग्रहस्य वारे वर्जनीयम् । शुभकार्येषु दक्षिणभागत आरम्भोऽन्यत्र वामभागतः। विवाहदिने क्षौरं नास्ति। पञ्चमासात् पूर्वं सीमन्तादौ क्षौरं कार्यम् । अत्र सोमबुधगुरुशुक्रवारा विहिताः ।

## अक्षरारम्भः

अयं संस्कारः सर्ववर्णानां पञ्चमे वर्षे कार्यः । उत्तरायणे सूर्ये कुम्भमासं विना शुक्लपक्षे, कृष्णपक्षे त्रयोदशीं चतुर्दशीममां वर्जयेत् । प्रतिपत् पर्वतिथयो रिक्तातिथयश्च वर्जनीयाः ।

## उपनयनम्

अयं माणवकसंस्कारः सर्वकर्मारम्भयोग्यतासम्पादकः । शूद्रस्यायं संस्कारो नास्ति । ब्राह्मणस्य पञ्चमवर्षादारभ्य पञ्चदशवर्षपूर्तेः पूर्वम् क्षत्रियस्य षष्ठवर्षादारभ्य आद्वाविंशात्, वैश्यस्य अष्टमवर्षादारभ्य चतुर्विंशात् प्राग् औपनायनिकः कालः । ततः परं व्रात्यतादोषः । व्रात्यानामुपनयनं नास्तीत्यापस्तम्बः । माघफाल्गुनचैत्रवैशाखज्येष्ठाषाढमासेषु कार्यः । चैत्रे ब्राह्मणस्यैव । मुख्यतो ब्राह्मणस्य वसन्ते, क्षत्रियस्य ग्रीष्मे वैश्यस्य घनान्ते उपनयनं शुभम् । चूडाकर्मतः संस्कारा ज्येष्ठे ज्येष्ठस्य न कर्तव्यः । वैश्यस्य दक्षिणायनेऽपि भवतीति ।

## उपवीतलक्षणम्

उपवीतं ब्राह्मणस्य कार्पासम्, क्षत्रियस्य शाणम्, वैश्यस्याविकम् । इदं निर्मितं दक्षिणेन करेण ऊर्ध्वस्थितेन यद् वलितं तदूर्ध्ववृतम् । उपवीतं धारितं सत् पृष्ठवंशे नाभ्यां च धृतं यत् कटिप्रदेशं स्पृशति तत् । स्तनादूर्ध्वं नाभेरधो नेति देवलः । इदं ब्रह्मचारिणा एकम्, गृहस्थेन द्वे इति धारणनियमः । इदं षण्णवत्यङ्गुलीषु धृतं त्रिवृतम् एकं सूत्रम्, पुनः त्रिवृतं नवसूत्रं भवति, तदेव त्रिवृतं प्रवरब्रह्मग्रन्थियुतमुपवीतं भवति । इदं पुष्पाक्षतैर्नव तन्तुदेवताः सम्पूज्य धार्यम् ।

**दण्ड:**

ब्राह्मणेन विल्वस्य पलाशस्य वा केशान्तिकः, क्षत्रियेण वटस्य खदिरस्य वा ललाटसम्मितम्, वैश्येन पीलुवृक्षस्य, उदुम्बरस्य, अश्वत्थस्य वा नासिकान्तः दण्डो धार्यः। सर्वे ऋजवः, अव्रणा भवेयुः, भयाजनका न भवेयुः।

**अजिनम्**

ब्राह्मणेन कृष्णमृगस्य, क्षत्रियेण रूरोः, वैश्येनाजस्य धार्यम्।

**मौञ्जीमेखला**

ब्राह्मणेन त्रिवृन्मौञ्जीमेखला धार्या, क्षत्रियेण मौर्वीनिर्मिता, वैश्येण शणसूत्रस्य मेखला धार्या।

**नमस्कारविधिः**

ब्रह्मचारी सन्ध्यान्ते अग्निहोत्रान्ते च गुरोरभिवादनं कुर्यात्।

**वेदारम्भः**

अयं वेदारम्भः संस्कारो यज्ञोपवीतानन्तरमाचार्यस्य सविधे गत्वा कर्तव्यः। तत्र प्रतिवेदमुपनयननित्येकः पक्षः। चतुर्णां वेदानाध्ययनमकेनैवोपनयनेन भवतीति द्वितीयः पक्षः।

**समावर्तनम्**

अयं संस्कारो गृहस्थाश्रमप्रवेशार्थिभिः कार्यः, वेदाध्ययनानन्तरं गुरोः सकाशादाज्ञां लब्ध्वा समावर्तनं कुर्यात्। अयं स्नातकः त्रिविधः—विद्यास्नातकः, व्रतस्नातको विद्याव्रतस्नातकश्च। वेदं समाप्य व्रतानि समापवर्तते स विद्यास्नातकः। यस्तु व्रतानि समाप्य वेदे समापवर्तते स व्रतस्नातकः। यश्च वेदं व्रतञ्चं समाप्य समापवर्तते स विद्याव्रतस्नातकः। अयं समावर्तनं कृत्वा गुरवे दक्षिणां दद्यात्। समावर्तनानन्तरं स्नातक आश्रमहीनो भवति, अतः समावर्तनात् परमाश्रमप्रवेशमवश्यं करणीयः, अनाश्रमावस्थानस्य निषेधात्। एकवर्षं यावत् समावर्तितस्तिष्ठेद् वा। यो गृहाश्रमप्रवेशं न वांछति स

गुरोः सद्मनि तदभावे तत्पुत्रस्य वा अधीनतां स्वीकृत्य यावज्जीवं ब्रह्मचर्यं पालयेत् ।

## विवाहः

अयं संस्कारः समावर्तनानन्तरं कर्तव्यः। ब्रह्मचारी लक्षणयुक्तां मनोरमामसगोत्रामसपिण्डाम्, अल्पवयस्कां, कन्यामुद्वहेत् । कन्या च अव्यङ्गी, सौम्यनाम्नी, अरोगिणी, भ्रातृमती, हंसगामिनी, ह्रस्वलोमकेशदशना मृद्वङ्गी भवेत् । कपिलां रोगिणीम् अलोमिकाम् अधिकभाषिणीं पिंगलां वृक्षनदीगिरिनाम्नीं प्रेष्यनाम्नीं भीषणनामिकाञ्च वर्जयेत् । श्मश्रुवतीं पुरुषाकृतिं घरघरस्वरां काकस्वरां क्षामां नोद्वहेत् । विडालाक्षीं वृत्ताक्षीं च नोद्वहेत् । रोमयुक्तजङ्घावतीम्, उन्नतगुल्फाम्, गण्डयोः कूपकवतीम्, वामनाम्, संगतभ्रुवाम्, अतिदीर्घाम् अलकदन्तां करालमुखीं च नोद्वहेत् । एवं लक्षणयुक्तां कन्यामुद्वहेत् । सापिण्ड्यसगोत्रत्व-असगामप्रवरत्वानि आकरग्रन्थतो द्रष्टव्यानि । दाक्षिणात्येषु मातुलसुतापरिणयनं प्रचलति, तन्न उत्तरभारतीयैर्ग्राह्यम् वरस्य सपिण्डत्वात् । यद्यपि मातृगोत्रापि निषिद्धा वर्तते, तथापि केचन ब्राह्मविवाहविधिना विवाहिताया मातुः पतिगोत्रेणैव मातृगोत्रता इति न मातृगोत्रत्वनिषेध इति वदन्ति । दाक्षिणात्येषु आचाराद् मातुलसुतापरिणयने दोषं न गणयन्ति । अयं संस्कारः मकरस्थे सिंहस्थे विशेषतो मघास्थे सूर्ये न कर्तव्यः । मकरस्थः सूर्यो नर्मदापूर्वभागे शोणस्योत्तरदक्षिणभागे गण्डक्याः पश्चिमे भागे न दोषभाक् ।

## मासशुद्धिः

माघे फाल्गुने वैशाखे ज्येष्ठे आषाढे मार्गशीर्षे च विवाहः कार्यः । मार्गशीर्षज्येष्ठयोस्तु ज्येष्ठपुत्रस्य पुत्रिकायाश्च विवाहो न कर्तव्यः। उत्तरभारते पश्चिमभागेषु कर्कसिंहकन्यातुलासु च विवाहः प्रचलति । ते केवलं पौषं मीनं धनुं वर्जयन्ति ।

## तिथयः

द्वितीया प्रीतिवर्धनी, तृतीया सौभाग्यदा, पञ्चमी सुखदा, सप्तमी विद्याशीलसुखदा, दशमी आनन्ददा, एकादशी सुखदा, द्वादशी सफला, त्रयोदशी मानपुत्रदा, पञ्चदशी बलदा, अन्ये तिथयोऽशोभनाः ।

**प्रतिकूलनिर्णयः**

विवाहादिनिश्चये जाते यदि वधूवरयोः त्रिपुरुषे कुले, कश्चिद् मृयेत चेत्, तदा विवाहो न कार्यः। अशौचापगमे वर्षानन्तरं विवाहः कर्तव्यः। यदि माता विवाहकाले रजस्वला जायेत तदापि वर्षानन्तरं विवाहः कार्यः।

**विवाहभेदाः**

विवाहोऽष्टविधः। तत्र प्रथमो ब्राह्मः, यत्र पिता भ्राता वा कन्यादानाधिकारी वरमाहूय कन्यादानं करोति स ब्राह्मः।

द्वितीयो दैवः—यज्ञे प्रारम्भे ऋत्विजे अलंकृत्य कन्यां दीयेत चेत् स दैवः।

तृतीय आर्षः—यत्र वराद् गोमिथुनं गां वृषभं वा आदाय कन्यादानं क्रियते स आर्षः।

चतुर्थः प्राजापत्यः—सह धर्मं चरत इति परिभाष्य यत्र कन्या दीयते स प्राजापत्यः।

पञ्चम आसुरः—द्रव्यं गृहीत्वा यत्र कन्या दीयते स आसुरः।

षष्ठो गान्धर्वः—कन्यावरयोरन्योन्यानुरागेण यः समयबन्धः स गान्धर्वः।

सप्तमो राक्षसः—यत्र बन्धून् हत्वा ततश्छित्वा भित्वा वा क्रोशन्त्याः रुदत्याः कन्याया हरणं कृत्वा विवाहः क्रियते स राक्षसः।

अष्टमः पैशाचः—छलात् कन्यकामानीय यो विवाहो भवति स च पैशाचः।

आद्येषु चतुर्षु विवाहेषु प्रथमो ब्राह्म एकविंशति पुरुषान् पुनाति। दैवश्चतुर्दश पुरुषान्, आर्षः षट् पुरुषान् पुनाति, प्राजापत्यस्त्रयोदश पुरुषान् पुनाति। एषु विवाहेषु कन्याया यौतुकं धनं तस्या मृतौ पतिर्गृह्णाति। अन्यविवाहेषु अपुत्रायाः कन्याया मरणे तद्धनस्य पिता माता तदभावे भ्रातरोऽधिकारिणो भवन्ति, पतिरधिकारी न भवति। आसुरगान्धर्वराक्षसपैशाचविबाहेषु सर्वे विवाहा अनुचिताः। तत्र पैशाचः सर्वतोऽप्यधिको निन्द्यतामर्हति। अयं च विवाहः कन्याया एकवारमेव भवति। विधवायास्त्यक्ताया वा अन्यपुरुष-

सम्बन्धे विवाहो न भवति। बाराहपुराणोक्तदिशा सम्बन्ध इति कथयन्ति। अत एव लोके शूद्रादिष्वपि पत्यन्तरकरणे न विवाहः, किन्तु सम्बन्धमात्रम्। पुरुषस्य तु कन्यया सहानेके विवाहाः शास्त्रदृष्ट्या अनुमताः। तत्र तृतीयविवाहप्राप्तौ वरेण सह अर्कविवाहः कर्तव्यः। तदनन्तरं कन्यया सह विवाहः कर्तव्यः।

**वानप्रस्थाश्रमः**

एवं विवाहं कृत्वा गृहस्थाश्रमं यथाकालमुषित्वा जराजर्जरकलेवरः सभार्योऽभार्यो वा वानप्रस्थाश्रमे विशेत्। यद्यभार्यो वनं वसेत्, तदा पत्न्याः रक्षार्थं पुत्रान् नियुञ्जीत। अयं महात्मा ग्रामाद् भिक्षामाहृत्याष्टौ ग्रासान् अश्नीयात्। कष्टेन तपसा च कालं नयेत्।

**संन्यासः**

वने शोषितशरीरो विषयकषायपरिपाकवान् मोक्षे मनः कुर्यात्। तत्र पक्षद्वयम्– आश्रमादाश्रमान्तरं गच्छेदिति एकः पक्षः। ब्रह्मचारी गृही वा परिव्रजेति द्वितीयः पक्षः।

संन्यासो ब्राह्मणस्यैवेत्येके, सर्वेषां द्विजानामित्यपरे। तत्र ग्रन्थकारस्त्रिवर्णस्य संन्यासेऽधिकार इति मनुते।

**जाति :**

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चत्वारो वर्णाः। ब्रह्मणा उत्पन्नः जन्मना जातिव्यवस्थां लभन्ते। यस्मिन् वर्णे येषां जन्म स वर्णः एव तस्य जातिः। इयं जातिः पित्रोः समानवर्णोत्पन्नयोरेव। असमानवर्णोत्पन्नस्य तु अन्या जातिर्भवति। स्मृत्यादिषु भिन्नैव जातिर्वर्णिता। जन्म च रजसा वीर्येण संकल्पेन शापेन वरेण च भवति। यथा पित्रोः शुक्रशोणितेन पुत्रस्य जन्म जायते, तथैव ब्रह्मणः संकल्पेनोग्रतपसां महात्मनां वरेण शापेन भयेन च जन्म जायते। अत एव जायते यस्यां सा जातिरिति जातिशब्दस्य व्युत्पत्तिः शुक्रशोणितेन मैथुनी सृष्टिः, यथा लोके दृश्यते। ब्रह्मणः संकल्पेन पुराणादिषु प्रसिद्धा सृष्टिः। वसिष्ठस्य वरेण विश्वामित्रस्य ब्राह्मणत्वम्, शापेन त्रिशङ्कोर्विश्वामित्रतनयानां चण्डालत्वम्। भयेन 'विलनी' इति लोकप्रसिद्धायाः

मक्षिकाया रूपान्तरेण जन्म । एवं पूर्वदेहपरमाणुविघटनपूर्वकमुत्तरदेहपरमाणुसङ्घटनं येषां सङ्कल्पेन वरेण शापादिना जायते सापि जातिः । अत एव महर्षेः ऋचीकस्य वरेण क्षत्रियापुत्रस्य जमदग्नेर्ब्राह्मणस्वभावत्वं परशुरामस्य चोग्रक्षत्रियस्वभावत्वम् । इत्थं जातिर्जन्मनैव, न कर्मणेति प्रतिपादितं भवति ।

इत्थं ग्रन्थेऽस्मिन् संस्काराणां विधिसहितं वर्णनं विद्यते । अन्ते राजधर्मा वैश्यधर्माः शूद्रधर्माश्च वर्णिताः । अयं ग्रन्थः संस्कारग्रन्थेषु प्रामाणिकः । अत्र अन्त्यकर्मसंस्कारस्य वर्णनं नास्ति, अमाङ्गलिकत्वात् । सम्पादनकर्मणि नियुक्तेन मया सावधानेन प्रवर्तितम्, तथापि कदाचित् त्रुटयः सम्भाविताः सन्ति । ताः विद्वद्भिः परिमार्जनीयाः ।

अन्ते भवानीविश्वनाथयोः करकमलयोः समर्प्य विरमामि ।

वाराणस्यां
मकरसंक्रान्तिः
२०४२
१४-१-१९८६ खै०

रामगोविन्दशुक्लः
अनुसन्धानाधिकारी
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी ।

## विषय-सूची


| विषयः | पृष्ठ |
|---|---|
| मङ्गलाचरणम् | १-२ |
| धर्मस्वरूपविचारः | ३ |
| पुरुषार्थकथनम् | ४ |
| पुरुषभेदनिरूपणम् | ४ |
| पुरुषार्थेषु धर्मप्राधान्यकथनम् | ५ |
| ग्रन्थरचनाप्रयोजनकथनम् | ५-६ |
| धर्माधर्मलक्षणकथनम् | ७-१० |
| धर्मलक्षणम् | ११-१२ |
| धर्मे वेदप्रामाण्यविचारः | १३ |
| वेदद्वैविध्यसाधनम् | १४ |
| धर्मे वेदप्रामाण्यसाधनम् | १५ |
| धर्मे स्मृतिप्रामाण्यविचारः | १६ |
| धर्मे स्मृतिप्रामाण्यसाधनम् | १७ |
| धर्मे आचारप्रामाण्यविचारः | १७ |
| आचारस्य प्रामाण्यसाधनम् | १८-२० |
| वेदस्य धर्ममूलत्वसाधनम् | २१-२३ |
| अधिकारिनिरूपणम् | २४ |
| समर्थानामेवाधिकारसाधनम् | २५ |
| स्त्रीणामप्यधिकारित्वसाधनम् | २५ |
| धर्मे पुराणेतिहासप्रामाण्यविचारः | २६ |

| विषयः | पृष्ठ |
|---|---|
| धर्मे पुराणेतिहासयोः प्रामाण्यसाधनम् | २७ |
| श्रुत्यादीनां धर्मे बलाबलविचारः | २८ |
| साधारणासाधारणधर्मभेदकथनम् | २९ |
| धर्मस्वरूपकथनम् | ३०-३५ |
| धर्मोत्पत्तिप्रकारकथनम् | ३६-४२ |
| फलतो धर्मनिरूपणम् | ४२-४४ |
| पुराणलक्षणम् भेदाश्च | ४५ |
| नैमित्तिकधर्मनिरूपणम् | ४६ |
| परिभाषाकथनम् | ४७ |
| पुण्याहवाचनम् | ४८-५० |
| मधुपर्काधिकारिणः प्रकारश्च | ५१-५३ |
| नान्दीमुखश्राद्धकथनम् | ५४ |
| वर्णधर्मसंस्कारप्रयोजनम् | ५६ |
| ब्राह्मदैवभेदेन संस्कारद्वैविध्यकथनम् | ५७ |
| ब्राह्मसंस्कारभेदाः | ५७ |
| दैवसंस्कारभेदाः | ५७-६० |
| १. गर्भाधानम् | ६१-६६ |
| अस्य कालः | ६१ |
| अत्र निषिद्धः कालः | ६२ |
| अस्य प्रकारः | ६५ |
| याज्ञवल्क्यमतेनास्य प्रकारः | ६६ |
| २. पुंसवनम् | ६७ |
| अस्य कालः | ६७ |

| विषयः | पृष्ठ |
|---|---|
| अत्र नक्षत्रशुद्धिः | ६७ |
| अत्र वारशुद्धिः | ६८ |
| अत्र तिथिशुद्धिः | ६८ |
| अत्र लग्नशुद्धिः | ६८ |
| आश्वलायनमतेनास्य प्रकारः | ६८ |
| वाजसनेयिमतेनास्य प्रकारः | ६९ |
| **३. अनवलोभनम्** | ७०-७१ |
| अस्य कालः | ७० |
| अस्य प्रकारः | ७१ |
| **४. सीमन्तोन्नयनम्** | ७२-७९ |
| अस्य कालः | ७२ |
| प्रथमगर्भे कर्तव्यता साधनम् | ७३ |
| अत्र नक्षत्रशुद्धिः | ७३ |
| अत्र राशिशुद्धिः | ७४ |
| अस्य प्रकारः | ७४-७५ |
| सोष्यन्ती कर्म | ७५ |
| विष्णुबलिः | ७६ |
| अस्य कालः | ७६ |
| अत्र प्रयोजनम् | ७६ |
| पूजाप्रकारः | ७७ |
| प्रयोगः | ७८ |
| गुर्विणीधर्माः | ८० |
| गुर्विण्याः पत्युः कर्तव्यम् | ८० |

| विषयः | पृष्ठ |
|---|---|
| सूतिकागृहम् | ८१ |
| अस्य नैऋत्ये कथनम् | ८१ |
| नक्षत्राणि वाराश्च | ८१ |
| राशयः | ८१ |
| अस्य संस्कारः | ८१ |
| **५. जातकर्म** | **८३** |
| अस्य कालः | ८३ |
| अत्र श्राद्धम् | ८४ |
| कालातिक्रमे विधिः | ८५ |
| संस्कारप्रकारः | ८६ |
| जन्मकालिकनक्षत्रादिदोषे कर्तव्यम् | ८६ |
| अरिष्टभङ्गविचारः | ९१ |
| जन्मतः दशदिनकर्तव्यम् | ९२ |
| **६. नामकरणम्** | **९४** |
| अस्य कालः | ९४ |
| नामाक्षरविचारः | ९४-९५ |
| वर्णभेदेन पदनियमः | ९४ |
| प्रकारः | ९५-९७ |
| खट्वारोहणम् | ९७ |
| क्षीरपानम् | ९७ |
| **७. निष्क्रमणम्** | **९९** |
| अस्य कालः | ९९ |

| विषयः | पृष्ठ |
|---|---|
| आदित्यदर्शनकालः | ९९ |
| अत्र श्राद्धाभावः | १०० |
| उपनिष्क्रमणकालः | १०० |
| प्रकारः | १०० |
| याज्ञवल्क्यमतेन प्रकारः | १०१ |
| ८. कर्णवेधः | १०२ |
| अस्य कालः | १०२ |
| शिशुभीतिरक्षणकर्म | १०३ |
| अस्य विधिः | १०३ |
| ९. अन्नप्राशनम् | १०४ |
| अस्य कालः | १०४ |
| अत्र नक्षत्राणि | १०४ |
| अत्र वाराः | १०५ |
| अस्य प्रकारः | १०७ |
| अब्दपूर्तिविधिः | १०९ |
| अस्य कालः | १०९ |
| अस्य प्रकार | १०९-११० |
| १०. चूडाकर्म | १११ |
| अस्य कालः | १११ |
| चूडानियमः | १११ |
| अस्य तिथयः | ११२ |
| अत्र वाराः | ११३ |

| विषयः | पृष्ठ |
| --- | --- |
| अत्र राशयः | ११३ |
| अस्य निषिद्धः कालः | ११४ |
| प्रकारः | ११५ |
| स्त्रीसंस्कारः | ११६ |
| अत्र मन्त्रप्रयोगनिषेधः | ११६ |
| स्त्रीणामुपनयनविधिविचारः | ११७ |
| अनुपनीतधर्माः | ११७ |
| अस्य स्वधानियमे मन्त्रोच्चारणाधिकारः | ११८ |
| अक्षरारम्भः | ११६ |
| अस्य कालः | ११९ |
| अस्य विधिः | १२० |
| कालातिक्रमे प्रायश्चित्तविधिः | १२१ |
| ११. उपनयनम् | १२२ |
| अस्य मुख्यः कालः | १२२ |
| पञ्चमाब्दस्य वैशिष्टयम् | १२३ |
| अस्य गौणः कालः | १२३ |
| सावित्रीपतनकालः | १२३ |
| स्त्रीणां विवाह स्योपनयनकथनम् | १२४ |
| अत्र तिथयः | १२४ |
| अत्र वाराः | १२४ |
| अत्र नक्षत्राणि | १२४ |
| अत्र राशयः | १२५ |
| अत्र मासाः | १२५ |
| अत्र ऋतवः | १२५ |

| विषयः | पृष्ठ |
| --- | --- |
| अत्र अयनम् | १२६ |
| अत्र निषिद्धसमयः | १२६ |
| संस्कार्यविचारः | १२७ |
| वर्णक्रमेण बस्त्र-वर्ण-चर्मकथनम् | १२८ |
| उपवीतलक्षणम् | १२८ |
| वर्णक्रमेण सूत्रम् | १२८ |
| अस्य रचनाप्रकारः | १२८ |
| उपवीतप्रमाणम् | १२८ |
| तन्तुदेवता कथनम् | १२९ |
| उपवीतधारणप्रकारः | १२९ |
| उपवीतसंख्या | १२९ |
| अस्य नित्यधार्यताकथनम् | १३० |
| दण्डः | १३० |
| अजिनम् | १३० |
| मेखला | १३० |
| वर्णक्रमेण सावित्रीमन्त्रभेदकथनम् | १३१ |
| ब्राह्मणाय गायत्री | १३१ |
| क्षत्रियाय त्रिष्टुभा | १३१ |
| वैश्याय जगती | १३१ |
| समिदाधानम् | १३१ |
| काष्ठस्वरूपकथनम् | १३१ |
| अभिवादनप्रकारः | १३१ |
| गुरुलक्षणम् | १३२ |
| अभिवादने नामोच्चारणविधिः | १३३ |

| विषयः | पृष्ठ |
| --- | --- |
| आशीर्वादप्रकारः | १३३ |
| गुरुप्रणामप्रकारः, उपसंग्रहणम् | १३३ |
| विदुषां प्रणामप्रकारः, अजाकर्णः | १३३ |
| मूर्खाणां प्रणामप्रकारः, एकहस्तः | १३३ |
| नमस्कार्यंतानिरूपणम् | १३४ |
| प्रकारः आश्वलायनानाम् | १३४ |
| प्रकारः याज्ञवल्कीयानाम् | १३६ |
| नमस्कारविधिः | १३८ |
| भोजनविधिः | १३८ |
| अत्र दिङ्नियमः | १३८ |
| ब्रह्मचारिधर्माः | १३९ |
| १२. वेदाध्ययनम् | १४१ |
| वेदार्थज्ञानमहिमा | १४२ |
| अध्ययने दिङ्नियमः | १४३ |
| विद्याफलम् | १४४ |
| उपाकर्मकालः | १४५ |
| ब्रह्मचारिद्वैविध्यम् | १४५ |
| अग्निसेवाप्रकारः | १४६ |
| १३. समावर्तनम् | १४७ |
| गुरुदक्षिणा | १४८ |
| अस्य कालः | १४८ |
| स्नातव्रतम् | १४९ |
| स्नातकनियमाः | १५० |

| विषयः | पृष्ठ |
| --- | --- |
| तत्र गृहस्थस्य नियमाः | १५० |
| अकुलकरणानि | १५२ |
| १४. विवाहः | १५३ |
| दारक्रियाविधिः | १५३ |
| कन्यालक्षणानि | १५५ |
| पुनर्भूवरणनिषेधः | १५८ |
| असपिण्डलक्षणम् | १५६ |
| सापिण्ड्यविचारः | १५९ |
| पितृमातृबान्धवाः | १६२ |
| मातुलसुतापरिणयविचारः | १६२ |
| तत्र निषेधवचनानि | १६३ |
| दाक्षिणात्येषु विधिवचनानि | १६४ |
| औत्तराहेषु निषेधप्राबल्यम् | १६५ |
| पुत्रिकाकरणम् | १६६ |
| सगोत्रविवाहनिषेधः | १६६ |
| गोत्रविचारः | १६७ |
| प्रवरविचारः | १६८ |
| समानप्रवरे विवाहनिषेधः | १६८ |
| भृगुगणः | १६९ |
| आङ्गिरसगणः | १७० |
| अत्रिगणः | १७२ |
| विश्वामित्रगणः | १७२ |
| काश्यपगणः | १७२ |

| विषयः | पृष्ठ |
|---|---|
| गोत्रप्रवरनिर्णयः | १७६ |
| विवाहे कालशुद्धिः | १८४ |
| अत्र मासशुद्धिः | १८४ |
| अत्र तिथिशुद्धिः | १८५ |
| अत्र नक्षत्रशुद्धिः | १८६ |
| अत्र योगकरणशुद्धिः | १८७ |
| अत्र राशिशुद्धिः | १८७ |
| अत्र जन्ममासनिषेधः | १८९ |
| सोदरयोः समानक्रियानिषेधः | १८९ |
| पुत्रविवाहात् परं पुत्रीविवाहनिषेधः | १८९ |
| प्रातिकूल्यनिर्णयः | १९२ |
| कन्यादाने वयः कथनम् | १९८ |
| स्वयम्बरकालः | १९९ |
| दत्तायाः हरणविधिः | २०१ |
| विवाहभेदाः | २०३ |
| तत्र ब्राह्मविवाहविधिः | २०३ |
| तत्र दैवविवाहविधिः | २०४ |
| तत्र आर्षविवाहविधिः | २०४ |
| तत्र प्राजापत्यविवाहविधिः | २०४ |
| तत्रासुरविवाहविधिः | २०४ |
| तत्र गान्धर्वविवाहविधिः | २०५ |
| तत्र राक्षसविवाहविधिः | २०५ |
| तत्र पैशाचविवाहविधिः | २०५ |
| विवाहप्रयोगः | २०६ |

| विषयः | पृष्ठ |
| --- | --- |
| मतान्तरेण विधिः | २०८ |
| सप्तपदीप्रयोगः | २१२ |
| उपासनहोमक्रमः | २१३ |
| अर्कविवाहविधिः | २१३ |
| द्वितीयविवाहनिमित्तम् | २१४ |
| अग्निद्वयसंयोगविधिः | २१५ |
| **वधूप्रवेशः** | २१७ |
| सवेशनकालः | २१८ |
| **द्विरागमनम्** | २१८ |
| **अधिवेदनम्** | २१९ |
| स्त्रीधर्माः | २२० |
| स्त्रीरक्षोपायः | २२१ |
| स्त्रीकर्तव्यधर्माः | २२२ |
| पतिव्रताधर्माः | २२३ |
| १५. **वानप्रस्थाश्रमः** | २२९ |
| १६. **चतुर्थाश्रमः** | २३२ |
| पतिधर्माः | २३३ |
| साधारणधर्माः | २३७ |
| राजधर्माः | २४२ |
| वैश्यधर्माः | २५२ |

| विषयः | पृष्ठ |
|---|---|
| शूद्रधर्माः | २५३ |
| जातिविवेकः | २६० |
| उपसंहारः | २६८ |



* श्रीमल्लक्ष्मीनृसिंहाय नमः *

श्रीदलपतिराजविरचितः

# नृसिंहप्रसादः

## ( संस्कारसारः )

लक्ष्मीसेवितपादपद्मयुगलं विश्वेषु सारायितम् ।
लीलाविग्रहधारिणं सुविदुषामानन्दकन्दाङ्कुरम् ।।
कारुण्यामृतनिर्झरं श्रुतिमनोवाचामगम्यं परम् ।
भक्ताभीष्टफलप्रदाननिरतं श्रीमन्नृसिंहं भजे ।। १ ।।

ललल्लक्ष्मीलोलस्खलितनयनप्रान्तकलित-
स्फुरत्सौवर्णाद्युतिपटलसौभाग्यजलधेः[1] ।।
नृसिंह प्रत्यक्षीभव करुणया देहि शरणम् ।
निरालम्बं चेतो भ्रमति भुवने कातरतया ।। २ ।।

[2]उग्रं सिंहवदुत्तमाङ्गमुररीकुर्वन्नपि स्थेयसः ।
कारुण्यादभयप्रदाननिपुणैरालोकनानां क्रमैः ।।
आह्लादं निजपाद-पङ्कजजुषां यत्कल्पयत्यन्वहम् ।
प्रह्लादप्रणयी स नो वितनुतां भद्रं परः पूरुषः ।। ३ ।।

न सेवे राजानं त्रिदशमथवा वाञ्छितफलम् ।
तरुं वा देवानां न च किमपि मन्त्रादिकमपि ।।
परित्रातुं भक्ताननिशमनुधावन्तमसितो ।
नमामः सिंहास्यं ललितकमलालिङ्गिततनुम् ।। ४ ।।

सन्तप्तकार्तस्वरकान्तिकान्तमुदारहारोच्छलिताङ्गमीशम् ।
भक्तानुकम्पाकुलचित्तवृत्ति लक्ष्मीनृसिंहं हृदि भावयामि ।। ५ ।।

---

१. धे ।
२. व्यग्रमिति पाठान्तरम् ।

अनन्तदेवेशकिरीटकोटिरत्नत्विषा रञ्जितपादपद्मम्[१] ।
कारुण्यनेत्रं कमलाकलत्रं लक्ष्मीनृसिंहं हृदि भावयामि ॥ ६ ॥

लक्ष्मीलतासमवलम्बितबाहुशाखम् उत्फुल्लितं सुरगणे करुणावलोकैः ।
भक्तव्रजेषु फलितं च मनीषितार्थैः श्रीमन्नृसिंहसुरपादपमाश्रयामि ॥७॥

इन्द्रादिदेवगणपूजितपादपद्मा पद्मास्थिराभवदसौ स्वजनेषु नित्यम् ।
आलम्ब्य वा सुवदनावदनाभिरामा रामायमादिपुरुषं तमिहावलम्बे ॥ ८ ॥

श्रीमद्देवगिरौ पुरन्दरपुरस्पर्धाधिबद्धादरे
रामे राजनि सामवित् किल बभौ राजा स दिल्लीश्वरः ।
दिल्लीशादुपरि क्षितौ समभवन्नैजामसाहो महान्
यद्दोर्दण्डनिजप्रतापमहिमा राज्यं वशे चानयत् ॥ ९ ॥

श्रीमद्राजशिरोमणिं क्षितितलक्षेत्रेभपञ्चाननं
यं चानन्तगुणं गृणन्ति सुनये प्रौढप्रतापं भुवि ।
सौन्दर्यैकनिधिं विवेकजलधिं दातृत्वभूमिं परां
श्रीनैबक्षितिपालसूनुमिह तं नैजामसाहं नुमः ॥ १० ॥

भूमण्डलाखण्डल एकराजः श्रीमण्डलीकावनिपालपालः ।
निजामसाहः स्वभुजाजितारिश्रीराज्यभारो जयति प्रवीरः ॥ ११ ॥

इलामसौ भासयतु प्रतापैः निजामसाहो गगनं दिनेशः ।
इतीव सीम्नो नियमाय दत्तं आधत्त चैकं विधिनातपत्रम् ॥ १२ ॥

भास्वत्यार्णवचन्द्रमण्डलकरोल्लासप्रसङ्गोल्लसत्
क्षीराम्भोनिधिमूर्च्छदच्छलहरी सौन्दर्यसर्वंकशा
कीर्त्तिः कल्पकवीन्द्रकेशरिकुलक्रीडाकुलाद्रिस्थली
जागर्ति प्रतिभूपसिन्धुरहरं नैजामसाहस्य वै ॥ १३ ॥

प्रौढ़ा श्री द्विजराजतुङ्गतिलकालङ्कारहीरः प्रभुः
भारद्वाजकुलानुगः प्रथमया यत् शाखयालङ्कृतः ।
श्रीमन्नैबजने समस्तकरणाधीशः सतामग्रणीः
श्रीमद्वल्लभभूश्चिरं विजयते श्रीमान् दलाधीश्वरः ॥ १४ ॥

निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादं तु तनुते धर्मसंविदे ॥ १५ ॥

---

१. पीठम् इति पाठान्तरम् ।

प्रयोगपारिजातादिनिबन्धाः सन्ति यद्यपि ।
शास्त्रज्ञः तत्र चात्राऽपि मृग्येत् प्रत्यक्षमन्तरम् ॥ १६ ॥

श्रीनृसिंहप्रसादेऽस्मिन् निबन्धे............ ।
........................द्वादशादित्यसन्निभाः ॥ १७ ॥

संस्कारसारः प्रथमो द्वितीयस्त्वाह्निकाभिधः ।
श्राद्धसारस्तृतीयस्तु चतुर्थः कालनिर्णयः ॥ १८ ॥

पञ्चमो व्यवहाराख्यः प्रायश्चित्ताभिधस्तथा ।
षष्ठः कर्मविपाकाख्यः सप्तमस्त्वघनाशकः ॥ १९ ॥

अष्टमो व्रतसाराख्यः पुराणोक्तानिधायकः ।
नवमो दानसाराख्यः सर्ववर्णाधिकारकः ॥ २० ॥

दशमः शान्तिसंज्ञो वै तैर्थ एकादश स्मृतः ।
देवप्रतिष्ठासारश्च द्वादशः परिकीर्त्तितः ॥ २१ ॥

धर्मार्थकाममोक्षाणां पुरुषार्थत्वपुष्टये ।
श्रुतिस्मृत्युदितः पूर्वं धर्म एव निरूप्यते ॥ २२ ॥

श्रूयते हि धर्मादिसाधनतया धर्माधर्मौ ज्ञातव्यौ इति । तथैतरेपीति । तथैवासूत्रयत् जैमिनिः—'अथातो धर्मजिज्ञासेति' ।

इदं मतमध्ययनविधेरदृष्टार्थत्वेन स्वर्गार्थज्ञानार्थतया तस्य शब्दभावनारूपत्वात् । तस्याश्च पुंप्रवृत्तिपुरुषकर्मकतया दृष्टाऽदृष्टार्थतया संदेहायोगात् । कथञ्चित् दृष्टार्थत्वेऽपि वा स्वर्गार्थयज्ञार्थज्ञानार्थतयापि तन्निर्वाहात् । उक्तहोतोरर्थभावनाफलत्वनिश्चयात् । अध्ययनविध्यवरुद्धभावनायाः मीमांसारम्भोपयोगिदृष्टैकार्थविषयत्वं आक्षिपन् धर्मस्य प्रमेयत्वं प्रत्यक्षमुपक्षिपति । स्वाध्यायाध्ययनार्थज्ञानैस्समस्तैर्व्यस्तैर्वा दृष्टार्थत्वे प्राप्तावपि श्रुतिलिङ्गवाक्यप्रकरणेति न्यायेनाध्ययनस्यैव समानपदोपादानश्रुत्या भाव्यत्वोपपत्तेः । स्वाध्यायस्य च सिद्धतया योग्यतालक्षणफललिङ्गेन भाव्यसाधकतमत्वलक्षणकरणत्वोपपत्तेरनियमानुपपत्तेरध्ययननियमोऽपि समानपदोपादानश्रुत्या वाक्यबलीयस्या वाक्यबोधेऽपि समानप्रत्ययोपादानश्रुत्या तस्या अपि बलीयस्तया बाधात् । तथा च फलवत्कर्मानुष्ठानोपयिकवाक्यार्थज्ञानस्यैव वाक्यत्वावगमात् । पदश्रुत्या च भावार्थाधिकरणन्यायेन धात्वर्थस्यैव करणत्वावसायात् अध्ययनेनैवार्थज्ञानं फलवत्कर्मानुष्ठानोपयोगि इति अध्ययनमेव नियम्यते । अदृष्टाऽर्थत्वेऽर्थज्ञानार्थतया

विचारात्मकं शास्त्रमनारम्भणीयं स्यात्। अत्र हि विधिविहिततव्यप्रत्ययात्, अप्रवृत्तप्रवर्त्तनाप्रवर्त्यत्वात्, आक्षिप्तस्वप्रधानसाध्यसमान्या, अनाक्षिप्तस्वप्रधानसाध्यसामान्या, अनाक्षिप्तस्वजनकसाधनसामान्या, अनाक्षिप्तस्वसामर्थ्यापि आक्षिप्तस्वसामर्थ्या, आक्षिप्तविध्यपेक्षितसाध्यसामान्यानाक्षिप्तस्वजनकसाध्यसामान्याप्यनाक्षिप्तस्वाक्षेपकसाध्यसामान्या, स्वप्रधानसाध्यसामान्यानधिरूढापि स्वाप्रधानसाध्यसामान्याधिरूढा, आक्षिप्तस्वप्रधानसाधनसामान्यापि अनाक्षिप्तस्वाक्षेपकसाधनसामान्या, स्वप्रधानसाधनसामान्यानधिरूढापि स्वाप्रधानसाधनसामान्याधिरूढा, कालत्रयविहितलिङभिहितापि कालत्रयानुपहिता, अन्योत्पत्त्यनुकूलतया ज्ञानेच्छारूपप्रेरणाजन्यापि स्वाधिकरणेतरकर्मकारकतया ज्ञानेच्छान्याक्रियारूपतया विधिं धात्वर्थानन्यापि कार्यभाष्यनिष्ठत्वान्या, सामान्यतः पुरुषेच्छा संस्पृष्टतयाऽशुद्धापि विशेषरूपतया पुरुषेच्छासंस्पृष्टतया शुद्धा, स्वरूपेण प्रत्ययेन च शुद्धा पदश्रुत्यापन्नधात्वर्थसाध्यत्वापि प्रत्ययश्रुत्यापन्नधात्वर्थसाधनत्वायोग्यत्वापन्नवेदसाध्यत्वापि विधियोग्यत्वापन्नधात्वर्थसाधनत्वानुपग्रहानवगतफलग्रहापि आक्षिप्तविध्यपेक्षितकर्त्रपेक्षितपुरुषविशेषणफला, पुरुषफलतात्पर्यप्रतिपादककालनिमित्तप्रतिपादितफला, स्वयं फलाजनकापि स्वस्वभावा फलजनका, असाधनतया यस्य कस्याप्यजन (कतया) स्वभावेन पितृपुत्रजननीव आख्यातवाच्या भावना प्रतीयते।

ननु धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः सन्ति, कथमतो धर्मस्यैव जिज्ञास्यतया प्रथमं निरूपणम्, सत्यम्; इह हि यद्यपि चत्वारः पुरुषार्थफलत्वेनाभिमताश्चत्वारः पुरुषार्था इति प्रतियन्ति। तथापि प्रथमनिर्दिष्टतया इतरपुरुषार्थवशीकारसमर्थतया च धर्म एव प्रधानम्।

ननु द्वैधं हि पुरुषाः, पण्डिताः अपण्डिताश्च। तत्र प्रथमेऽर्थकामावपेक्षन्ते, पण्डितास्तु मोक्षमतः कथं स एव प्रधानं, मैवं, ज्ञानाज्ञानाभ्यां पुरुषभेदात्। अल्पज्ञानानाञ्च अर्थकामापेक्षतया तथात्वात्। पूर्णज्ञानानां च मोक्षापेक्षितत्वादर्थकाममोक्षाणामेव प्रथमं निर्देश्यत्वेपि तापसपर्वतादिवत्तस्यैव प्रथमनिर्देश्यत्वं प्राधान्यं च युज्यते। धर्मस्य काममोक्षानामपेक्षत्वेऽपि अर्थपेक्षत्वस्य स्वसंवेद्यत्वादितरपुरुषार्थत्रयवशीकारासामर्थ्ये आपाततः प्रतिभाने जाते सत्यपि—

धर्मात् संजायते ह्यर्थो धर्मात्कामोऽभिजायते।
धर्मादेव परं ब्रह्म तस्माद्धर्मं समाश्रयेत्॥

इत्यादि कूर्मपुराणादिवाक्यैरर्थादिप्राप्तेर्धर्माधीनत्वप्रतीतेः धर्मप्राप्तेः कस्याश्चिदेव अर्थायत्तत्वेऽपि बाहुल्येन जपतीर्थादिनापि सम्भवात्। स्पष्टमितरपुरुषार्थत्रयवशीकारसामर्थ्यं, नत्वर्थकामयोः धर्मापेक्षत्वेऽपि साक्षान्मोक्षस्य तदनपेक्षितत्वात्, तदपेक्षत्वे वा फलानपेक्षानिमित्तमुमुक्षाव्याघातात्, फलानपेक्षयैव धर्मानुष्ठाने धर्मत्वव्याघातात्। असत्यामपीतरापेक्षायामनिष्टत्वात्, तथा 'यज्ञान्मोक्षमिच्छन् व्रजत्यधः' इति स्मृतौ मोक्षस्यापि तदपेक्षत्वमिति—

विद्या वित्तं वपुःशौर्यं कुले जन्म निरोगता।
संसारोच्छित्तिहेतुश्च धर्मादेव प्रकीर्त्तितः।

इति स्मृतेश्च, धर्मार्थकाममोक्षेषु धर्म एव प्रधानमिति।

नन्वपेक्षायाः इच्छारूपत्वादिच्छायाश्च चेतनधर्मत्वात्, चेतनशब्दस्य च 'चिती सञ्ज्ञाने' इति सम्यग्ज्ञानाख्यसञ्ज्ञानवाचि चेतयति धातूत्पन्नतया प्रकृष्टज्ञानवति प्रवृत्तिः। प्रकृतिसाध्यसाध्येष्टकर्त्तव्यज्ञानस्य कृतियोग्यानिष्ठासंस्पृष्टेष्टसाधनताज्ञानस्य वा पुरुषविशेषणत्वात् विशिष्टपुरुषस्य च विधिविषयत्वात्, विधेश्चाप्रवृत्तप्रेरणारूपप्रकृष्टज्ञानवत्वात्। अप्रवृत्तप्रवर्त्तकस्य च स्वविषयस्येष्टसाधनत्वज्ञापनाधीनत्वात्, स्वविषयस्यापि धात्वर्थान्निरुक्तभावनारूपत्वात्। भावनायाश्च पुरुषप्रयत्नरूपत्वात्। प्रयत्नस्य च इच्छायोनित्वादिच्छायाश्च स्वतः पुरुषार्थ एवं भावात्, कर्मणश्च 'कष्टं कर्म' इत्यनुभवबलेन क्लेशरूपत्वात्, कर्मण एव कस्यचिद्धर्मत्वात् कथं तत्रापेक्षेति चेत्; उच्यते, धर्मस्यैवापेक्षाविषयत्वेपि विधिप्रत्ययादप्राप्तप्रवर्त्तनाप्रत्ययात्, प्रवर्त्तनायाश्च शब्दभावनारूपत्वात् तस्याश्च निर्विषयाया असम्भवात्। विषयापेक्षायां अर्थप्रकाशप्रतिपत्तिप्रवृत्यर्थेषु अर्थप्रवृत्तेरेव विषयत्वात्, अर्थप्रवृत्तेश्च भवनकर्तृकर्मसमाप्तप्रयोजकव्यापाररूपतया भावनारूपत्वात्। भावनायाश्च अप्रवृत्तप्रवर्तनात्मकविध्यवरुद्धधात्वर्थोपरक्तकर्त्तव्यत्वप्रतिपन्नत्वात्। विध्यवरुद्धभावनायाश्च आनन्तर्यलक्षणश्रुत्यापन्नसाध्यत्वसाधनत्वावच्छेदकीभूतकर्माख्यधात्वर्थायाः पुरुषार्थसाधनतावदिष्टत्वात्।

ननु किमर्थं धर्माधर्मौ ज्ञातव्यौ, अनुष्ठानार्थं चेदनुपपन्नम्, विनाऽपि ज्ञानेनानुष्ठानसम्भवात्। अज्ञानिनोऽपि कर्मानुतिष्ठन्ति, ज्ञानिनश्च नैवानुतिष्ठन्ति, अनुतिष्ठतोऽपि ईषदेवेति कथं ज्ञानापेक्षा, न अज्ञानस्यापि, तस्य कथञ्चिदनुष्ठानसम्भवेपि 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति श्रुत्या ज्ञानातिशययोरापाततः कार्यकारणभावावेदकयाऽपि, विद्याप्रातिपदिकोच्चरिततृतीयया विद्यासामर्थ्ययोः कारकतया 'गुणानां च परार्थत्वाद् असम्बन्धः' इति न्यायेन परस्परं

सम्बन्धमसहमानायाः, विद्यायाः प्रातिपदिकार्थभूतायाः कारकरूपत्वेन क्रियामात्रापेक्षित्वेन साक्षात्करोत्यर्थक्रियासम्बन्धत्वात् 'विद्यया ज्ञानेन करोत्यनुतिष्ठति यद् वीर्यवत्तरं तद्भवति' इत्यन्वये विद्याया ज्ञानस्य कर्माङ्गत्वावसायात्। अनुष्ठितमथ ज्ञातं कर्म फलोत्पत्यनुकूलसामर्थ्यरूपवीर्यवन्न स्यात्। ज्ञानानुष्ठितं च कर्म अज्ञानकृतसामर्थ्यात् त्रितयनिवृत्तिरूपातिशययोगिफलजननानुकूलसामर्थ्यानुदयनिवृत्तिरूपातिशययोगि-फलजननानुकूलसामर्थ्यरूपवीर्यकस्स्यादिति तरवंतवीर्यशब्दसमभिव्याहृते तरपदसन्निधेः विज्ञानस्य कर्मानुष्ठाने कर्मणि वाचिनि योगोऽवगम्यते। 'तथा ज्ञात्वा कर्माणि समारभेदि'ति स्मृतिरपि आपाततो 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'तिवत् पूर्वकालतामात्रमाचष्टे परमार्थतः। क्त्वाप्रत्ययश्रुत्या 'समानकर्तृकयोः पूर्वकाले (पा० सू० ३।४।२१) इति सूत्रवृत्तिसाक्षिकपूर्णभाष्यमहाभाष्याद्यालोचनेन समानः एकः कर्त्ता ययोः क्रिययोः प्राधान्यात्। स्वशब्दनिर्दिष्टोत्तरक्रियामपेक्ष्या पूर्वकालीनजानातिर्धातुवाच्यक्रियामुत्तरक्रियाशेषतयाऽवगमयति ज्ञानस्य कर्मानुष्ठानोपयोगमवगमयति इति 'ज्ञातमेव कर्मानुष्ठेयमि'ति सर्वमनवद्यम्।

[१]इदानीं तथैव मनु-विष्णु-दक्षांगिरोऽत्रि-वृहस्पति-उशना-आपस्तम्ब-वशिष्ठ-वृद्धवशिष्ठ-कात्यायन-सनत्कुमार-शन्तनु-जनक-कणाद-पराशर-वृद्धपराशर-व्यास-वत्स-पुलस्त्य-पुलह-क्रतु-ऋष्यश्रृङ्ग-दत्तात्रेय-नाचिकेत-स्कन्द-लौगाक्षि-गोभिल-गार्ग्य वृद्धगार्ग्य-कार्ष्णाजिनि-जावालि-शंख-लिखित-संवर्त्त-गौतम-शातातप-बृहत्शातातप-हारित-याज्ञवल्क्य-प्रचेतो-नारद-जैमिनि-बुद्ध-देवल-सोम-जमदग्नि-प्रजापति विश्वामित्र-पैठीनसि-पितामह-बौधायन-बभ्रु-व्याघ्र-सत्यव्रत-भरद्वाज-जांगलेय-जाबालि-च्यवन-मरीचि-सुमन्तु-योगि-कश्यप-काश्यप प्रभृतिमहामुनिप्रणीतस्मृतिशास्त्राणि, ब्राह्म-पाद्म-वैष्णव-शैव-भागवत-नारदीय-मार्कण्डेय-आग्नेय-भविष्यत्-ब्रह्मवैवर्त्त-लिंग-वाराह-स्कन्द-वामन-कौर्म्म-मात्स्य-गारुड़-ब्रह्माण्डाख्या विष्णुपुराणोक्ताष्टादश पुराणानि, कूर्मपुराणोक्तानि च। सनत्कुमारोक्तं नारसिंहं कुमारोक्तानां च। नन्दीशोक्तं शिवधर्माख्याम्, दुर्वाससोक्ताश्च, नारदोक्तं कापिलम् उसनसोक्तं ब्रह्माण्डवारुणकपिलाख्यमाहेश्वरसाम्बसौर-सर्वार्थसंचय पाराशरोक्त भागवताख्याष्टादशपुराणानि, भविष्यत्पुराणोक्तानि। महाभारतरामायणे। विष्णुधर्म-शिवधर्म-प्रभृतीनि परिशिष्टानि अन्यानपि शिष्ट-

---

१—तपसश्चापि अन्यग्रन्थेषु वाक्यमात्रविहितेषु विशिष्टसर्वज्ञानाय च मनुविष्णु इत्यादि ख० पु० पाठः।

त्रैवर्णिकमहाजनपरिगृहीतान् अप्रतिकञ्चुकान् कालादर्शानंतभट्टविज्ञानेश्वर भट्ट हेमाद्रिदीपिका, विवरणसहाय प्रयोगपारिजात मदनपारिजात कृत्यकल्पतरु माधवस्मृतिचन्द्रिका स्मृतिरत्नावली, स्मृतिदर्पण, स्मृतिचिन्तामणि, स्मृतिभास्कर मेधातिथि, विज्ञान तिलकाऽपरार्क विज्ञान मार्कण्डेयभोजराजीय विश्वरूपनिबन्धः नारायणीयः स्मृतिमहार्णवः शातातपीयः। गणेशवाक्यमीमांसा, स्मृतिमीमांसा, निबन्धसर्वस्व, कर्मविपाकसमुच्चय, माधवीयमैलुभि कर्मविपाक प्रवराध्याय प्रवरमञ्जरी जातिविवेकप्रमुखाननेकनिबन्धान्, आश्वलायन आपस्तम्ब सांख्यायन कात्यायन कर्कभाष्यस्मृति प्रयोगरत्नावली विधानमाला प्रमुखवैदिक-ग्रन्थान्, गर्गसंहिता लल्लनारदपराशरवराहसंहिताप्रमुखान् ज्योतिःशास्त्र-ग्रन्थान्, मीमांसा महाभाष्यादि ग्रन्थान् सम्यगभ्यस्य स्वप्रतिभामवलोक्य, धर्मनिरूपणपुरस्सरं नानासारैः श्रीनृसिंहप्रसादाख्यं धर्मशास्त्रमहं कुर्वे (विरच्यते)।

यमार्याः क्रियमाणं हि संसन्त्यागमवेदिनः।
स धर्मो, यं विगर्हन्ति तमधर्मं प्रचक्षते ॥

इत्युक्त लक्षणश्चेति, तन्न, तत्र प्रमाणाभावात्।

तथाहि - तत्र प्रत्यक्षन्तावन्न प्रमाणपथमवतरति विद्यमानोपलंभनत्वात्। सप्रविद्यमानार्थेनेन्द्रियसम्प्रयोगे सति या पुरुषबुद्धिस्तत्र प्रत्यक्षं वर्तमानार्थे ग्राहकं धर्मस्त्ववर्त्तमानः, धर्मस्य भूतभविष्यत्वर्त्तमानरूपकालत्रयानवच्छिन्नानुष्ठेयकर्म-करणोपकरणोपेतभावनारूपतया वर्त्तमानत्वात्। अनुमानमपि न धर्मे प्रमाणं प्रत्यक्षाऽप्रवृत्तौ सम्बन्धग्रहणासम्भवेनानुमानाऽप्रवृत्तत्वाद्, तथोपमानमपि न, उपमानस्य प्रत्यक्षाज्ञातसादृश्यरूपकत्वात्। तथा नार्थापत्तिरपि तस्य प्रत्यक्षाव-गतानुपपद्यमानार्थपूर्वकत्वात्।

अथैतद्दोषपरिजिहीर्षया चोदनालक्षणत्वं धर्मलक्षणं तदप्यसुन्दरं अनि-रुक्तेर्नोदितत्वमेव चोदनालक्षणत्वं इति चेन्न; अनिरुक्तेरेव।

अथ चोदनाविषयत्वं तत् तन्न भवत्यर्थककर्तृकर्मनिष्ठप्रयोजकव्यापार-रूपभावनांशानां फलकरणेतिकर्त्तव्यतारूपाणां चोदनाविषयतया धर्मत्वापातात्।

अथ फलादीनां चोदनारूपवाक्यगम्यत्वेऽपि अप्रवृत्तप्रवर्त्तनात्मकविधि-विषयत्वाभावाद्धर्मत्वाभाव इति चेन्मैवं, नोदनागम्यत्वाभावेऽपि विधिविषयत्व-मात्रेण च धर्मत्वे 'चोदनालक्षणोऽर्थो धर्मः' (मी० सू० १।२) इति सूत्रासामंज-स्यात्। विधिलक्षणोऽर्थो धर्म इति सूत्रविन्यासापातात्।

ननु धर्मःस्वरूपप्रमाणाभ्यां निरूपणीयः, न तावत् स्वरूपेण निरूपयितुं शक्यते। तथाहि—'श्रेयःसाधनता धर्मः' इति। तत्र निष्कर्षः केयं श्रेयःसाधनता, शक्तिर्वा साध्यसाधनसम्बन्धो वा। असति शक्तिमति शक्त्यवस्थानायोगान्न प्रथमः पक्षतामनुभवति। अपि च का पुनरियं शक्तिः, अभिधा चेदयोगः, व्यापारो हि सा पुरुषस्योच्चारणाभिधोऽतिशयः कश्चित् सिद्धरूपः शक्तिरिति परस्परव्याघातात्। ज्ञाता हि या शक्यमनुभावयति सा शक्तिरिति चिन्तामणिकाराभिहिता शक्तिरिति चेन्न। यस्य ज्ञाने शक्तिस्तच्छक्यमिति तत्रैवाभिधानात्। शक्यनिरूपणाधीनन्तत् शक्तिनिरूपणं शक्तिनिरूपणाधीनञ्च शक्यमिति इतरेतराश्रयग्रासात्। योग्यतेति चेत्। अत्र वक्तव्यं केयं योग्यतानामेति। उभयी हि योग्यता भवति कर्मणस्तु फलसाधनत्वे वा, पुरुषस्य फलभोक्तृत्वे वा, नोभयौ उभयपक्षेऽपि योग्यतायाः सामर्थ्यरूपत्वात्, शक्तिव्यतिरिक्तस्य च सामर्थ्यस्यात्यन्तासम्भावितत्वात् शक्तिरेव। वेदावेदिता लौकिकप्रमाणान्तराविषयसाध्यसाधनस्य सम्बन्धस्याऽत्यन्ताऽबाधान्नैतादृशीं शक्तिं युक्तिमतीं उत्पश्यामः। न च कर्मक्षणिकत्वावगतसाध्यसाधनसम्बन्धो वा तन्निर्वाहाय पूर्वमप्रतीतमथापूर्वं कल्प्यत इत्यपूर्वमेव कर्मक्षणिकतायां क्षणिकवाद्यभिमतायाः क्षणमात्रं भवन्मुखादश्रवणात्। 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इत्यभियुक्तमुखश्रवणात्, शब्दार्थसम्बन्धनित्यत्वस्य शब्दाधिकरणे साधितत्वात्, वेदार्थाभिव्यञ्जकाभिधानाख्याया बुद्धेः अभिव्यंग्यवेदार्थस्य च नित्यत्वस्वीकारात्। 'तद्भूताधिकरणभाष्य'न्यायेन यागादिकर्मणः कूटस्थनित्यत्वेऽपि तदभिव्यञ्जकभवनानुकूलभावनव्यापारक्षणिकतया अपूर्वायाः कल्पनाया अप्युपपन्नत्वात् बाधितं ततो युक्तमेतन्मतम्।

अथ 'कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतल्भ्यामि'ति कात्यायनवार्त्तिकालोचनेन साध्यसाधनसम्बन्धाभिधानं तदप्यसत्, कालान्तरभाविसाध्यस्य श्रेयसः वर्त्तमानसाधनस्य सम्बन्धायोगात्। वाक्यार्थे प्रामाण्यप्रतिज्ञाविरोधाच्च। क्रिया वा क्रियाकारक संसर्गो वा यद्यपि वाक्यार्थपदवीमारोहति तथापि न साध्यसाधनसम्बन्धः।

ननु क्रियाकारकसंसर्गवत् साध्यसाधनसम्बन्धस्यापि सम्बन्धत्वाविशेषात् वाक्यार्थतेति चेन्मैवं, क्रियाकारकपक्षे प्राप्ताप्राप्तविवेकेन भावनैव हि वाक्यार्थः, स्वकारकविशेषिता, तस्याश्च ज्ञायते नित्यं भेदः शब्दान्तरादिभिरिति भाट्टवार्त्तिकपर्यालोचनया भावनाया एव वाक्यार्थत्वात्। अथाखण्डा रूढा श्रेयःसाधनतैव धर्म इति मतं तत्र चिंत्यं, श्रेयःसाधनं वा धर्मः, श्रेयः साधनता वेति, तत्रापि चिन्त्यं

भावनाया वा श्रेयःसाधनता, धात्वर्थस्य वा, पूर्वस्य वा, तत्र क्रियाया अकारकत्वेनासाधनत्वान्नाद्यः पक्षः क्षोदक्षमप्रत्यक्षगोचरः, 'व्रीहीनवहन्ति' 'व्रीहिभिर्यजेत' इतिवत्। साध्यसाधनत्वावबोधकविभक्त्यश्रवणात् न द्वितीयोपि पक्षः परीक्षकपरीक्षाक्षमः, 'लोकवेदाधिकरण' न्यायेन लौकिकानामेव वैदिकत्वावसायात्। लोके चापाततः क्रियाक्षणिकत्वावसायात् तादृशस्य च कालान्तरभाविफलसाधनत्वायोगात्। अपूर्वद्वारा करणत्वस्वीकारेऽपूर्वस्यैव साधनत्वोपपत्तेस्तस्यैव तस्यापि वा साधनत्वस्वीकारे पूर्वदोषानिस्तारात्। ततो न तृतीयोऽपि विचक्षणपरीक्षाक्षमः पक्षः। न द्वितीयोऽपि प्रागुक्तदूषणगणग्रासात्। तस्मान्न स्वरूपतो धर्मनिरूपणम् शक्यसाधनम्, तथा प्रमाणतोपि दुःशकम्।

तथा हि न तावत् प्रत्यक्षं प्रमाणभावं भजते, विद्यमानोपलम्भनत्वात्, सता विद्यमानार्थेनेन्द्रियसम्प्रयोगे सति या पुरुषबुद्धिसद् वर्त्तमानार्थग्राहकं प्रत्यक्षमिति उच्यते। वर्त्तमानो हि धर्मः। भूतभविष्यद्वर्त्तमानरूपकालत्रयानवच्छिन्नानुष्ठेयकर्मकरणोपकरणोपेतभावनारूपतया वर्त्तमानत्वात्।

ननु धात्वर्थमात्रं धर्मो न भावनेति चेत् तथाहि—'यागेन स्वर्गं भावयेदि'ति वचनव्यक्तौ याग एव फलसाधनतया विधीयते इत्यत्राविसंवादः। श्रेयःसाधनतैव च धर्म इत्यत्रापि, ततो यागादिरेव धर्मो न भावनेति ? अत्राभिधीयते। धात्वर्थावच्छिना भावनैव धर्मो न यागमात्रं। तथाहि—धर्मे हि वेदःप्रमाणं, धर्मश्च वाक्यार्थः। सच निष्कर्षे साध्यसाधनेतिकर्त्तव्यतावच्छिन्नाभावनैव न धात्वर्थमात्रं, तस्य पदार्थत्वात्। तदुक्तं भावनैव हि वाक्यार्थ इति।

अथ यागस्य श्रेयःसाधनत्वं धर्मः इति तन्न; श्रेयः साधनताया एवानिरुक्तेः।

ननु भावनायाः धर्मत्वे तस्य च श्रेयःसाधनत्वे भाव्यांशत्रयोपेतया 'स्वर्गं भावयेदि'ति न यागेन स्वर्गमिति वाक्यार्थापातः। तस्माद्भावनैव वाक्यार्थतया प्रमेयतया धर्मो न यागमात्रं, न भावनामात्रं इति सर्वं मनोरमं तदस्तु तावत्।

अनुमानमपि धर्मे न प्रमाणं। प्रत्यक्षाप्रवृत्तौ सम्बन्धाग्रहणसम्भवेनानुमानाप्रवृत्तत्वात्। तथोपमानमपि नैव, उपमानस्य प्रत्यक्षज्ञानसादृश्यपूर्वकत्वात्। तथा नार्थापत्तिरपि, तस्याः प्रत्यक्षावगतानुपपद्यमानार्थपूर्वकत्वात्।

अथ 'चोदनालक्षणोऽर्थो धर्मः' (मी० सू० १।२) इति लक्षणन्तदप्यसुन्दरमनिरुक्तेः। नोदितत्वमेव चोदनालक्षणत्वमपीति चेन्न, अनिरुक्तेरेव, लक्ष्यलक्षणयोः प्रमाकरणं प्रमाणं इतिवत् सन्देहाच्च।

अथ नोदनाविषयत्वं, तन्न भवत्यर्थकर्तृकर्मनिष्ठप्रयोजकव्यापाररूप-भावनांशानां फलकरणोपकरणरूपाणां तद्विषयतया धर्मत्वं स्यात्।

अथ फलादीनां चोदनारूपवाक्यगम्यत्वेऽपि अप्रवृत्तप्रवर्त्तनात्मकविधि-विषयत्वाभावाद्धर्मत्वाभावात् इति चेन्न चोदनागम्यत्वाभावेऽपि विधिविषयत्व-मात्रेण धर्मत्वे 'चोदनालक्षणोऽर्थो धर्मः' ( मी० सू० १।२ ) इति सूत्रसामञ्जस्येन 'विधिलक्षणोऽर्थो धर्मः' इति सूत्रविन्यासापातात्। अथ एवं सम्मतं मतं। ,चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति वार्त्तिकार्थालोचनेन नोदनैव विधि-रिति चेन्न, मा नोदनेति क्रियायाः प्रवर्त्तकं वाक्यं इति भाष्यालोचनेन शब्दनिरूढ़-त्वात्। 'प्रवर्त्तेहमिति ज्ञानं येन शब्देन जन्यते' स चोदनोच्यते।

यद्वा 'प्रवर्त्तनफलामति'रिति वार्त्तिकोक्त्यनुसन्धाने प्रेरणाभिधापरपर्यायः शब्दव्यापार एव चोदनेति चेन्मैवं 'चोदनालक्षणोऽर्थो धर्मः' ( मी० सू० १।२ ) इति सूत्रेण वाक्यार्थरूपे धर्मे वाक्यानामेव प्रामाण्यप्रतिज्ञानात्, पदैकदेशैकदेशार्थ-प्रेरणायाश्च प्रामाण्ये वाक्याद्यधिकरणविरोधापत्तेः। मीमांसकानां विधावनियत व्यवहाराच्च। तथाहि-सूत्रकारः 'चोदनालक्षणोऽर्थो धर्मः' ( मी० सू० १।२ ) इति। क्वचिच्चोदनावाक्यं विधिमाह तस्य ज्ञानमुपदेश इति। क्वचिदुपदेशं शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमिति, क्वचित् ज्ञानविधिनाचैकवाक्यत्वा-दिति क्वचित् प्रत्ययम्।

भाष्यकारास्तु—'चोदनेति क्रियायाः प्रवर्त्तकं वाक्यम्' इति क्वचित् वाक्यमु-पदेशश्च विशिष्टस्य चोच्चारणमिति क्वचिदुदाहरणम्। विध्युद्देशेनैकवाक्यत्वात्' इति। क्वचित् प्रत्ययविध्युद्देशम्।

**आचार्यस्तु**—'किमाद्यपेक्षितैः पूर्णः' इति क्वचिद्वाक्यं नोदना चोपदेशश्चेति, क्वचिदुपदेशं प्रवर्त्तेहमिति ज्ञानं येन शब्देन जन्यत इति, क्वचिच्छब्दः व्यापारं, यद्वा प्रवर्त्तकफलमतिरिति, क्वचित् ज्ञानं अभिधाभावनामाहुरिति। क्वचिद-भिधा श्रेयः साधनतेति, क्वचिदिष्टसाधनतां विधिमाहुः वार्त्तिकव्याख्यातारः।

सोमेश्वराचार्यास्तु- सर्वपक्षविलक्षणां प्रेरणामेव विधिमाचक्षते। अतः किं वा निर्णायकमिति चिन्त्यं, तदा तासां तावद् प्रकृतं प्रकृतमनुवर्त्तामिहे, नोदना शब्दस्य विधिप्रत्ययमात्रवाचित्वे प्रतिपदं धर्मे एकपदे वेति प्रतिपदाधि-करणो वादः।

अथ वक्ष्यमाणपक्षं कक्षीकुरुषे। नोदनायाश्च वाक्यत्वात्। नोदनारूप-वाक्यगम्यतया वाक्यार्थ एव वाक्यप्रमाणोक्तेः वाक्यार्थस्य धर्मता ,तत्रैव वेद-

वाक्यानां प्रमाणभावश्चेति तदुक्तमप्ययुक्तं, प्रतिपदाधिकरणे धर्मस्य वाक्यार्थत्वेऽपि वाक्यार्थस्याऽधर्मत्वात्। पदार्थस्यैव धर्मतया एकः वाक्यार्थविशेषगोचरवाक्यार्थसामान्यरूपेतरपदार्थसम्बन्धानुभवपरत्वलक्षणप्रातिस्विकानेकतात्पर्यवदनेकपदाभिहितसामान्यरूपानेकपदार्थलक्ष्यमाणवाक्यार्थविशेषाऽभ्युपगमेनानेकपदाभिहितानेकपदार्थ एव व्यापारात्। वाक्यार्थोपि चेत् पदार्थः स्यात्, वाक्यार्थत्वमेव व्याहन्येत्। नापि प्रकरणं सत् निरूपयितुमशक्यत्वात्। ततः सर्वप्रमाणाऽप्रवृत्या कृतत्रेताद्वापरकलिरूपयुगचतुष्टयनिष्ठचतुस्त्रिद्वित्रेकपाद्धर्मगजोऽभावसिंहेन ग्रस्त इति नास्तिकसाम्ये प्राप्ते आस्तिकानामिह संकटमापन्नं धर्मोपजीविनः किं कुर्म इति।

अत्र वदामः—सत्यं प्रमाणग्राह्यता सत्तेत्यङ्गीकारात् प्रमाण्यप्रवृत्या स्वरूपतश्च भावेनाऽभावसिंहग्रस्तो धर्मदन्तावलः।

श्रीनृसिंहप्रसादेन प्रमाणान्तरानधिगतलौकिकयागस्वर्गालौकिकसमीहितासमीहितसम्बन्धावबोधकापौरुषेयवेदशार्दूले नरसिंहः निरैक्षि। तथाहि भगवतीश्रुतिस्तावत् 'धर्मो विश्वस्य जगतः प्रतिष्ठा' लोके धर्मिष्ठं प्रजाः उपसर्पन्ति'। धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ती'ति धर्ममाह।

## धर्मलक्षणम्

ननु कः पुनरयं धर्मः, यस्य रूपमस्ति, प्रामाण्यं वा श्रुतिस्मृत्यादयो वदन्ति, उच्यते, दृष्टेष्टानपेक्षशिष्टाचरित्रानुष्ठितं कर्म धर्मः। अथवा श्रेयःसाधनत्वबुध्यानुष्ठितं कर्म धर्मः। अथवा दृष्टेष्टानपेक्षानुष्ठितं कर्म धर्मः, इष्टसाधनतारूपो विधिर्वा धर्मः। अथवा विधिविषयो धर्मः, प्रतिषेधविषयोऽधर्मः। तथाह्यष्टकाख्यं कर्म धर्मः।

यदुक्तमपूर्वं धर्म इति मदनपारिजातकारैः तन्न; अपूर्वस्याधर्मत्वात्, चोदनायाश्च धात्वर्थाऽभिमतकरणत्वे प्रमाणत्वाभावात्। अपूर्वस्य वार्थापत्तिप्रमाणकतयाऽचोदनाप्रमाणत्वात् अपूर्वस्य चार्थापत्तिः। अतो मदनपारिजाते कथमुक्तमिति चिन्त्यम्।

ननु कथं विधेर्विषयस्य चाधर्मत्वं प्रमेयं च धर्मो विधिश्च प्रमाणं, नहि प्रमाणप्रमेययोरैक्यसम्भवः तुलावत्, प्रमाणमपि प्रमेयं स्यादिति उक्तौ गुणप्रधानभावविरोधः, प्रमाणप्रमेययोः प्रमेयस्य प्रधानत्वात्, प्रमाणस्य चोपसर्जनत्वं प्रमितिकरणत्वात्। एकस्यैवैकमेव प्रतिगुणप्रधानभावे विरुद्धत्रिकद्वयापत्तिरूप-

विरोधापत्तेः। अतः कथं तस्यैव धर्मत्वमिति चेत् सत्यं, इष्टसाधनायाः एव धर्मत्वं विधित्ववत् कर्त्तव्याकर्त्तव्ययोः धर्मत्वमुपपद्यते।

न च प्रमाणप्रमेयभावविरोधः, अर्थप्रामाण्ये शब्दे प्रामाण्यविरोधापत्तेः, शब्दस्यैव प्रमाणभावभावात्। अर्थ एव प्रमाणभावमनुभवत् क्व प्रामाण्यं यास्यतीति विचारणीयम्। विषये, यागादौ वा, श्रेयः साधनतायां वा, पदार्थसंसर्गे वा। प्रमाणान्तरसिद्धेर्न प्रथमः। तथाहि—लोके विनापि विधिं सेवादिधात्वर्थरूपविषयस्य फलसाधनत्वादिज्ञानसम्भवात्। विनापि प्रवर्त्तनारूपविधिना पयःपानस्य पिपासोपशामकत्वमन्यथा इदं विधिविषय इति ज्ञानमन्तरेण पीतमपि पयः पिपासां नोपशमयेत्। शब्दस्यैवाभ्युपगमनीयत्वान्न द्वितीयोपि। तृतीयोपि न सम्भवति अन्तरेण वाक्यं तस्याप्रतीतेः। तस्माच्छब्द एवानधिगतमर्थं प्रवृत्तिहेतुमावेदयत् विधौ तद्गोचरभावनाया तदङ्गेषु वा तत्सम्बन्धात् प्रमाणभावं भजत इति युक्तं वक्तुम्। तस्मात्कर्त्तव्यतेष्टसाधनता वा विधिः, कर्त्तव्यमिष्टसाधनं वा धर्म इति युक्तं वक्तुम्।

यदुक्तं—कर्त्तव्यताविषयस्य धर्मत्वे वस्तुतोऽकर्त्तव्ये ब्रह्महननादौ रागात् परकीयगृहक्षेत्रलाभादिना कर्त्तत्वावगतौ तद्विषयतया ब्राह्मणहननादेरपि धर्मत्वं स्यादिति तदसत्, तत्र कर्त्तत्वाभावात्। यदीष्टसाधनं वस्तुतस्तदेव कर्त्तव्यमेवेति नान्यत। बलवदनिष्टाननुबन्धीष्टसाधनत्वे साधनताज्ञानस्यैव कर्त्तव्यहेतुत्वात्। ततः कर्त्तव्यं करणं वा धर्मः इति निश्रेयसः साधनं च धात्वर्थानुरक्ता भावना वा धात्वर्थ एव वा। तदुक्तमाचार्यैः—

विधौ नुतमतिक्रम्य स्वर्गादेः साध्यतेष्यते।
साधनस्य च धर्मत्वमेवं सति तु लभ्यते।

तस्माच्छ्रुतिः धर्मास्तित्वमाह। इति,

तथा स्मृतिरपि—

यमार्याः क्रियमाणं हि शंसंत्यागमवेदिनः।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते॥ इति।

एवं स्वरूपतो धर्मः तथा प्रमाणतोऽपि धर्मो निरूप्यते। यद्यपि लौकिकानि प्रत्यक्षादि प्रमाणानि धर्मे प्रमाणभावं न भजन्ते, तथापि वेदस्त्वपास्तसमस्तदोषाशंकः 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिकः। समीहितासमीहितसम्बन्ध-

रूपं साध्यसाधनसम्बन्धमवगमयत्। श्रेयःसाधनत्वरूपे प्रमाणभावं भजते। तथा स्मृतिरपि--

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनां आत्मनस्तुष्टिरेव च॥ इति।

अनेनैवाभिसन्धिना भगवान् सूत्रकार आह—'चोदनालक्षणोऽर्थो धर्मः' (मी० सू० १।२) इति। अथात्रभवत्सूत्रकाराभिमतं वचनव्यक्तिद्वयं स्वरूपप्रमाण-लक्षणं वा धर्मः स नोदनाप्रमाणकश्चोदनैव धर्मे प्रमाणमिति पदस्मरणान्तर-व्यापाराः पदार्थाः। पदार्थस्मरणावान्तरव्यापाराणि पदानि वाक्यर्थप्रमां साधय-न्तीति तद् वाक्याधिकरण सिद्धान्तसूत्रावयवविरोधोऽपि परिहर्तुं शक्यते। इतरपदार्थानुगृहीत एक पदार्थो हि धर्म इत्यभिधीयते।

## धर्मे वेदप्रामाण्यविचारः

यद्यप्यनेकानि पदानि धर्मप्रमां जनयन्ति इत्यभिधीयते तथापि तन्न, प्रति-पदाधिकरणविरुद्धम्। ततो वेद एव प्रमाणमिति स्यादेतद्यदि वेदस्य प्रामाण्यं स्यात् तदेव ताद् दुर्भणम्। तत्प्रमाण्ये चार्वाकादीनां विप्रत्तिपत्तेः।

तथाहि—वेदोऽप्रमाणं परस्परविरुद्धार्थत्वादुन्मत्तप्रलपितवत्। नचात्र हेत्वसिद्धिर्वक्तव्या 'अग्नीषोमीयं पशुमालभेते' त्येतद्विधिवाक्यं सत्यतया प्रमाणमपि 'न हिंस्यात् सर्वा भूतानि' इत्यनेन विरुद्धम्। तथा ब्राह्मणे-'ब्राह्मणमालभेते'त्येतदपि 'न ब्राह्मणो हन्तव्यः' इत्यनेन विरुद्धम्। तथा 'सौत्रामण्या यजते' इत्येतत् 'न सुरापातव्ये'-त्येत्यनेन विरुद्धम्। ततो विरोधाद्विधिवाक्यानि न प्रमाणभावं भजन्ते।

तथार्थवादवाक्यान्यपि 'अन्धो मणिमविन्दत्'। प्रजापतिरात्मनो वपामुद-खिदत्, सोरोदीद् यदरोदीत्' इत्यादीनि वा सन्ति विरुद्धपुनरुक्तानुपयुक्तार्थाभि-धायीनि न प्रमाणम्।

तथा मन्त्रा अपि न प्रमाणभावं भजन्ते। 'प्रमाणान्तरानधिगतमपूर्वमर्थं वेदयन्तीति वेदः' इत्यभिधानात्। मन्त्राणां च विधिवाक्यप्रमितद्रव्यदेवता-दिकर्मप्रकाशकानां अन्यावगतार्थवेदकतया तदर्थशास्त्रात् तथा नामधेयान्यपि न प्रमाणभावं भजन्ते। व्यावर्त्तकतया हि तेषां प्रामाण्यात्, विधिशेषादिना अन्यव्यावर्त्तकादेः सम्भवादिति। तस्माद्विध्यर्थवादमन्त्रनामधेयात्मकवेदस्या-प्रमाणत्वान्न धर्मरूपे वाक्यार्थे वेदः प्रमाणपदवीमुपारोढुमर्हतीति सिद्धम्।

अत्राभिधीयते नायं विचार उपपद्यते,
विरोधपरिहारो हि शक्यते कर्त्तुमीदृशः।
आगमस्य प्रमाणत्वमविरोधादतिस्फुटम्।
अतो विध्यर्थवादादि मन्त्रानामप्रमाणता।

विशेषेणानधिगतार्थं यथार्थज्ञानसाधनत्वं प्रमाणत्वम्। तत्र विधिभागस्याप्रवृत्तप्रवर्त्तकत्वेनार्थवादभागस्य विहितार्थस्तावकत्वेन, मन्त्रभागस्यानुष्ठेयार्थस्मारकत्वेन, नामधेयभागस्यान्यव्यावर्त्तकत्वेन तत्त्वम्। यत्तावदनुमानं व्यरचि-वेदोऽप्रमाणं परस्परविरुद्धार्थत्वादिति इदमसत् हेत्वसिद्धेः। परस्परविरुद्धार्थत्वादिति हेतुः सोऽसिद्धः विरोधस्यैवाभावात्, समानविषयत्वे हि विरोधो भवति। न भिन्नविषयत्वे। यथा दार्शपौर्णमासिकपुरोडाशप्रकृतिभूतयागीयद्रव्यावच्छेदकजातिसमर्पकव्रीहियवादिवाक्यवत्। 'न हिंस्यात् सर्वा भूतानि' इति सर्वसत्त्वकर्मकहन्त्यर्थानुरक्तनिवृत्तिगोचरनिषेधो हि स्वापेक्षितनिवृत्तिगोचरहन्त्यर्थानुरक्तविषयमपेक्षते। विधिः पुनः सार्वकाम्यप्राप्तज्योतिष्टोमाङ्गभूतदैक्षभावनाकाङ्क्षितालम्भकरणस्वरूपनिर्वर्त्तकद्रव्यसमर्पणपरान्ननिषेधगोचरीभूतमर्थं संस्प्रष्टुमीष्टे। भिन्नविषयत्वञ्च भावनायाः भाव्याहिंसानिपाताद्विधिवाक्ये च करणांशोपनिपातात्। अपि वा श्रुतिसामान्यात् प्रमाणमनुमानं स्यादिति स्मृत्याधिकरणसिद्धान्तसूत्रापादितमूलभूतश्रुतिकल्पितया तैत्तिरीयकब्राह्मणपठितया 'न सुरां पिबति'इत्यनया श्रुत्याविरुद्धसौत्रामणियागविधायकवाक्यमिति चेन्मैवं; 'सौत्रामणी तु मदिरे'त्येतत्कोशमालोक्य मदिराशब्दस्य मादकद्रव्योपलक्षणत्वात् येन केनचित्तत् प्रतिनिधिना प्रकारान्तरेण च यागस्य कर्तुं शक्यत्वात्। मदिराया भावनायां कर्मकरणांशाय निपाताद्भिन्नविषयतया विरोधं परिहृत्युपपत्तेः। प्रसिद्धनिषिद्धब्रह्महननेऽपि हननस्य हिंसापर्यन्तत्वान्नविरोध इत्यलमनेन।

स च वेदो द्वेधा मन्त्रब्राह्मणभेदात्। तदपि द्वेधा विध्यर्थवादभेदात्। तत्र विधेर्यद्यपि श्रेयंसाधनत्वाख्यधर्मानुष्ठापकतया चोदनासूत्रदृष्ट्या प्रामाण्यं सिद्धन्तथापि धर्मालौकिकतया तत्र प्रमाणादेकतरासंगतिग्रहणयोगादनवबोधकतयाऽप्रमाकरणत्वप्राप्तावपि 'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबती'ति। अत्र प्रसिद्धपदसमभिव्याहारेणाप्रसिद्धमधुकरपदस्येव 'कारीर्या वृष्टिकामो यजेते'त्यत्र प्रसिद्धार्थपदसमभिव्याहारेणालौकिकार्थभावनायां शब्दभावेनाप्रसिद्धस्यापि विधेः संगतिग्रहणावबोधकतया औत्पत्तिकसूत्रसूचितन्यायेन, विध्यपेक्षितांशपूरकार्थवाद-

प्रामाण्यसाधनादेश्च'विधिना त्वेकवाक्यत्वादि'त्येतत्सूत्राभिहितन्यायेन । उक्तं तु 'वाक्यशेषत्वमि'त्येतत् सिद्धान्तसूत्राभिहितविध्यनङ्गीकारे साधनत्वाज्ञानात् तत् साधनतयेति न्यायेन श्रेयः साधनत्वाख्यधर्मानुष्ठापकतया धर्म ([१]प्रमोपयोगितया विशेषतः प्रामाण्यम्। तथार्थवादानामपि तात्पर्यार्थाविषयरोदनवपोत्खननदिङ्मोहाचरितमपि विषयापरोक्षज्ञानलक्षणविलक्षणार्थप्रतिपादकतया असत्यतया साध्यसाधनेतिकर्त्तव्यतालक्षणभावनांशत्रया ) प्रतिपादकतया कथञ्चिदपि प्रमाणपदवीमनारूढानामपि अध्ययनविधिना तेषां अध्यध्ययनस्य विधानात् पुरुषार्थानां चाध्ययनायोगात् तत्पुरुषानुबन्धित्वाच्च विधेरेव उत्पत्तिविनियोगाधिकारप्रयोगाणां शब्दान्तरश्रुत्यादिशक्तिश्रुत्यर्थादिप्रमाणान्तरापेक्षत्वेऽपि स्वविषयेऽचापेक्षायाः प्रामाण्यविहन्तृत्वादनपेतया इष्टसाधनतया इष्टसानतावेदकत्वेन प्रवर्त्तकत्वप्रसक्तावपि फलस्य स्वत इच्छाविषयत्वात् । साधनस्य च स्वतः कष्टरूपत्वेन द्वेष्यत्वात्, कर्मेच्छाविषयभूतं सत् असद्गुणकीर्त्तनेन प्रमादालस्यवत् पुरुषेभ्यो रोचत इति विध्यपेक्षितप्राशस्त्यलक्षणया विध्यपेक्षितप्ररोचनावान्तरव्यापारवतां समभिव्याहारावगतविध्येकवाक्यत्वात् विधिवादेन च श्रेयःसाधनत्वाख्यधर्मानुष्ठापकतया धर्मप्रमोपयोगित्वात् प्रामाण्यम् । तथा मन्त्राणामपि प्रकरणेन प्रधानविधिशेषत्वं विहितं पदार्थस्मारणद्वारेण 'अवशिष्टस्तु वाक्यार्थः' इति न्यायेन साधितमिति स्वाध्यायाध्ययनविध्यध्यापितत्वान्यथानुपपत्त्या स्वविषयस्य प्रवर्त्तकत्वान्यथानुपपत्त्या श्रेयःसाधनतामाक्षिपता विधिना स्वविषयप्रवृत्यनुकूलतापेक्षितमनुष्ठेयपदार्थस्मरणं पुरुषप्रवृत्तिकृत्युत्पत्यनुपयोगि उच्चारणप्रहरणेन स्वव्यापारभूताभिधानद्वारेण नियमेन कुर्वतां 'मन्त्रेणेदं कर्त्तव्यं, मन्त्रेण बर्हिर्लवनं प्रकाशयितव्यमि'ति मन्त्रार्थप्रयोगविध्यर्थयोश्चार्थद्वारकविशेषणविशेष्यभावाश्रयणेनात्मनोंगत्वबोधेन धर्मप्रमोपयोगितया प्रामाण्यं तथा नामधेयानामपि अध्ययनविध्यध्यापितत्वान्यथानुपपत्त्यार्थवत्वेऽपि वस्तुतो वेदस्य त्र्यंशत्वात् एकपदतयाऽप्ररोचकतया अर्थवादत्वाभावात् अस्यतादिरूपमन्त्रप्रसिध्यभावाभ्याममन्त्रत्वात् मन्त्रार्थवादाभ्यामन्यस्य विध्यतिरिक्तप्रकारस्याभावेन परिशेषात् विध्युद्देशान्तर्भावावगतः तथापि कर्मकरणोपकरणांशसमर्पकत्वेनैवान्वयात्, फलान्तरावरोधेनाफलत्वादेकं वा चोदकत्वादिति एकभाव्यपरिपूर्णभावनाया भाव्यान्तरानपक्षेया भाव्यन्तरासम्भवात्, अफलत्वात् । 'भावार्थाधिकरण'न्यायेन प्रकृत्यर्थस्यैव करणस्य प्रकृत्यंशेनावगतेरकरणत्वात् । अपूर्वजनकतया भावनानपे-

१. कोष्ठगतः पाठः ख पुस्तके नास्ति ।

क्षिततयाऽनुपकरणत्वात्,संज्ञासंज्ञिसम्बन्धविध्याश्रयणे विध्यावृत्यापत्तेर्विशिष्टविध्याश्रयणे विधिगौरवापत्तेर्गुणफलसम्बन्धस्य विधिविशेषलभ्यत्वादसार्ववत्रिकतयायोगात् पारिशेष्यात् गुणविधिरिति भाष्यालोचनेन गुणविधिताया एवाङ्गीकार्यत्वेऽपि फलकरणसम्बन्धापेक्षितविशेषज्ञानस्य कौंडपायिनहोमादि अग्निहोत्रादिधर्मातिदेशस्य यागत्वादिसामान्येऽपीच्छादिकरणत्वव्यावृत्तेश्च नामधेयापेततया गुणविध्यपेक्षया बाहुल्येन फलवत्वात्, धर्मप्रमोपयोगितया प्रामाण्यमिति सकलमकलङ्कम्। तस्मात् सकलस्यापि वेदराशेरपौरुषेयतयाऽपास्तसमस्तदोषाशंकस्य स्वबोधकतया च सिद्धं प्रामाण्यम्।

## स्मृतिप्रामाण्यविचारः

ननु आम्नायस्यापौरुषेयतयाऽपास्तसमस्तदोषाशङ्कः परतः प्रामाण्यनिराशद्वारा श्रेयःसाधनत्वाख्यधर्ममावेदयं स अनुभवतु प्रमाणभावं, स्मृतयस्तु मन्वादिप्रणीतत्वेन पौरुषेयतया अप्रमाणमेवेति युक्तम्। तथाहि-स्मृतिविदां अपूर्वप्रमाणावगत प्रमेयानुवादिनी स्मृतिर्नाधिकमर्थं परिच्छिनत्तीति सम्मतं मतम्। नह्यनुवादकस्य प्रामाण्यासम्भवः।

किञ्च मूलाभावादपि न प्रामाण्यसम्भवः। ततः स्मृतयः तन्मूलभूतश्रुतेः प्रत्यक्षेण विषयीकारात् इति विप्रलम्भमूलत्वोपपत्तेरर्थापत्यापि विषयीकर्तुमशक्यत्वात्। तार्किकरीत्या-उच्छिन्नश्रुतिमूलत्वाभिधाने नित्यत्वोक्तिविरोधग्रस्तत्वात्, पठ्यमानप्रत्यक्षश्रुतिमूलत्वे स्मृतिवैयर्थ्यापातात्, अनुपपत्यभावात्, अयोगात्। नित्यानुमेयवेदमूलत्वस्य तु 'विश्वजिता यजेते'त्यादिवत्कस्यचित् प्रत्यक्षस्यानुपपत्यभावात्, अयोगात्, पूर्वाचार्यस्मरणानुपपत्तेरप्यन्धपरम्पराप्रसंगात्, तत्कल्पकत्वायोगान्न प्रमाणभावमनुभवति।

उच्यते। अनुभूयार्थविषयविज्ञानस्य स्मृतित्वाद् वेदार्थविदां च 'इदं कर्त्तव्यमिदमकर्त्तव्यमि'ति प्रकारकस्मरणस्यापि प्रमाणत्वम्। अनुष्ठानार्थं च कर्त्तव्योपदिश्यते।

न च केन विध्येच्छया कल्पिते न बुद्धिपूर्वकारिणोऽनुष्ठानमर्हन्ति। भ्रान्त्याऽनुष्ठाने सिद्धे एकपुरुषभ्रान्तावपि न सर्वजगतोऽपीति संसारभाविनी वेति। मन्वादिस्मृतीनां वा वेदमूलत्वे सम्भवति न भ्रान्तिमूलत्वं कल्पयितुं शक्यते। इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानस्य प्रत्यक्षत्वात्, धर्मस्य च कर्त्तव्यतास्वभावत्वात्, सिद्धस्य च कर्त्तव्यत्वात्, सन्निकर्षस्य च प्रसिद्धवस्तुविषयत्वात्। अनुमानादीनामसदर्थ-

विषयत्वेऽपि तेभ्यः कर्त्तव्यतावगत्यभावात्, प्रत्यक्षादीनां नचावसरः, ततः कर्त्तव्यतास्मरणस्यानुरूपकारणकल्पनायां वेद एव कारणतां प्रतिपद्यते। तत्र पठ्यमानवेदमूलत्वे स्मृतीनां नैरर्थक्यात् अनुमेयवेदमूलत्वं कल्प्यते। ततश्च 'अष्टकाः कर्त्तव्याः' इति स्मृतिः श्रुत्यनुमितिं करोति। यथा 'बर्हिर्देवसदनं दामी'तिमन्त्रः सामान्याकारेण सिद्धः दर्शपूर्णमाससम्बन्धः स्वसामर्थ्येन बर्हिलवनेपि विनियुक्तः प्रकरणाद्दर्शपूर्णमासावनेन मन्त्रेण यथाशक्नुयात्तथा कुर्यादित्यवगतेः। सामर्थ्याख्यलिङ्गस्य बर्हिलवन एव दृष्टेः लिङ्गप्रकरणाभ्यामनेन मन्त्रेण बर्हिलुनातीति बुद्धिस्थशब्दस्यानुमेयत्वमित्यनुमीयते।

**तथोक्तमाचार्यैः**—'अविकल्पकविज्ञानैः पूर्वशब्दः प्रतीयते' इति। ततो विध्यर्थवादमन्त्रनामधेयवत्स्मृतीनामपि वैदिकतया वैदिकार्थानुष्ठातॄणां स्मार्त्तेषु साधारणपरिग्रहेण मन्वादिप्रणीतवाक्यानां हि 'यद्वै किञ्चित् मनुरवदत्तद्वै भेषजमि'ति वेदेनैव सत्यत्वावधारणेन स्मार्तोपनयनादीनां प्रत्यक्षविधिदर्शनेन चोन्नेयवेदमूलत्वेन समूलत्वाविनाशेन प्रत्यक्षवेदमूलत्वेऽपि प्रणयनार्थत्वेन निर्विचिकित्सं धर्मप्रमायामुपयोगं व्रजन्तीति सिद्धम्।

## धर्मे आचारप्रामाण्यविचारः।

ननु वेदमूलतया स्मृतीनां प्रामाण्येऽपि कथं वेदमूलत्वाभावेनाचारप्रमाण्यमिति विचारणीयम्। सर्वथानन्ताचारमूलभूतश्रुत्ययोगः, प्रत्याचारं चानन्तश्रुतिकल्पनेऽनन्तश्रुतिकल्पनापत्तिः। अतो नाचारमूलभूतश्रुतिकल्पना सम्भवः।

ननु 'वेदोऽखिलो धर्ममूलमि'ति चेन्मैवं, अनेकजन्मवासनावशादाशयवैचित्र्येण श्रुतिकर्मानुष्ठातुरात्मतुष्टेरपि जायमानतया आचारमात्रप्रामाण्यसाधकत्वायोगात्। अथैवं पक्षः शिष्टानुष्ठेयतया सदाचारत्वमिति, तन्न, इतरेतराश्रयग्रस्तत्वात्। तथाहि-शिष्टानां हि सदाचाराः, सदाचाराश्च शिष्टा इति। अपि च महाचरित्राणां शिष्टाग्रेसराणां श्रीरामकृष्णप्रभृतीनां धर्मव्यतिक्रमदर्शनेन नाचारप्रामाण्यं साधयितुं शक्यते। श्रीरामः परमपुमानपि सारासारविचारचतुरः, पवित्रविचित्रचरित्रः, पत्नीत्यागेनैकाकीराजसूयादि यागाननुतिष्ठन् धर्मव्यतिक्रमं करोति। तथा साक्षात् भगवान् सर्वोत्तम आदिदेवः श्रीकृष्णनाथो मातुलसुतारुक्मिणीपरिणयनमद्यपानलक्षणं परमसधर्ममनुतिष्ठन् धर्मव्यतिक्रमं करोति। तथा ब्रह्मापि परमवैदिककर्मानुष्ठाता वैदिकश्च प्रजापतिः 'उषसमभ्यैत् स्वां दुहितरमि'ति अगम्यागमनरूपमधर्ममनुतिष्ठन् धर्मं व्यतिक्रामति। तथेन्द्रबलरामावपि अतिसर्वनिन्द्यब्रह्महननानुष्ठानात् धर्मव्यतिक्रमं

कुरुतः । तथा गृहीतनैष्ठिकब्रह्मचर्यः कृष्णद्वैपायनो विधवानियोगायोगेन नियोगविधेश्च एकापत्यविषयत्वेन अनपत्यपरोक्षविचित्रभार्यायाम् अम्बिकाया-मम्बिकाप्रेषितायां अम्बालिकायां तत् प्रेषितायां दास्यां धृतराष्ट्रपाण्डुवि-दुराननेकापत्यजननरूपाऽधर्मानुष्ठानेन धर्मव्यतिक्रमं करोति। तथा विश्वामित्रो ब्राह्मणकन्याहरणकुपितः पितृशापापन्नं चण्डालत्वं प्राप्तं क्षत्रियत्रिशङ्कु-याजनरूपाधर्मानुष्ठानाद्धर्मव्यतिक्रमं करोति तथा पुरूरवा उर्वशीशोकेन मर्तुकामो जलप्रवेशलक्षणात्महननरूपोऽधर्मानुष्ठानाद्धर्मव्यतिक्रमं करोति । तथा वशिष्ठः राक्षसभक्षिततनूजवियोगे प्रायश्चित्तानपनोद्यात्महननात्मजल-प्रवेशरूपाधर्माऽनुष्ठानाद् व्यतिक्रामति धर्मम् । तथा नहुषो ब्रह्महननभये-नापक्रान्तेन्द्रे च स्वसामर्थ्याधिगतेन्द्रपदः शचीगमनेन धर्मं व्यतिक्रामति । तथा युधिष्ठिरोपि कनिष्ठोऽर्जुनसामर्थ्यार्जितजायापरिणयनाद्धर्मव्यतिक्रमं कृतवान् । तथा धृतराष्ट्रोऽन्धतया निरंशः कर्मानधिकारी अधिकृताकरणस्य प्रत्यवा-यहेतुत्वेऽपि अनधिकृतकर्मानुष्ठानस्य प्रत्यवायहेतुत्वात् यागानुष्ठानेन धर्मं व्यतिक्रामति । तथाऽर्जुनोऽपि मातुलदुहितृसुभद्रापरिणयनाद् धर्मव्यतिक्रमं कृत-वान् । अद्यत्वेऽपि आदिक्षेत्रमथु (धु) रानिवासिब्राह्मण्योपि सुरापानं कुर्वन्त्यो धर्मव्यतिक्रमं कुर्वन्ति । प्राच्यास्तु मत्स्यभक्षणलक्षणाधर्मानुष्ठानाद्धर्मव्यतिक्रमं कुर्वन्ति । ततो नैकप्रकारधर्मव्यतिक्रमदर्शनात् नाचारः प्रमाणमिति ।

अत्रोच्यते—नहि अस्माभिराचारमात्रं शिष्टानुष्ठानमात्रेण प्रमाणमि-त्यभिधीयते, अपितु दृष्टेष्टप्रवृत्तिसाधनतया यत्र नाश्रीयते केवलं धर्मबुद्ध्यैवा-नुष्ठीयते त एवाचाराः प्रमाणतयाद्रियन्ते । नहि मूलभूतवेदव्यवहारिणामेक एवंविधाचारो यदनादिपरम्परासिद्धः सम्भवतीति । तत्स्मृत्याचारयोरवि-शिष्टमेव प्रामाण्यमङ्गीकरणीयम्,—अनुमानस्य तुल्यत्वात् । धर्मस्य शब्दमूल-त्वात्, अपरिमितेषु च आचारेषु परिमितशास्त्रमूलत्वासम्भवेनाशब्दत्वेनान-पेक्षतया प्रामाण्येऽपि,—

भ्रान्तेरनुभवाच्चापि पुंवाक्यात् विप्रलम्भनात् ।
दृष्टानुगुण्यसाध्यत्वाच्चोदनैव गरीयसी ॥

इति भट्टोक्त्यनुसन्धानेन वेदमूलत्वानुमानात् । 'आचारश्चैव साधूना-मि'त्याचारप्रामाण्यावेदिकायाश्च स्मृतेर्निर्मूलत्वासम्भवेन आचारमूलभूतश्रुति-कल्पनावश्यं प्रतीयते ।

नन्वचारमूलभूतवेदश्रुतीनामनन्तत्वात् पठितुमशक्यत्वात्, अपठितानाञ्च मूलत्वायोगात्, निर्मूलत्वमपरिहार्यमिति निर्मूलत्वादप्रामाण्यमेव स्थितमिति चेन्मैवं, प्रयोजकमात्रेण विस्तररचनोपपत्तेराचार्यैरभिहितत्वात्। आहत्य वेदाभिहितकारितया शिष्टत्वात्।

इतरेतराश्रयतापि परिहर्त्तुं शक्या। एवं वेदविहितकार्याचारस्य वेदमूलत्वं विनाऽनुपपत्तेर्वेदमूलत्वेनाचारस्यैव प्रतिपादनेन वेदजन्यानन्तधर्मधी-संस्कृतान्तःकरणानामात्मतुष्टेरपि वेदमूलत्वाभावेनोपपन्नत्वात्। सन्दिग्धधर्म-निर्णयार्थत्वेन शिष्टात्मतुष्टेर्वेदनियतमार्गानुसारितया स्मृतिवदाचारवद्वा धर्म-प्रतिज्ञापकहेतुत्वादात्मतोषेण विषयस्य यस्य कस्यचित् श्रुत्याद्यविरुद्धस्य कर्मणः श्रेयःसाधनरूपशक्तिरूपधर्मत्वमुत्पाद्यत इति कारकहेतुः। तथापि प्रमाण्य-मुपपद्यते इति निरवद्यं सर्वम्।

यदपि धर्मव्यतिक्रमे उदाहृतं तत्सर्वमनुपपन्नम्। तत्र श्रीरामो हि न धर्मव्यतिक्रमं कृतवान्। धर्ममात्रार्थं भार्यान्तरसहं परिणेष्यामीति परिभाष्य परिणीतभार्यान्तरस्य सीतायाः अतिस्नेहवशात् स्त्र्यन्तरागमनव्रतग्रहणात् नित्यनैमित्तिकयोः **दाशमिकन्यायेन** नैमित्तिकेन नित्यबाधाया उचितत्वात्। नित्यस्य ऋतुगमनस्य नैमित्तिकेन व्रतग्रहणेन बाधात्। 'यज्ञे यज्ञे प्रकुरुते पत्नी' 'सीतां हिरण्मयीमि'त्यादिवाक्यालोचनेन लोकापवादभीतेरित्युक्तसीताविषयनैष्ठुर्या-भावार्थत्वाभावात्।

यदपि श्रीकृष्णो मद्यपानं मातुलसुतापरिणयनं कृतवानिति धर्मव्यति-क्रम इति तदपि मन्दतमम्। यद्यपि अन्नविकारसुरामात्रस्य त्रैवर्णिक-प्रतिषेधेऽपि मधुसीध्वोस्तु क्षत्रियवैश्ययोरप्रतिषेधात्।

ननु "गौड़ी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः॥

इति वाक्यं ब्रह्मवादिभिरित्येतत्पदोपात्तब्रह्मक्षत्रियविशां मद्यपानं प्रतिषेधतीति चेन्मैवं। ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारित्व-निमित्तकत्वेन ब्राह्मणस्यैव ब्रह्मवादिशब्देनाभिधानात्। यथान्नसुरा एकापि त्रयाणामप्यपेया। तथा ब्रह्मवादिभिर्ब्राह्मणैर्न पातव्येति वचनव्यक्त्या व्याख्येयत्वात्।

यदपि मातुलसुतापरिणयनेन तन्मातृस्वस्रादिसम्बन्धव्यवधानेऽपि भ्रातादिव्यवहाराय विरुद्धम् ।

वस्तुतस्तु मातुलसुतापरिणयनं वेदेऽभिहिततया न दोष इति सापिण्ड्यनिर्णये संस्कारसारे विवाहप्रकरणे विस्तरेण वक्ष्यामः ।

यदपि ब्रह्मा धर्मं व्यतिक्रान्तवानित्यवादि तन्मन्दम् । तत्र श्रुतिसामान्यस्य सत्त्वात् । प्रजापतेः प्रजापालनादादित्यस्यारुणोदयवेलायां गमनात् किरणाख्यबीजनिक्षेपात् । एवं समस्ततेजः परमेश्वरनिमित्तेन्द्रशब्दवाच्यस्य सवितुरहनि लीयमानतया अहल्याशब्दवाच्याया रात्रेः क्षयात्मकजरणहेतुत्वात् जीर्यत्यस्मादनेन वेति अहल्याजारत्वं न परस्त्रीव्यभिचारमात्रेण ।

यस्तु द्वैपायनेन व्यतिक्रान्तो धर्म इत्यादि तदप्यसत्; 'सर्वं बलवतः पथ्यमि'तिन्यायेन तयोः विशेषादिरूपसामर्थ्येनानुष्ठीयमानत्वान्न दोषायेति, नायं धर्मव्यतिक्रमः ।

नहुषस्यापि परस्त्रीप्रार्थनानिमित्तानन्तरकालाजगरत्वप्राप्त्यै च दुराचारतामेवास्तवगमनात् क्रमः ।

योऽपि विश्वामित्रधर्मव्यतिक्रमः—विश्वामित्रस्य व्यामोहाभावेऽपि आपत्कालेपि तत् कुटुम्बपोषणं कृतवतः त्रिशङ्कोः प्रत्युपकारः कर्त्तव्यो मयेति प्रत्युपकारमभिसन्धाय चण्डालयजनं कृतवान् इति सामर्थ्यवशान्न दोषः । वशिष्ठस्यापि पुत्रशोकजनितव्यामोहनिमित्तत्वाख्यानाद्धर्मबुद्धया क्रियमाणाभावात् न सदाचारतेति नैवाधर्मत्वं निश्चीयते ।

ततश्चायं निर्णयः 'तपोवलेन पापं नाशयामीति' अध्यवसायबलेन निर्वाहं कुर्यादिति । ततश्च सति तप आदिरूपे सामर्थ्ये नायं धर्मव्यतिक्रमो भवतीति रहस्यम् । अनयैव दिशा सर्वत्रापि परिहारः कल्पयितव्य इति सदाचारादयोऽपि प्रमाणमिति स्थितम् ।

ततो 'वेदोऽखिलो धर्ममूलमि'ति स्मृत्या वेदादीनां धर्ममूलता निरंकुशा सिद्धा । तस्माच्छ्रुतेस्तन्मूलकस्मृत्यादेश्च धर्मप्रमाणस्य सत्त्वात् न प्रमाणग्राह्यताया एव सत्ताया अप्यभियुक्तैरुक्तवादस्ति धर्माख्यं प्रमेयम् । तत्र श्रुतिस्मृत्यादिकप्रमाणमपीति सकलमकलङ्कम् ।

## सकलस्य वेदस्य धर्ममूलत्वसाधनम् ।

भावनायां विध्यर्थवादमन्त्रपदनामधेयानां अप्रवृत्तप्रवर्त्तकत्व-विहितार्थस्तावकत्व-विहितार्थप्रकाशनधर्मोपस्थापनान्यव्यावर्त्तन – चतुश्चरणप्रमाणलक्षणरूपप्रथमाध्यायस्य, प्रकृतशास्त्रोपोद्घातानन्तरमाख्यातमेवापूर्वज्ञापकम्, तत्सत्वे प्रमाणमित्युपोद्घातोपघातशब्दान्तरादिभेदस्येतरादीनां कर्मभेदप्रामाण्यापवादनित्यकाम्यप्रयोगभेदवर्णनार्थं चतुश्चरणात्मकचोदनादि शब्दादि वैचित्र्याद्भिन्नेति उत्पन्नविधिरूपचोदनाभेदप्रतिपादनाय द्वितीयस्य, उत्पन्नस्य कर्मणः शेषशेषिभावेन विनियोगप्रतिपादनाय श्रुतिलिङ्गवाक्यप्रकरणादिनिवीतादिष्वर्थवादत्वविधित्वादिनिश्चयहेतुः प्रतिकर्म अनारभ्याधीता मुख्योपकारि प्रयाजादियाजमानवर्णनार्थाष्टचरणात्मकतृतीयाध्यायस्य, विनियुक्तस्य शेषशेषिभावविशेषप्रतिपादनाय मुख्यप्रयोक्तृत्वाऽमुख्यप्रयोक्तृत्वाफलसत्त्वजघन्यांगविचारार्थं चतुश्चरणात्मकचतुर्थाध्यायस्य, श्रुत्युच्चारणादिभिः क्रमेण विनियोग इति श्रुत्याद्यनुष्ठानक्रमाभिधायकक्रमशेषः विध्यावृत्तिश्रुत्यादिबलाबलविचारार्थं चतुश्चरणात्मकपञ्चमाध्यायस्य, एतत्समग्रं यदर्थमसावथ समर्थो विद्वान् शास्त्रेणापर्युदस्तसाङ्गक्रमविशिष्टकर्मानुष्ठानप्रतिष्ठित इति निरूपणाय अधिकारी तद्धर्म-प्रतिनिधि-अर्थलोप-दीक्षासत्र-देव-वह्निचिन्तार्थाष्टचरणषष्ठाध्यायस्य, तदनन्तरमनुक्तेतिकर्त्तव्यताकमपि कर्मान्यतो विध्यन्तमाप्नोति, सामान्यातिदेशादिति निरूपणाय'प्रकृतिवद् विकृतिः कर्त्तव्ये'ति सामान्यरूपातिदेश-तच्छेष-नाम-लिङ्गातिदेशार्थं चतुश्चरणात्मकसप्तमाध्यायस्य, विशेषातिदेशनिरूपणाय स्पष्टास्पष्टसवलापवादलिंगचिन्तार्थं चतुश्चरणाष्टमाध्यायस्य, विकृतिगतानां मन्त्रादीनां विकृतावतिदेशप्राप्तानां विकृतौ द्रव्यदेवताभेदे सति सामर्थ्याभावात्, विकृतिरूपलिंगबचनान्तरोपादानेनोहप्रकरणोपोद्घातपूर्वकोह – सामोह, – मंत्रोह, – संस्कारोह,–प्रसङ्गोहार्थं चतुश्चरणात्मकनवमाध्यायस्य, अर्थित्वसामान्योपदेशाद्वा सति प्राप्तिसम्भव दृष्टादृष्टार्थमप्राप्त्यनुमानबाधेति निरूपणाय, द्वारलोपचिन्तातिविस्तारचिन्ता, कार्यैकत्वचिन्ता, समुच्चयचिन्ता, सामचिन्ता, प्रकीर्णचिन्ता, नञर्थचिन्तार्थाष्टचरणदशमाध्यायस्य, यत्रार्थितृ सर्वे प्रयोजकाभेदेनावृत्त्या वा योऽर्थः प्रतिपत्तव्यस्तदर्थमेकमेव सम्भवाल्लाघवाच्च प्रयोजयन्ति तत्रत्यमिति निरूपणार्थं तत्रोपोद्घातमन्त्रावापतन्त्रप्रपञ्चावापप्रपञ्चार्थं चतुश्चरणात्मकस्य एकदशाध्यायस्य, द्वयोरर्थिनोः कार्येण सम्भविना प्रयोजकत्वेन निर्ज्ञातसामर्थ्ययोः

यत्रान्यतरप्रसक्तेनार्थेनापरोभिसम्बन्ध्यमानः कृतार्थत्वात् पृथक् प्रयोजकत्वेनापैति सप्रसंग इति निरूपणाय प्रसङ्गतन्त्रसमुच्चयविकल्पार्थश्चतुश्चरणात्मकद्वादशाध्यायस्य, चतुश्चरणात्मकत्रयोदशाध्यायस्य, पात्र भेदनिरूपणार्थं चतुश्चरणात्मकचर्तुदशाध्यायस्य, तुल्यबलाऽविरोधिसमुच्चयप्रतिपादनार्थाष्टचरणपञ्चदशाध्यायस्य, तुल्यप्रमाणशिष्टानां विरुद्धानां बाधप्रतियोगिविकल्पनिरूपणार्थाष्टचरणषोडशाध्यायस्य अतिदेशप्राप्तमन्त्रप्रकृतिदेवताविकृतियागदेवतात्वेन विपरिणयितव्येत्येतत् प्रतिपक्षभूतसम्बन्धाबाधननिरूपणाय पञ्चदशाध्यायस्य, सामान्यातिदेशाभावनिरूपणाय चतुश्चरणाष्टादशाध्यायस्य, विशेषातिदेशप्रतिपक्षभूतसामान्यातिदेशविशेषान्तरातिदेशप्रतिपादनाय चतुश्चरणात्मकस्य एकोनविंशाध्यायस्य, स्वरूपापवादनिरूपणार्थाष्टचरणविंशाध्यायस्य, क्रमस्याऽविवक्षालक्षणप्रतिपक्षविवक्षया तल्लक्षणनिरूपणार्थं चतुश्चरणात्मकैकविंशाध्यायस्य, विनियुक्तस्याप्यविनियोजकत्वनिरूपणाय चतुश्चरणात्मकद्वाविंशाध्यायस्य, उत्पन्नस्यापि कर्मणः शेषशेषिभावनिरासेन समप्राधान्यनिरूपणायाष्टचरणात्मकत्रयोविंशाध्यायस्य, उत्पत्तिविषयकर्माऽभेदप्रतिपादनाय चतुश्चरणात्मकचतुर्विंशाध्यायस्य उपयोग इति चतुर्विंशत्यध्यायरूपकर्ममीमांसायाउपयोगात् कर्माङ्गभूतदेवताप्रमाणलक्षणप्रतिष्ठोपासनार्थचतुश्चरणात्मकाध्यायचतुष्टयस्य प्रमाणत्वस्वरूपवस्तुविग्रहत्वागोचरत्वरूपचतुश्चरणात्मकप्रतिपक्षाध्यायचतुष्टयस्य उपयोग इति देवताभाण्डस्योपयोगः। इदञ्च जैमिनिप्रभृतिभिस्तत्र भाष्यादिभिर्ग्रन्थैः विस्तरेण प्रपञ्चितम् अनन्ताचार्यैश्च वेदार्थप्रकाशे त्रिकाण्डमण्डने विस्तरेण प्रपञ्चितं तत्र कृतश्रमाणां सुगममिति नेह प्रपञ्चितम्।

ननु काण्डद्वयस्य धर्मप्रमोपयोगेऽपि ज्ञानकाण्डस्य तु न कथञ्चिदुपयोग इति चेदुच्यते। स्पष्टब्रह्मलिङ्गवाक्यसमन्वयार्थैकादशाधिकरणस्य ब्रह्मलिङ्गवाक्यसमन्वयार्थं सप्ताधिकरणस्य, निर्विशेषब्रह्मलिंगवाक्यसमन्वयार्थत्रयोदशाधिकरणाव्यक्तपदमजायदित्यादि संदिग्धपदचिन्तार्थाष्टादशाधिकरणप्रधानाधिकरणत्वनिराकरणेन ब्रह्मकारणत्वप्रतिपादनार्थं प्रथमद्वितीयतृतीयचतुर्थचरणात्मकप्रथमाध्यायस्य वेदान्तवाक्यानां जगत्कारणे सर्वज्ञे अद्वितीयब्रह्मणि तात्पर्येण पर्यवसानरूपसमन्वयलक्षणस्य उपनिषत्प्रधानादिपरत्वव्याख्यानुग्राहकसांख्यकस्तु न्यायविरोधपरिहारः, सांख्यादिमतानां दुष्टत्वप्रदर्शनद्वारा वेदमनपेक्ष्यैव सांख्या अभ्युपन्यस्तप्रधानादिसाधकानुमानविरोधपरिहारभूतभोक्तृविषयवाक्यानां परस्परविरोधपरिहारभौतिकभोगोपकरण-

प्राणादिविषयाणां परस्परविरोधपरिहारार्थं चतुश्चरणात्मकषट्चत्वारिंशदधिकरणसांख्यस्मृत्याद्यविरोधार्थं द्वितीयाध्यायस्य, पञ्चाग्निविद्यामाश्रित्य ज्ञानसाधनवैराग्यार्थं जीवस्य परलोकेहलोकसंवरणविरक्तस्य ज्ञानसाधनभूतत्वं पदार्थविवेक—अपुनरुक्तार्थकोचितपदार्थोपसंहारलक्षणगुणोपसंहारनिरूपणेन सगुणनिर्गुणवाक्यविचारः, परापरब्रह्मविद्यानां कर्मनिरपेक्षाणामेव पुरुषार्थसाधनत्वाभिधानद्वारा निर्गुणज्ञानस्य बहिरंगस्याश्रम यज्ञादीनि साधनानि अन्तरङ्गाणि च शमदमनिदिध्यासनादीनि विचारार्थं चतुश्चरणात्मकसप्ताधिकरणब्रह्मविद्यासाधनार्थतृतीयाध्यायस्य,[१] जीवन्मुक्तिलक्षणम् । सगुणनिर्गुणफलप्राप्तिशेषत्वेन तद्विद उत्क्रान्त्यनुत्क्रान्तिनिरूपणम्, सगुणब्रह्मविदुष उत्क्रान्तस्य क्रममुक्तिफलकदेवयानः पन्था इति निरूपणम् ।

निर्गुणब्रह्मविदुषः स्वरूपप्रतिपत्तिः, सगुणब्रह्मविदुषो विचित्रैश्वर्यप्राप्तिनिरूपणार्थं चतुश्चरणात्मकब्रह्मविद्याफलकाष्टत्रिंशदधिकरणचतुर्थाध्यायस्य उपयोग इत्यस्ति ज्ञानकाण्डस्योपयोग इति । तस्य गुणभावनायां वेदादिसाधने त्रिकाण्डमीमांसोपकारितां भजत इत्यस्ति धर्माख्यं प्रमेयमिति ।

ननु कर्मकाण्डदेवताकाण्डयोः धर्मप्रमोपयोगेऽपि न ज्ञानकाण्डस्योपयोगः, तस्य मुक्त्युपयोगितयोक्तत्वादिति सत्यम्; द्विविधो हि धर्मः प्रवृत्तिसंज्ञको निवृत्तिसंज्ञकश्च । तत्र अभ्युदयफलको हि प्रवृत्तिधर्मः । निःश्रेयसफलको हि निवृत्तिधर्मः । **तदुक्तमभियुक्तैः** ।

प्रवृत्तिसंज्ञके धर्मे फलमभ्युदयो मतः ।
निवृत्तिसञ्ज्ञके धर्मे फलं निःश्रेयसं मतम् । इति ।

तस्माद् 'धर्मो ज्ञातव्यः' 'स्वाध्यायोऽध्येतव्यः' 'वेदोऽधिगन्तव्यः' इति गुरुवद्स्मृतिवाक्येषु भावनायाः स्वाध्यायाध्ययनसाधनाय भावनायाः वाक्यार्थतयाऽप्यभियुक्तैरङ्गीकारात् न्याय्यत्वाच्च, इष्टसाधनकर्तव्यतयोश्च 'स स्वर्गः' स्यादिति षाष्ठन्यायेन दृष्टार्थतयाऽपि सम्भवाद् दृष्टार्थत्वेन मीमांसारम्भायोगाद्भावनैव वाक्यार्थः, तस्याश्च वाक्यार्थप्रज्ञानमेव दृष्टं फलमिति मीमांसाया इति सिद्धं धर्माख्यं प्रमेयमिति सिद्धम् ।

---

१. निरूपणम् इति ख पाठः ।

## अधिकारिनिरूपणम्

**अथाधिकारी निरूप्यते**—कः पुनरसौ। यदि मत्वर्थीयेनप्रत्ययान्ततयाऽधिकारोऽस्यास्तीति। कः पुनरसाविति चिन्त्यम्। अधिकारिधर्मतया तन्निरूपणे इतरेतराश्रयता। नापि फलस्वाम्यं, आत्मनेपदादेव सिद्धेः। 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम'इत्यादावात्मनेपदाभावेनाधिकाराभाव इति चेन्न, आधानगतात्मनेपदादेव तत्सिद्धेः।

किञ्च फलस्वाम्यं हि फलशेषित्वं, तद्विनियोगविध्यधीनमिति न तदर्थमधिकारविध्युपासना। तथा हि—'फलञ्च पुरुषार्थत्वादिति' भगवान् सूत्रकारः। फलस्य पुरुषशेषत्वमभिधत्ते। तथा यदि कर्मणि शेषिता, सापि विनियोगविध्यधीनैव। तदाह सूत्रकारः—'पुरुषश्च कर्मार्थत्वादि'ति। अथ कर्मणः फलशेषत्वमधिकारस्तदर्थमधिकारविध्युपासनेति, तदपि विनियोगविधिनैव सिद्धमिति तदर्थमध्यायान्तरप्रतिपाद्याधिकारविध्यपेक्षा। तदाह भगवान् सूत्रकारः—'कर्माण्यपि जैमिनिः फलार्थत्वादि'ति।

अथ फलमेवाधिकार इति चेन्न; सिद्धेऽधिकारलक्षणे फले कर्मानुष्ठानम्, कर्मानुष्ठाने च फलसिद्धिरिति इतरेतराश्रयापत्तेः। अतो नास्त्यधिकार इत्युच्यते। सत्फलसाधनतयेदं कर्ममदीयमिति कर्मणि मादर्थ्यज्ञानवान् अधिकारी। इदमनुमन्यन्ते नान्ये अशब्दार्थत्वात्, अपरे इदमपि समर्थयन्तो लक्ष्यन्ते। अधीत्युपसर्गेऽन्तर्गतगमनक्रियायोगविषयतयाधिकारावगमात् विशिष्टानुष्ठेयत्वावगतपूर्वकालानुष्ठानस्यैवाधिकारतेति, तदधिकरोतीति व्युत्पत्त्या यद्ययं स्वतन्त्रमधिकरोति स्वामीकरोतीति हि व्युत्पत्त्या स्वाम्यर्थस्याधेरुपरिभावे प्रवृत्तत्वात्। यश्च यस्य स्वामी तस्योपरि सम्भवतीति सर्वजनप्रसिध्या कर्मणामुपरिभावेनावस्थितस्य स्वामित्वं ततः फलस्वाम्यं कर्मणि शेषित्वं वाधिकार इति सिद्धम्।

ननु एवं लक्षणाधिकारे तदहः कृतोपनयनमाणवकानां एवंविधज्ञानाभावेनाधिकाराभावात् सन्ध्यावन्दनाद्यनुष्ठानाभावः प्रसज्येत इति चेन्मैवं, अधिकार्यवगतस्यैवानुष्ठानहेतुत्वात्।

नन्वयमधिकारोस्य कर्तुः समीहितसाधनात्मककर्त्तव्यतारूपविध्यंशत्वात्। तस्य च स्वर्गकामवचनादेव स्वर्गकामपुरुषस्य कर्त्तृताया स्वामिताया अवगमात्। 'यजेते'त्याख्याते च धात्वर्थस्यैवेष्टसाधनत्वज्ञानात्। शक्यतायाश्च

स्वर्गकाममात्रस्य यागः स्वर्गसाधनं शक्यं चेत्यवगमो न, शास्त्रस्य सर्वाधिकारत्वावसायात्। 'देवा सत्रमासते'त्यादि लिङ्गदर्शनाद्देवानां द्रव्यपरिग्रहाभावेऽपि 'देवग्रामो हस्तिग्रामः' इत्यादिवत्परिग्रहात्। अचेतनग्रामाणाञ्च कामनाभावेऽपि देवादीनां तत्सद्भावात्सर्वसत्त्वानामिति चेन्मैवं, अधिकारस्य शक्त्यधीनत्वाच्छक्तेश्च प्रमाणान्तरगम्यत्वेन शास्त्रानपेक्षत्वात्। शास्त्रस्य चाप्राप्त एवार्थेऽर्थवत्वात्। इष्टसाधनत्वरूपस्यार्थस्य चाप्राप्ततया शास्त्रैकगोचरत्वात्। विधिरूपानुगताया अपि शक्तेरशास्त्रीयत्वात्, अधिकारस्य च फललाभाधीनत्वात्, फलस्य च प्रयोक्तृगामित्वात्। अङ्गानुष्ठानसमर्थस्यैवानुष्ठातृत्वात्। अन्धबधिरपङ्गुदेवतिरश्चामाज्यावेक्षणविध्युक्तमपि देवतोद्देश्येन ( द्रव्य ) त्यागार्षेयवचनार्थज्ञानासम्भवात्। सामर्थ्याभावाद्देवानां चात्मानमुद्दिश्य द्रव्यत्यागासम्भवात्। 'देवा वै सत्रमासत' इत्यादिलिंगदर्शनस्य चार्थवादतयाऽप्युपपन्नत्वात्। अधिकाराभावात् मनुष्याणामपि सर्वेषामनधिकारात्, याजनादीनामितिकर्त्तव्यतात्वेन क्रतुविधिपरिगृहीतत्वेन क्रत्वर्थत्वादत्यन्तपारार्थ्यवेदकविनियोगविध्यपेक्षितविशेषसमर्पकत्वविध्यर्थानुसारि श्रुत्यादिभिस्साध्यसाधनतेतिकर्त्तव्यतावद् भावनात्मनि प्रतिपादिते तत्तत्फलकामस्य तत्तदनुष्ठानसमर्थस्याधिकारिणो विनियोगाद्यथाधिकारविनियोगायोगेन यथाविनियोगमेवाधिकारात्। यथाविनियोगमधिकारे सूतिकादावधिकारप्रतिबन्धे कर्मानुष्ठानप्रसक्तावपि विहिताकरणे प्रत्यवायाऽभावेऽपि अधिकृताकरणे प्रत्यवायश्रवणात्। सर्वेषां सर्वाङ्गोपसंहारसमर्थानां अर्थसामर्थ्यसमर्थानां ज्ञानसमर्थानामेवाधिकारो नान्येषामसमर्थानामिति सकलमकलङ्कम्।

ननु सर्वेषां मनुष्याणमधिकारेऽपि पुरुषाणामेवाधिकारो, न स्त्रीणामधिकारः। तथाहि—स्वर्गकाम इति पुल्लिङ्गनिर्देशात्।

स्त्रियो भार्या पुत्रदासाश्च त्रय एवाऽधनाः स्मृताः।

इति स्मृत्यालोचनेन निस्वत्वात्, अस्वतन्त्रत्वाच्च स्त्रीणामधिकाराभावः। ततश्च यथा 'पशुमालभेते'त्यत्र लिङ्गविशेषनिर्देशस्तथा स्वर्गकाम इत्यत्रापि लिङ्गविशेषनिर्देशात् पुरुषाणामेवाधिकारो न स्त्रीणामिति।

अत्रोच्यते; पुरुषवत् स्त्रीणामप्यस्त्येवाधिकारः। न च स्वर्गकाम इति पुल्लिगनिर्देशात् तेषामेवाधिकारो न तासामिति वाच्यम्। स्वर्गकामशब्दस्य स्वर्गेच्छायोगप्रवृत्तत्वात्, इच्छायाश्चोभयत्र समानत्वात्, जात्या च कस्यचित्तस्यायोगात्। लिङ्गस्य प्रातिपदिकार्थत्वेऽपि उद्दिश्यमानविशेषणस्य वाक्यभेदभयेनाविवक्षाया

ग्रहैकत्वाधिकरणेऽभिहितत्वात् । न चोद्देश्यविशेषणवत् उद्देश्यस्याप्यविवक्षितत्वे तस्याप्यनधिकार इति वक्तव्यम् । उद्देश्यविवक्षायाश्च चमसाधिकरणेऽभिधानात् ।

न च 'स्त्रियो निश्वा' इत्यनधिकारिण्य इति वक्तुं शक्यं, पुत्राभावेऽपि दुहितातुल्यसन्तानदर्शनात् । 'स्त्रीधनं दुहितॄणां स्यादि'त्यादिना स्त्रीणामपि धनवत्वात् । 'धर्मे चार्थे च कामे च मोक्षे च भरतवर्षभ'इत्यादिना भर्त्रर्जितस्य साधारणप्रतीतश्चास्ति स्त्रीणामप्यधिकार इति स्थितम् ।

तस्माद्धर्मार्थकाममोक्षाभिलाषिणां प्रथमाभिहिततयाऽभ्यर्हिततया तदधीनतया च धर्म एवादौ निरूपणीय इति सिद्धम् ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारे संस्कृतिके करोति चतुरे श्रीमान्दलाधीश्वरः ॥ १ ॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-
समस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धर-
श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते
श्रीनृसिंहप्रसादीये संस्कारसारे धर्म-
प्रामाण्यसमर्थनं सम्पूर्णम् ।

## धर्मे पुराणप्रामाण्यसमर्थनम्

अथेदं विचारणीयम् भवतु श्रुत्यादीनां धर्मे प्रामाण्यम्, पुराणवचनानां विवक्षितार्थत्वमविवक्षितार्थत्वं वा ।

तत्र केचिदतिसाहसिकास्तु—अविवक्षितार्थतामेव मन्यन्ते । तथाहि—सर्वस्यापि वेदराशेः कार्य एवार्थे प्रामाण्यं तत्रैव शक्तितात्पर्यार्थयोरवधारितत्वात् । तस्माद्विधिवाक्यस्यैव स्वार्थे प्रामाण्यं, न मन्त्रार्थवादोपनिषद्वाक्यानाम्, तेषान्तु कथञ्चिद् क्रतुविध्युपयुक्तत्वात् । तदर्थत्वं जपार्थत्वं वाङ्गीकार्यम् इतिहासपुराणयोस्तन्मूलत्वान्नतरां स्वार्थे प्रामाण्यलेशोऽपि ।

तत्र केचित् पण्डितम्मन्यास्तु—'पुत्रस्ते जातः' इत्यादौ सिद्धेऽपि आचार्यैरेव शक्तितात्पर्ययोरवधारित्वात् । मन्त्रार्थवादयोरपि मानान्तरानधिगताऽविरुद्धार्थवेद-

कयोः स्वार्थे प्रामाण्यसम्भवात् तन्मूलत्वात्, पुराणानां स्वार्थे प्रामाण्यसम्भव इति स्वार्थे प्रामाण्यसम्भवात् मन्यन्ते।

अत्र वदामि; वेदवत् पुराणानामपि धर्मस्वार्थयोः प्रामाण्यमविशिष्टम्।

ननु वेदस्य धर्मब्रह्मदेवताप्रतिपादकतया त्रिकाण्डरूपत्वात् धर्माधर्मब्रह्मसु प्रामाण्यं युक्तम्। पुराणानामतद्रूपतया न धर्मस्वार्थयोः प्रामाण्यं युक्तमिति-चेन्न, पुराणानामपि सर्वपुराणेषु वर्णाश्रमधर्माणां प्राधान्येन प्रतिपादनात् तथा श्रीभागवतभारतादिश्रुतिकाण्डरूपतामपि स्पष्टं पश्यामि। तथाहि—

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां।

वेद्यं वास्तवमत्र वस्तु शुभदं तापत्रयोन्मूलनम्।

श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः।

सद्योहृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूभिस्तत्क्षणात्। इति। तथा—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥

कर्मब्रह्मणोरविशेषेण प्रतिपाद्यत्वप्रतिपादनाच्च। भविष्योत्तरमत्स्यपुराणादिषु च धर्मप्रतिपादनभागस्यैव भूयस्त्वात्। धर्मे प्रामाण्यं पुराणानामविगीतमेव। तस्माद्यथाकाण्डभेदेन नानार्थत्वं वेदानामविरुद्धन्तथा तद्भेदेन नानार्थत्वं पुराणानामप्यविरुद्धमिति रहस्यम्।

ननूक्तप्रकारेण पुराणानां धर्मे तात्पर्यसद्भावेन प्रामाण्येऽपि पुराणानां प्रायेणार्थवादबहुलत्वात् नामकीर्त्तनविषयाणामर्थवादानां प्रामाण्यं शास्त्रज्ञैः दुःसाध्यमेव, स्मार्त्तप्रायश्चित्तविधिना निरोधात्। तथाहि-यदि हि स्मार्त्ताः विधयः प्रमाणं न तर्हि अर्थवादप्रमाणम्, यदि ह्यर्थवादा एव न तर्हि स्मार्त्तविधय इति विधिविशेषतया हि अर्थवादाः प्रमाणभावं भजन्ते। ते चार्थवादा विध्यप्रामाण्यावेदकाश्चेत्तर्हि अर्थवादा एव न भवेयुः।

किञ्च शेषशेषिणोर्विरोधे शेषिन एव प्रधानतयाऽभ्यर्हिततया प्रामाण्यमङ्गीकरणीयमिति महद्दुर्घटमापन्नम्, सत्यम्; अन्येषामनभ्यस्तमीमांसाशास्त्राणां पितृप्रियाणामेवमस्ति संकटम्। ननु निर्व्याजसुश्रूषितगुरुचरणस्य समभ्यस्तमीमांसाशास्त्रस्य सकलविद्वदभिमतस्य किञ्चित्संकटं यद्विशेषतयार्थवादानां

प्रामाण्यं तद्विध्यप्रामाण्यापादकत्वे भवेदपि विरोधो [१]नत्वेतदस्ति । अन्यार्थवादप्रामाण्येन अन्यविध्यप्रामाण्यस्यादर्शनात् ।

नन्वत्र-'गङ्गागङ्गेति यो ब्रूयादि' त्यादिना सर्वपापक्षये तदर्थान्यप्रायश्चित्तविध्यानर्थक्यम् न श्येनाधिकरणोक्तवैषम्येण तुल्यमिति चेन्न, 'पूर्णाहुत्या सर्वान् कामानवाप्नोति' इत्यनेनैव सर्वकामावाप्तेः ज्योतिष्टोमदर्शपूर्णमासाग्निहोत्रादीनामथ्यानर्थक्यप्राप्तेः सर्वत्वमाधिकारिकमित्यनेन 'कर्मणामल्पमहतामि'त्युक्त्यनुसन्धानेन विरोधपरिहारसम्भवात् । अन्यथा सन्ध्योपासनेनैव 'यद्रात्र्यापापमकार्षं मनसा वाचा हस्ताभ्यामि'त्यादि मन्त्रवर्णपर्यालोचनया समस्तपापक्षये अन्यस्मात्तप्रायश्चित्तविध्यानर्थक्यस्य तादवस्थ्यात् ।

**अथ श्रुत्यादीनां बलाबलमभिधीयते**--यत्र-श्रुतिद्वयं परस्परं विरुद्धं तत्र उभयप्रतिपाद्यावपि धर्मावनुष्ठेयौ, उभयोः श्रौतत्वाविशेषात् । तदाह मनुः—

श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ।। इति ।

ततश्च तुल्यप्रमाणशिष्टतया तयोर्विकल्प एव युक्त इति । अनयैव दिशा स्मृतिद्वयविरोधे विकल्प एव युक्तः, तुल्यबलविरोधे च विकल्प इति गौतमस्मरणात् । श्रुतिस्मृतिविरोधे स्मृतेर्बाधः, श्रुतेः प्राबल्यात् ।

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्यं स्मार्त्तवत् वैदिकं सदा ।। इति लौगाक्षिस्मरणात् ।

स्मृत्योरपि विरोधेऽपि श्रुतिमूलया निर्मूलया बाधः । एवमाचारस्यापि स्मृतिविरोधे बाधः । तथा च वशिष्ठः-श्रुतिस्मृतिविहितो धर्मस्तदभावे शिष्टाचारः प्रमाणमिति । तथा स्मृतिलौकिकवाक्यविरोधे स्मृतिरेव प्रमाणम् ।

स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् ।
तथैव लौकिकं वाक्यं स्मृतिबाधात् परित्यजेत् ।।

इति चतुर्विंशतिमतवचनात् । मनुस्मृतेश्च स्मृत्यन्तरविरोधे मनुस्मृतेरेव प्राबल्यम् 'यत् किञ्चिन्मनुरवदत् तद्भेषजम्' इति वेदेनैव सत्यत्वावधारणात् । गुरुरपि--

वेदादुपनिबद्धत्वात् प्राधान्यन्तु मनोः स्मृतम् ।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते । इति ।

---

१. न चेतदस्ति ख पाठः ।

तदाहाङ्गिरा अपि—

यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनुत्तमम् ।
न हितं तमतिक्रम्य वचनं हितमात्मनः । इति ।

यत्र स्मृतिपौराणयोः विरोधस्तत्र विकल्पः । स्मृतिपुराणयोः समबलत्वात् ।

ननु पुराणानां स्मृतिभ्यः दुर्बलत्वान्न सामान्यमिति चेन्न, स्मृतीनां पुराणानाञ्च श्रुतिमूलत्वसाम्येनाविशेषान्न प्रामाण्ये तारतम्यम् । 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः' इति स्मृतिपुराणयोः समत्वं प्रतीयते । अर्थवादबहुलतया पुराणदौर्बल्ये वेदेऽपि तथात्वं दुर्वारम् । अस्ति पुराणानामपि वेदत्वम् । 'पुराणः पञ्चमो वेदः' इति पुराणेष्वेव अस्ति चार्थवादानामपि विधिकल्पकत्वम्, अन्यथार्थवादत्वानुपपत्तेः । तथोक्तमाचार्यैः—

पुराणं मानवो धर्म साङ्गो वेदः चिकित्सितम् ॥ इति ।

तथा शारीरिकमीमांसाभाष्येनान्यस्मृत्यनवकाशदोषप्रसङ्गादित्यत्र शङ्कराचार्यैः ता उदाहरिष्याम इत्युक्ताः । पुराणे गीतायां चेति साम्यमुक्तम् । अतः स्मृतिपुराणयोः समबलत्वम् । यत्र हि धर्मद्वयविरोधः तत्र लघुधर्मस्य बाधः ।

धर्मं यो बाधते धर्मो न स धर्मः कदाचन ।
अविरोधी तु यो धर्मः स धर्मः सद्भिरुच्यते ।
तस्माद्विरोधे धर्मस्य निश्चित्य गुरुलाघवम् ।
यतो भूयस्ततो विद्वान् कुर्याद्धर्मविनिर्णयम् ॥ इति ।

तत्र धर्मो द्विविधः साधारणः, चतुर्वर्णाभिमतः । तथा असाधारणश्च साधारणासाधारणयोः दशप्रकारः । सत्यं तस्याश्रमत्वाऽनपेक्षया वर्णत्वैकनिमित्तम् । धृतिक्षमादमोऽस्तेयशौचमिद्रियनिग्रहह्रीर्विद्यासत्यमक्रोधरूप इति । धैर्यं धृतिः, क्षमा अपकारहेतावपि चेतसोऽविकारः । दमोऽन्तःकरणसंपदुदात्तो दाता वा । अदत्तस्वीकारः स्तेयं । शौचं बाह्यमाभ्यन्तरञ्च, निषिद्धेभ्य इन्द्रियाणां निवारणं इन्द्रियनिग्रहः । अकार्यनिवृत्तिः ह्रीः । आत्मज्ञानं विद्या । यथार्थवचनं सत्यमिति ।

असाधारणः पञ्चविधः-वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मश्च । तत्र वर्णा ब्राह्मणादयस्तेषां धर्मः उपनयनादिः । यथाष्टवर्षे

ब्राह्मणमुपनयीत् । अत्राष्टवर्षादिवाक्यैरनेकवर्णत्वोद्देश्येन विधीयमानोपनयनं तस्याश्रमत्वानपेक्षया वर्णत्वैकनिमित्तत्वात् । आश्रमाः ब्रह्मचर्यप्रभृतयस्तेषां धर्मः पालाशो दण्डो ब्राह्मणस्येत्यादि । वर्णाश्रमधर्मो यथा-ब्राह्मणो नित्यं मद्यं वर्जयेदिति । मौञ्जीमेखलादिको वा गुणनिमित्तः । गौणः यथा शास्त्रीयाभिषेकादिगुणयुक्तस्य प्रजापरिपालनम् । नैमित्तको यथा—ब्रह्महा द्वादशाब्दव्रतं चरेदित्यादि । प्रायश्चित्तस्य नित्यकाम्यवैधर्म्यमात्रेण नैमित्तिकता, राहुदर्शननिमित्तस्नानादिवदकरणजनितदोषपरिहारार्थं तथेति चेन्नैवमपि कर्मकृताधर्मपरिहारार्थं-तथैव विध्युपपत्तेः । तथा देशधर्मः पञ्चधा । तत्र विप्रतिपत्तिः दक्षिणतः अनुपनीतेन सह भोजनं, भार्यया वा सह भोजनं, पर्युषितभोजनं, मातुलसुतापरिणयनं, पितृस्वसृदुहितृपरिणयनञ्चेति । एते अन्यदेशेऽधर्मा अपि स्वदेशे धर्मा एव । तथोत्तरतः—ऊर्णाविक्रयः, सीधुपानम्, भूमितोऽद्भिर्व्यवहारः, आयुधीयसमुद्रयानमिति । एवमन्येऽपि । मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिन[1]श्च । पूर्वे नरा मत्स्यादाः, स्त्रियश्च व्यभिचारशीलाः, अन्ये मद्यपानरताः स्पृश्याश्च नराणां, रजस्वलाऽभर्तृकभ्रातृभार्यागामिनश्च पुरुषा भवन्ति । तथा केचित् युगधर्माः । कृते तपश्चर्या, त्रेतायां ज्ञानम्, द्वापरे यज्ञाः, कलौ दानमिति । दीर्घकालब्रह्मचर्यं कमण्डलुधारणगोत्रान्मातुः सपिण्डविवाहगोवधनराश्वमेधदेवरसुतोत्पत्तिदत्तकन्यापुनःप्रदानज्येष्ठांशोद्धारणभ्रातृजायागमनविधवाप्रजोत्पत्तिदेवरसुतोत्पत्त्यक्षतयोनिबालिकापुनर्विवाहचातुर्वर्ण्यविवाहाततायिब्राह्मणवधसत्रदीक्षा महाप्रस्थानगमनगोसवगोवधसौत्रामणीसुराग्रहणाग्निहोत्रवानप्रस्थाश्रमस्वीकारब्राह्मणमरणान्तप्रायश्चितोपदेशसंसर्गदोषस्तथान्यमहापातकानि दत्तौरसेतरपुत्रपरिग्रहसोमविक्रयणप्रभृतिधर्माः कलौ निषिद्धाः ।

इति श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे
संस्कारसारे श्रुतिस्मृतिधर्मप्रामाण्य(प्रकरण)म् ।

## धर्मस्वरूपम्

युगधर्मः—स्वस्वरूपफलप्रमाणनिमित्तैः प्रवृत्त्यौपयिकः । तत्र को धर्मः इत्यपेक्षाय धर्मस्वरूप मनुनोक्तम् ।

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाऽभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥

---

१. खपु. नास्ति ।

अयमर्थः—विद्वद्भिः वेदार्थविद्भिः सेवितः सततमनुष्ठितः सद्भिः साधुभिः नित्यमनिदंप्रथमत्वेन अद्वेषरागिभिः—अविहितरागद्वेष-शून्यैः। तथा भविष्यति धर्मे श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्। आद्यः श्रेयःशब्दः श्रेयःसाधनं लक्षयति; द्वितीयश्चाऽभ्युदयमाचष्टे। मुख्यार्थे बाधकाभावात्। आद्य श्रेयःशब्दस्याभ्युदयपरत्वे श्रेयःसाधनमित्यादि बहुग्रन्थ-विरोधापत्तेः। नहि फलमेव धर्म इति कस्यचिन्मतम्। विश्वामित्रः

यमार्याः क्रियमाणं हि संशंत्यागमवेदिनः।
स धर्मो, यं विगर्हन्ति तमधर्मं प्रचक्षते।

तथा

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद् भवेद्।
यं शिष्टाः ब्राह्मणाः ब्रूयुः स धर्मः स्यादशङ्कितः।

धर्मो हि द्विविधःसाधारणोऽसाधारणश्च असाधारणत्वश्चतुर्णामाश्रमाणां कार्यतया।

[ साधारणोऽपि[१] द्विविधः-साधारणोऽसाधारणश्च। साधारणः पञ्चविधः वर्णधर्मः, आश्रमधर्मो, वर्णाश्रमधर्मो, गुणधर्मो, निमित्तधर्मश्चेति। चतुर्विधः आश्रमिणां पृथग्धर्मो विशेषधर्मः समानधर्मः। पृथग्धर्मश्च त्रिविधः सात्त्विको राजसस्तामसश्च। पुनर्द्विविधः। इष्टमापूर्त्तं च। साधारणोऽपि दशप्रकारः सर्वभेदान् प्रदर्शयिष्यामि इति। ]

तत्र धर्म इत्यनुवृत्तौ भविष्यति—
वर्णधर्मः स्मृतस्त्वेकः, आश्रमाणामतः परम्।
वर्णाश्रमस्तृतीयस्तु गौणे नैमित्तिकस्ततः।
वर्णन्त्वेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते।
वर्णधर्मः स उक्तस्तु यथोपनयनं नृप।
आश्रमं तु समाश्रित्य यो धर्मः सम्प्रवर्त्तते।
स खल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा।
वर्णत्वमाश्रमत्वञ्च योधिकृत्य प्रवर्त्तते।
स वर्णाश्रमधर्मस्तु स्यान्मौञ्जीमेखला यथा।
यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते।
यथा मूर्धावसिक्तस्य प्रजानां परिपालनम्।

---

१. [ ] कोष्ठगतः पाठः ख. पु. नास्ति।

निमित्तमेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते ।
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ।

अत्र प्रायश्चितस्य राहुदर्शननिमित्तस्नानादिवदकरणजनितदोषपरिहारार्थता नैमित्तिकत्वं अथवा दुरितापूर्वमेव तत्र निमित्तमिति नैमित्तिकत्वम् ।

यत्तु हेमाद्रिणा नित्यकाम्यवैधर्म्यमात्रेण नैमित्तकत्वमिति व्याख्यातं तदयुक्तं अकरणे दोषश्रुतेः, फलश्रुतेश्च, उभयवैधर्म्यानुपपत्तेः ।

यत्तूक्तं न जातेष्टिवत् उभयपरत्वं, तत्रोभयोरुपात्तत्वादिति तदप्यनुदितगुरुमति अध्ययनविधौ आचार्यादर्थज्ञानयोरश्रवणे उभयार्थत्वाप्रतीतेश्च । अत्र बृहस्पतिवाक्यात् उभयार्थता, तत्र भृगुः ।

प्रवृत्तश्च निवृत्तश्च द्विविधं कर्मवैदिकम् ।
सर्गादौ सृजता सृष्टं ब्रह्मणा वेदरूपिणा ।
प्रवृत्तसंज्ञको धर्मो गुणतस्त्रिविधो मतः ।
सात्त्विको राजसश्चैव तामसश्चेति भेदतः ।
कार्यबुद्ध्यैव यत्कर्म मोक्षेपि फलवर्जितम् ।
क्रियते द्विजवर्येह तत्तामसमुदाहृतम् ।
मोक्षायेदं करोमीति संकल्पं क्रियते च यत् ।
तत्कर्म राजसञ्ज्ञेयं तत्साक्षान्मोक्षकृद्भवेत् ।
कार्यबुद्ध्यनपेक्षं यत् कर्मविध्यनपेक्षया ।
क्रियते द्विजवर्येह तत्तत्सात्त्विकमुच्यते ।

कालिकापुराणे—

इष्टापूर्त्तौ स्मृतौ धर्मौ श्रुतौ तौ शिष्टसम्मतौ ।
प्रतिष्ठाद्यं तयोः पूर्त्तं इष्टं यज्ञादिलक्षणम् ।
भुक्तिमुक्तिप्रदं पूर्त्तं इष्टं भोगार्थसाधनम् ।

प्रतिष्ठाद्यं देवताप्रतिष्ठाजलाशयोत्सर्गादि तयोरिष्टापूर्त्तयोः ।

एकाग्निकर्महवनं त्रेतायां यच्च क्रियते ।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ।
वापीकूपतडागानि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्त्तं मर्त्याः प्रचक्षते ।

कृषिगोरक्ष्यवाणिज्यं वैश्यकर्मस्वभावजम् ।
पाशुपाल्यं परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ।
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।

तथा—

श्रेयान् स्वधर्मो विगुणो परधमात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।

स्वधर्मः स्ववर्णधर्मः, स्वाश्रमधर्मः । तथा—

आशंनृस्यं अहिंसा वा प्रसादः संविभागिता ।
श्राद्धकर्मातिथेयश्च सत्यमक्रोध एव च ।
स्वेषु दारेषु सन्तोषः शौचं नित्यानुसूयता ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ।

एकाग्निकर्म हवनं, एकस्मिन्नग्नौ आवसथ्या क्रियते, होमरूपं कर्म त्रेतायां अग्नित्रये ।

साधारणधर्मस्तु महाभारते—

श्राद्धकर्म तपश्चैव सत्यमक्रोध एव च ।
स्वेषु दारेषु सन्तोषं शौचं नित्यानुसूयता ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो मतः ।

चातुर्वर्ण्यस्येति शेषः । तपश्चान्द्रायणादि । तथा-महाभारत एव—

ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभावैर्गुणैः ।
शमो दमस्तपः शौचं शान्तिरार्जवमेव च ।
ज्ञानविज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ।

विज्ञानं यज्ञादिकर्मकौशलम् ।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रकर्म स्वभावजम् ॥

शौर्यं विक्रमशीलत्वम्, अधृष्यत्वापादको गुणविशेषः । दाक्ष्यमुत्साहः । ईश्वरभावः प्रभुत्वम्, आनृशंस्यं अक्रूरत्वम् आत्मज्ञानं नित्यात्मज्ञानम्, तितिक्षा क्षमा । विष्णुः—

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थाऽनुसरणं दया ।

आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनसूया च तथा धर्मः सामान्य उच्यते ।

सामान्यश्चतुर्णामपि वर्णानाम् । गुरुः—

दया क्षमानुसूया च शौचानायासमङ्गलम् ।
अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ।

सर्वसाधारणानि सर्ववर्णसाधारणानि ।

परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आपन्ने रक्षितव्यं च दयैव परिकीर्त्तिता ।
बाह्येह्याध्यात्मिके चैव दुःखेनोत्पादिते क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता ।
न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते सानसूया प्रकीर्त्तिता ।
अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्था च शौचमेतत्प्रकीर्त्तितम् ।

शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कर्त्तव्यमनायासः स उच्यते ।
प्रशस्ताचरण नित्यमप्रशस्तविसर्जनम् ।
एवं हि मङ्गलं प्रोक्तं ऋषिभिस्तत्त्वदर्शिभिः ।
स्तोकादपि प्रदात्तव्यमदीनेनान्तरात्मना ।
अहन्यहनि यत्किञ्चित् अकार्पण्यं हि तत्स्मृतम् ।
यथोपपन्ने सन्तोषः कर्त्तव्योऽत्यर्थवस्तुनि ।
परस्याचिन्तयन्नर्थमस्पृहात्वं प्रकीर्त्तितम् ।

तथा मनुः—

अध्यापनमध्ययनञ्च यजनं याजनन्तथा ।
दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत् ॥
प्रजानां रक्षणं दानमिज्याध्ययनमेव च ।
विषयेष्वप्रशक्तिश्च क्षत्रियस्य समादिशत् ॥
पशूनां रक्षणं दानमिज्याध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिकर्म च ।

एकमेव तु शूद्रस्य प्रभुः कर्मसमादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥

विषयाप्रसक्तिरिन्द्रियजयः । वणिक्पथं वाणिज्यम् । कुसीदं वृध्याधनप्रयोगः । मनुः—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥

व्यासः—

सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमार्जवम् ।
ज्ञानं शौचं दया ध्यानमेष धर्मः सनातनः ।

सत्यं भूतहितं प्रोक्तं मनसो दमनन्दमः ।
तपः स्वधर्मवर्त्तित्वं शौचं सङ्करवर्जनम् ।
सन्तोषो विषयत्यागो ह्रीरकार्यनिवर्त्तनम् ।
क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ।
ज्ञानं तत्त्वार्थसम्बोधः शमश्चित्तप्रशान्तता ।
दयाभूतहितैषित्वं ध्यानं निर्विषयं मनः ॥

अपरार्के—

आराध्यते स्वधर्मेण धर्मोऽनुष्ठानकारणात् ।
तस्मात्तत् प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः ।

देवीपुराणे—

कामक्लेशैर्न बहुभिः न चैवार्थस्य शक्तिभिः ।
धर्मः सम्प्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि ।
प्रत्ययो धर्मकार्येषु तदा श्रद्धेत्युदाहृता ।
नास्ति त्वश्रद्दधानस्य धर्मकृत्यप्रयोजनम् ।

अथवा अन्यमन्युसमुत्थदोषमर्षणम् क्षमा, सौहार्दात् स्वदुःखेष्विव परदुःखै कारुण्यं दया, लौकिकवैदिकविद्याधारणं विज्ञानम्, शरीरोपरतिः शान्तिः, प्रज्ञाप्रसादजं ज्ञानम् ।

## अथ धर्मोत्पत्तिः

वराहपुराणे—

सुतपा उवाच ।

स ससर्ज प्रजाश्चादौ पालनं तास्वचिन्तयत् ।
तस्य चिन्तयतस्त्वङ्गात् दक्षिणाद् धृतकुण्डलः ।
प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः ।
तं दृष्ट्वोवाच भगवान् चतुष्पादं वृषाकृतिम् ।
इत्युक्तः स तमुत्थाप्य चतुष्पादः कृते युगे ।
त्रेतायां स त्रिभिः पादैः द्वाभ्यां वै द्वापरेऽभवत् ।
कलावेकेन पादेन प्रजाः पालयते प्रभुः ।
षड्भेदो ब्राह्मणनां त्रिधा क्षत्रे व्यवस्थितः ।
द्विधा वैश्येषु, शूद्रेषु त्वेकयैव गतः प्रभुः ।

इतिस्वरूपेण धर्मः ।

महाभारते फलतो धर्मो निरूप्यते—

विद्या वित्तं वपुः शौर्यं कुलं जन्म निरोगता ।
संसारोच्छित्तिहेतुश्च धर्मादेव प्रकीर्त्तितः ।

तथा—

अर्थसिद्धिं परामिच्छन् धर्ममेवादितश्चरेत् ।
नहि धर्मादृते ह्यर्थः स्वर्गलोकादि वा स्मृतम् ।
धर्मं चिन्तयमानोऽपि ततः प्राणैर्वियुज्यते ।
ततः स्वर्गमवाप्नोति धर्मस्यैतत्फलं विदुः ।
प्रवृत्तिसञ्ज्ञके धर्मे फलमभ्युदयो मतः ।
निवृत्तिसंज्ञके धर्मे फलं निःश्रेयसं मतम् ।
श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्त्तिमवाप्नोति प्रेत्यचानुत्तमं सुखम् ।

अनुत्तमं सुखमिति । यथा प्राप्तं तत्फलोपलक्षणार्थम् । गौतमः—

वर्णाश्चाश्रमाश्च स्वकर्मनिष्ठां प्रेत्य स्वकर्ममनुभूय ततः शेषेण विशिष्टदेशकुलजातिकुलान् प्रापुः । श्रुतवृत्तवित्तसुखमेधसो जन्मप्रतिपद्यन्ते इति । ततः शेषेणेति तस्यैव कर्मणः शेषेणेति स नृयज्ञो मन्यते । आचार्या पुनः तस्मादन्येन शेषेण कर्मणेति भट्टचरणाः ।

तदुक्तं-गौतमीयेऽपि—तद्दोषस्तस्मात् चित्तापेक्षयेति। मेधावीर्यं वित्तं सर्वतोगामि यथेष्टचेष्टमिति यावत्। विपरीतास्तु नरकादौ पापफलमनुभूय नश्यन्ति। विरुद्धदेशादौ जन्म प्रतिपद्य परेताः भवन्ति।

ऊर्ध्वबाहुः विरौम्येष न च कश्चित् शृणोति मे।
धर्मादर्थश्च कामश्च स किमर्थं न चेष्यते॥
उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखावहम्।
श्रद्दधानाश्च शान्ताश्च धनाढ्याः शुभकारिणः॥
धर्मः प्रजां वर्द्धयति क्रियमाणः पुनः पुनः।
वृद्धप्रजस्ततो नित्यं पुण्यमारभते नरः।

**स्कन्दपुराणे**—

धर्मात्सुखञ्च ज्ञानञ्च यस्मादुभयमात्मवान्।
तस्मात् सर्वं परित्यज्य विद्वान् धर्मं समाचरेत्।

कूर्मपुराणे—

धर्मात् सञ्जायते त्वर्थो धर्मात् कामोऽभिजायते।
धर्मादेव परं ब्रह्म तस्माद्धर्मं समाचरेत्।

स्कन्दपुराणे—

धर्माद्राज्यं धनं सौख्यमधर्मो दुःखसम्भवः।
तस्माद्धर्मं सुखार्थाय कुर्यात् पापं च वर्जयेत्।
लोकद्वयेऽपि यत्सौख्यं तद् धर्मात् प्राप्यते यतः।
धर्ममेकमतः कुर्यात् सर्वकामार्थसिद्धये।
यः कर्म धर्मसंयुक्तं मनसापि विचिन्तयेत्।
स वर्धते यथेच्छातः शुक्लपक्ष इवोडुराट्।
दीर्घकालेन तपसा सेवितेन तपोवने।
धर्मनिर्धूतपापानां संसिध्यन्ति मनोरथाः।
धर्मवृद्धौ च वर्द्धन्ते सर्वभूतानि सर्वदा।
तस्मिन् ह्रसति हीयन्ते तस्माद्धर्मं विवर्धयेत्॥

यथा वेदव्यासः—

कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत्।
न हि धर्मात् भवेत्किञ्चित् दुःप्रापमिति मे मतिः।

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।
शुभकर्माणमायान्ति विवशाः सर्वसम्पदः ।

महाभारते—

धर्मो माता पिता चैव धर्मो बन्धुः सुहृत्तथा ।
धर्मो भ्राता सखा चैव धर्मः स्वामी परात्परः ।
नास्ति धर्मसमो बन्धुः नास्ति धर्मसमः सुहृत् ।
नास्ति धर्मसमो लाभः नास्ति धर्मसमा गतिः ।
यस्माद्धर्मसहायत्वे सेवितव्यः सदा नृभिः ।
धर्मः सतां गतिः पुंसां धर्मश्चैवाश्रयः सताम् ।
धर्मो लोकाश्रयश्चैव प्रवृत्तं सचराचरम् ॥

मनुः—

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्त्तिमवाप्नोति प्रेत्यचानुत्तमं सुखम् ।
एक एव सुहृद्धर्मो निधनेप्यनुजाति यः ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ।
तस्माद्धर्मसहायार्थं नित्यं सञ्चिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥

योगी—

कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ॥

मनुः—

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्म्रो हतोऽवधीत् ॥

मनुः—

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धर्ममक्षय्यमाचारो हन्त्यलक्षणम् ।

आचारः आवश्यकं कर्म । अक्षय्यं अतिप्रभूतमित्यर्थः । अलक्षणं अशुभसूचकम् देहचिह्नस्कन्धादौ तिलकात्मकाति, तत्त्वितरधर्ममनोरथफलं हन्तीत्यर्थः ।

वशिष्ठः—

सर्वलक्षणहीनोपि समुदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ।

हारीतः—

आचारः परमो धर्म इति वेदविदो विदुः ।
न ह्यनाचारिणो लोकाः प्रवदन्ति मनीषिणः ।

यमः—

काम्यैः केचिद्यज्ञदानैस्तपोभिर्लब्धालोकान् पुनरायान्ति जन्म ।
कामैर्मुक्ताः सत्ययज्ञाः सुदाना तपोनिष्ठा अक्षयान् प्रयान्ति लोकान् ।

अनेन कामनासदसद्भावनिबन्धनाः फलभेदाः समसूचिता भविष्यन्ति ।

फलं विनाप्यनुष्ठानं नित्यानामिष्यते स्फुटम् ।
काम्यानां स्वफलार्थन्तु दोषघातार्थमेव तु ।
नैमित्तिकानां करणं त्रिविधं कर्मणां फलम् ।
क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ।
अनुत्पत्ति तथाचान्ये प्रत्यवायस्य मन्वते ।
नित्यक्रियं तथाचान्ये अनुषङ्गफलश्रुतिम् ।

अत्र बृहस्पतिः—

श्रुतिस्मृती च आज्ञे द्वे द्विजानां न्यायवर्त्मनि ।
मार्गमुज्झन्ति तद्द्वारा प्रपतन्ति पथश्च्युताः ।

न्यायवर्त्मनि न्यायो स्वधर्म इति यावत् ।

महाभारते—

बाल एव चरेद्धर्मं अनित्यं जीवितं यतः ।
फलानामिव पक्वानां शश्वत्पतनतो भयम् ॥
न कामान्न च संरम्भात् नोद्वेगाद्धर्ममुत्सृजेत् ।
धर्म एव परे लोके इह चैवाश्रयः सताम् ।
इदञ्च तत्त्वं परमं ब्रवीमि पुण्यप्रदं तात इहावशिष्टम् ।
न जातु कामान्नभयान्न लोभात्, धर्मं जह्याज्जीवितस्यापि हेतोः ।

व्यासः—

धर्मादपेतं यत्कर्म यस्यां यस्यां महा[१]फलम् ।
न तत्सेवेत मेधावी शुचिः कुसलिलं यथा ।
सुदुर्लभमिदं प्राप्य मानुषं देहमध्रुवम् ।
न कुर्यादात्मनः श्रेयस्तेनात्मा वञ्चितश्चिरम् ।
तृणपत्राग्रगाम्याम्बुविन्दुवच्चञ्चले यतः ।
जीवितव्ये धने विप्रास्तस्माद्धर्मं समाचरेत् ।

मत्स्यपुराणे—

अनित्यं जीवितं यस्मात् वस्तु चातीव चञ्चलम् ।
केशेष्विव गृहीतस्तु मृत्युना धर्ममाचरेत् ॥

व्यासः—

युवैव धर्ममन्विच्छेदनित्यं जीवितं यतः ।
कृते धर्मे भवेत् कीर्तिरिह प्रेत्य च वै सुखम् ।
यथेक्षु हेतोरपि सेवितं पयः तृणानि वल्लीरपि च प्रसिञ्चति ।
तथा नरो धर्मपदेन सञ्चरन् सुखञ्च कामाँश्च वसूनि चाश्नुते ॥

महाभारते—

एकस्मिन्नप्यतिक्रान्ते दिवसे धर्मवर्जितः ।
दस्युभिर्मुषितस्येव युक्तमाक्रन्दितुं चिरम् ।
अजरामरवत्प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ।
यस्य त्रिवर्गशून्यस्य दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ।
तस्मात्सर्वात्मना धर्मं नित्यमेव समाचरेत् ।
मा धर्मविमुखः प्रेत्य तमस्यन्धे पतिष्यति ।
नावसीदति चेद्धर्मः कपालेनापि जीवतः ।
आत्मास्मीत्येव मन्तव्यं, धर्मवित्ताः हि साधवः ॥

---

१. यदा फलम् ख पाठः ।

आदित्यपुराणे—

मानुष्यं यः समासाद्य स्वर्गमोक्षप्रदायकम् ।
द्वयोर्न साधयत्येकं स मृतस्तप्यते चिरम् ।
यावत्स्वस्थशरीरत्वं तावद्धर्मं समाचरेत् ।
अस्वस्थश्चोदितोऽप्यन्यैर्न किञ्चित्कर्त्तुमुत्सहेत् ।

अत्र मनुवशिष्ठौ—

दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥

दुराचार इति निन्दिताचार उच्यते ।

आपस्तम्बः—

यत्र तु प्रीत्युपलक्षितः प्रवृत्तिर्न तत्र शास्त्रमस्ति, तदनुवर्त्तमानो नरकाय राध्यति ।

अत्र तु प्रीत्युपलक्षित इति लौकिकप्रमाणत्वं, प्रीतिसाधनत्वज्ञानात् यत्र प्रवर्त्तते, तत्र शास्त्रव्यापारः नरकाय राध्यति । नरकवशो भवति । राध्यति वसगमन इति निरुक्तकारवचनात् ।

अङ्गिराः—

स्वाभिप्रायकृतं कर्म यत्किञ्चित् ज्ञानवर्जितम् ।
क्रीडाकर्मैव बालानां तत्सर्वं निःप्रयोजनम् ।

ज्ञानवर्जितम् शास्त्रीयज्ञानवर्जितम् ।

आपस्तम्बः—

नेमं लौकिकमर्थं पुरस्कृत्य धर्मान् चरेत्, निष्फलाभ्युदया भवन्ति । इमं धनं कीर्त्यादिपुरस्कृत्य उद्दिश्याभ्युदये शास्त्रीयफलविषयः ।

महाभारते—

यस्य नोक्ता मतिगती धर्ममार्गानुसारिणी ।
तमाहुः पुण्यकर्माणमशोच्यं मित्रबान्धवैः ।
सोपानभूतं धर्मस्य मानुष्यं प्राप्य दुर्लभम् ।
तथात्मानं समादध्यात् न भ्रश्येत यथा पुनः ।

तथा —

धर्माय येन्यसंपत्तिं ( यन्ति ) बुद्धिमोहोक्षिता नराः ।
अवशा गच्छतां तेषामनुपातो विनश्यति ।

मनुः—

तस्माद्धर्मसहायार्थं नित्यं सञ्चिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥

तमः पापम् । तथा—

सीदन्नपि हि धर्मेण मनो धर्मे निवेशयेत् ।
अधार्मिकाणां पापानामाशु पश्यन् विपर्ययम् ।

अधार्मिकाणामविहितकर्मकारिणां यथात्तपःत्यागेनेनेति । एतच्चातिनिन्दार्थी । अत्रैव तैत्तिरीयश्रुतिरपि—

धर्मोऽपि विश्वस्य जगतः प्रतिष्ठा; लोके धर्मिष्ठं प्रजाः उपसर्पन्ति, धर्मेण पापमपनुदति । धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परं वदन्तीति ।

**फलतो धर्मनिरूपणम् ।**

**अथ प्रमाणतो निरूप्यते**—तत्र वदति मनुः—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनां आत्मनस्तुष्टिरेव च ॥ इति ।

नन्वखिलस्य वेदस्य धर्ममूलत्वे ज्ञानप्रतिपादकोपनिषद्भागस्यापि धर्ममूलत्वं स्यात् । तथात्वे वा कर्मकाण्डज्ञानकाण्डविभागो न स्यात् । अतः कथं वेदस्य सर्वस्य धर्ममूलतामात्रलक्षणाया मनुस्मृतेर्यन्मनुरवदत्तद्भेषजमिति वेदेनैवार्थं वेद इतिकथमावेद्यते, सत्यम्,

अयमत्र वाक्यार्थः अखिल इति विधिनिषेधात्मकतया धर्मशब्दोऽजहत्स्वार्थलक्षणया धर्मादिपरः । अथवा एवं सर्वस्य वेदस्य धर्ममूलता । नचोपनिषदां धर्ममूलत्वाभाव इति वाच्यम्, तासामपि तन्मूलत्वात् । धर्मस्य च प्रवृत्तिनिवृत्तिसंज्ञकतया द्वैविध्यात् । श्रेयःसाधनस्यैव धर्मत्वान्निवृत्तिसञ्ज्ञस्यापि निःश्रेयःसाधनत्वात् ।

शीलमद्रोहः ।

अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा ।
अनुग्रहश्च ज्ञानञ्च शीलमेतद्विदुर्बुधाः ।

इति महाभारताभिधानात् ।

हारीतश्च ब्राह्मण्यादेव पितृभक्तता, सौम्यता, अपरोपतापिता, अनसूयता; मृदुता, अनसूयता, मृदुता अपारुष्यं, मैत्रता, प्रियवादित्वं, कृतज्ञता, शरण्यता, प्रशान्तिश्चेति यर्थोदशविधं शीलमिति। अत्र भावप्रत्ययान्ततयोक्तिस्तु क्रियातिरिक्ततां बोधयत् स्वभावतामेव ज्ञापयति इत्याचार्यानुष्ठानलक्षणा क्रियारूपा वासङ्ग्भेदोऽपि सिद्धः। आचारश्च विवाहादिकङ्कणबन्धनादिरूपः। पुरुषविशेषस्वभावस्त्वन्यथानुपपद्यमानः स्वस्य श्रेयःसाधनतामवगमयतीति आत्मन एव धर्मं प्रमापयेदिति आत्मतुष्टिरत्र धर्मत्वसन्देहे सति वैदिकसंस्कारवासितान्तःकरणानां साधूनामेकत्रपक्षे मनसः परितोषः।

तदुक्तं भट्टाचार्यैः—

एतेन वैधिकानन्तधर्मधीसंस्कृतात्मनाम्।
आत्मतुष्टेः प्रमाणत्वं सिद्धं धर्मत्वसिद्धये। इति।

योगी—

श्रुतिस्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम्। इति।

स्वस्यात्मनो धर्ममूलम्। विष्णुपुराणे—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणं च विद्यास्त्वेताश्चतुर्दश इति। तथा—
पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश इति।

अयमर्थः—विधीनां पुरुषार्थज्ञानानां धर्मस्य च स्थानानि बोधकतया व्यवस्थापकानीति। तत्र क्वचिदलौकिकमर्थं प्रमाणयन्त्यो धर्मेऽपि प्रमाणानि। वेदवेदाङ्गेतिहासपुराणतर्कमीमांसाधर्मशास्त्राणि (गुणदेश) कुलगणदेशजातिवर्णधर्मपाखण्डाश्रमश्रोत्रियधर्मव्यवस्थाप्रवर्त्तकानि इति सुमन्तुस्मरणात्। चूडाकरणकालादिकुलधर्मः, वक्ष्यमाणो गणधर्मः स्त्रीणां वासोविन्यासविशेषादयो देशधर्माः। यथा—स्वसारथ्यादयो जातिधर्माः, उपनयनादि वर्णधर्माः भिक्षादण्डादयः। पाखण्डसम्बन्धव्युदासाय पारस्करः–विधिर्विधेयस्तर्कश्च वेदः षडङ्गमेके इति।

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थञ्च, विद्यादष्टदशैव ताः॥ इति।

दृष्टार्थानामपि कथञ्चिदलौकिकार्थप्रतिपादकतया धर्मप्रामाण्यम्।

मनुर्यमो वशिष्ठोत्रिर्दत्तो विष्णुस्तथाङ्गिरा, ।
उसना वाक्पतिर्व्यास आपस्तम्बश्च गौतमः ।
कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः।
संवर्त्तश्चैव शङ्खश्च हारीतो लिखितस्तथा ।
एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ।
तान्येतानि प्रमाणानि न हन्तव्यानि हेतुभिः ॥ इति ।

आदिशब्दात् बुद्धादयः । तथा भविष्यति ।

अष्टादशपुराणेषु यानि वाक्यानि पुत्रकाः ।
तान्यालोच्य महाबाहो तथा स्मृत्यन्तरेषु च ।
मन्वादिस्मृतयो यास्तु षट्त्रिंशत् परिकीर्त्तिताः ।
तासां वाक्यानि क्रमशः समालोच्य ब्रवीमि ते ।

इतीश्वरवाक्ये मन्वादिषट्त्रिंशत् स्मृतयः । षट्त्रिंशदित्युच्यते । यानि पुर्नमहाभारतरामायणविष्णुधर्मशिवधर्मप्रभृतीनि गृह्यपरिशिष्टानि च तान्यपि स्मृत्यन्तरेषु चेत्यनेनाभिहितम् ।

अष्टादशपुराणानि रामस्य चरितन्तथा ।
विष्णुधर्माणि शास्त्राणि शिवधर्माश्च भारत ।
कृत्स्नश्च पञ्चमो वेदो यन्महाभारतं स्मृतम्
सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते ।
जयेति नाम चैतेषां प्रवदन्ति मनीषिणः । इति ।

अथ सदाचारे शङ्खः । आम्नायप्रामाण्याद् आचारः सर्वेषामुपदिश्यते आचार्यैः । विष्णुपुराणे—

साधवः क्षीणदोषास्स्तुत्यच्छन्दाः साधुवाचकाः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥

वशिष्ठः—

पारम्पर्यागतो येषां वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणाः ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ इति ।

वेद इति शास्त्रोपलक्षणम् शास्त्रञ्च मीमांसाभाष्यादि । अर्थावबोधपर्यन्ततया अधीतिविधिना[१] अध्ययनविधेः अनुक्तञ्च सूत्रभाष्यवार्त्तिककारादिभिः । तच्चाध्ययनं मीमांसापर्यन्तमभिप्रेतमिति ।

---

१. बुद्धिना ख पाठः ।

अथ पुराणलक्षणानि मत्स्यः—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ।

सर्गः सृष्टिः, प्रतिसंहारः प्रतिसृष्टिः ।

विष्णुपुराणे—

अष्टादशपुराणानि पुराणज्ञाः प्रचक्षते ।
ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतन्तथा ।
तथान्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम् ।
आग्नेयमष्टमञ्चैव भविष्यन्नवमं स्मृतम् ।
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ।
वाराहं द्वादशञ्चैव स्कान्दञ्चैव त्रयोदशम् ।
चतुर्दशं वामनञ्च कौर्मं पञ्चदशं स्मृतम् ।
मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डञ्च ततः परम् ।

तथैव पाद्मे पुराणे-यज्ञप्रोक्तं नरसिंहोपवर्णनम्—

तदष्टादशसाहस्रं नारसिंहमिहोच्यते ।
तृतीयं[१] नादमुद्दिष्टं कुमारेण तदु होच्यते ।
नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वार्ण्यते ।
नन्दापुराणं तल्लोके नन्दाख्यमिति कीर्त्यते ।

कूर्मपुराणे—

अथान्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ।
तृतीयं नादमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वासोक्तमाश्चर्यं नारदोक्तमतः परम् ।
कापिलं मानवञ्चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं चैव कपिलाह्वयमेव च ।
माहेश्वरन्तथासाम्बं सौरं सर्वार्थसञ्चयम् ।

---

१. ख पु० नास्ति ।

पराशरोक्तं प्रथमं तथाभागवताह्वयम् ।
इदमष्टादशप्रोक्तं पुराणं कौर्ममुत्तमम् ।

मनुः—

प्रत्यक्षमनुमानञ्च शाब्दञ्च विविधागमम् ।
त्रयं संवेदनं कार्यं धर्मशुद्धिमभीप्सताम् ।
आर्षं धर्मोपदेशञ्च धर्मशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ इति ।

**अथ निमित्ततो धर्मो निरूप्यते** —तत्र शंखधर्मलक्षणम्-देशकाल उपायो द्रव्यं श्रद्धापात्रं त्याग इति समस्तेषु धर्मादयः साधारणोऽन्यथा विपरीतः । श्रद्धापात्र-सम्पन्नो धर्मः कालपेक्षः। श्रद्धाद्रव्योत्पत्तिरिति कालस्तन्मूलो देशः। देशो ब्रह्मावर्त्तादि उपाय इतिकर्त्तव्यता द्रव्यस्ववृत्युपार्जितमास्तिक्यबुद्धिश्च । श्रद्धाविद्यातपोवित्त-सम्पन्नेषु साधारणधर्मोत्पत्तिः, अन्यथा । धर्मानुदयः श्रद्धाद्रव्योत्पत्तिरिति काल इति । अग्रमपि संक्रान्त्यादिवद् दानादौ धर्मकालः । तन्मूलो देशः । एवंविधकाल-सम्पन्नो देशो विविधधर्मस्य निष्पादक इति निमित्ततोपि धर्म इति ।

**इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन
समस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धर-
श्रीमन्महाराजाधिराजश्रीदलपतिराज-
विरचिते श्रीनृसिंहप्रसादे ।
धर्मभेदनिरूपणन्नामप्रकरणम् ॥**



## परिभाषा

**अथ संस्कारसारे प्रथमे परिभाषा विलिख्यते ।**

धर्मप्रामाण्यनिर्णीतिः प्रक्रिया प्रथमं मता ।
धर्मभेदप्रकरणं द्वितीयं तदनन्तरम् ।
पुण्याहवाचनं पूर्वं मधुपर्कं ततः परम् ।
वृद्धिश्राद्धं ततो वक्ष्ये सर्वकर्मोपयोगि हि ।
तृतीये तु प्रकरणे विभागः कर्मणां कृतः ।
गर्भाधानं चतुर्थन्तु पुंसूतिः पञ्चमे कृता ।
सीमान्तोन्नयनं षष्ठे सप्तमेऽनवलोमनम् ।
सोष्यन्ती कर्ममुख्यानां बहूनां प्रतिपादनम् ।
अष्टमे जातकर्मादि बहुकर्मनिरूपणम् ।
नवमे नामकरणप्रभृतीनि यथाक्रमम् ।
दशमे तु प्रकरणे उक्तं निष्क्रमणादिकम् ।
एकादशप्रकरणे नामान्नप्राशनं मतम् ।
चूडाकरणमुख्यानां द्वादशे प्रतिपादनम् ।
त्रयोदशे चोपनीतिवेदव्रतनिरूपणम् ।
चतुर्दशे तु नियमान् वक्ष्यन्ते ब्रह्मचारिणः ।
समावृत्तस्य धर्मास्तु तथोक्तास्तदनन्तरम् ।
षोडशे तु प्रकरणे स्नातकस्य निरूपणम् ।
उच्यते सप्तदशमे विवाहः सप्रकारकः ।
अष्टादशे वनस्थस्य वक्ष्यते धर्ममात्रकम् ।
एकोनविंशे प्रस्थाने यतिधर्मनिरूपणम् ।
विंशे प्रकरणे सर्वे धर्माः साधारणा अपि
राजधर्माः ततो वैश्यशूद्रस्यापि तथा परे ॥
ततो जातिविवेकाख्यं प्रक्रिया तु समाश्रितः[१] ।
आश्रमाणाञ्च धर्माणां धर्माः सर्वे विशेषतः ।
द्वाविंशतिप्रकरणैः निरूप्यन्ते यथामति ।
आश्वलायनापस्तम्बयाज्ञवल्क्यमतानुगाः ।
श्रीनृसिंहप्रसादेन क्रियाः कुर्वन्तु नित्यशः ।
तत्र गृह्यानुसारेण कारिका दर्शनेन च ।
ज्योतिःशास्त्रादि दृष्ट्वा च यथामति विरच्यते ॥

---

१. सतः ख पु० पाठः ।

## पुण्याहवाचनम्

**अथ पुण्याहवाचनमभिधीयते।** इदञ्च सर्वकर्मादावनुष्ठेयतया प्रतीयते। श्रीमन्नृसिंहप्रसादस्यापि विशिष्टशुभकर्माभिधायकत्वात्, संस्कारसारे गर्भाधानादिसंस्कारसंस्कृतविशिष्टकुलोत्पन्नविशिष्टत्रैवर्णिकस्यैवोपनयनादिसंस्कारविधेः तेषां गर्भाधानादिसंस्काराणां शुभधर्मकत्वात्, तस्यादावप्यनुष्ठेयत्वात्, एतस्यापि शुभकर्मतया तदादावपि वक्तव्यत्वात् सर्वग्रन्थादौ एव वक्तव्यताशिष्टाचारानुराधात् प्रतीयते। तत्र चायं प्रकारः। चतुर्वेदाभिज्ञश्रोत्रियब्राह्मणानाहूय तोरणादिना मण्डपं सम्यगलङ्कृत्य शोभनगृहे मण्डपे वा श्वेताक्षतादिना स्वस्तिकमण्डलमारचय्य सम्यगलङ्कृत्य तत्र नीराजनादि सर्वसामग्रीं सम्पाद्य ब्राह्मणान् गन्धपुष्पादिभिः सम्यगलङ्कृत्य स्वस्तिवाचयित्वा ततः पूर्वं इष्टकुलदेवतां नमस्कृत्य अव्रणं नूतनं कलशमानीय तं च गन्धादिभिः समलङ्कृत्य पुष्पमालादिभिर्वेष्टयित्वा सुवर्णपूर्णं विधाय सुवर्णकलशमेव सम्यगभ्यर्च्य कलशस्य मुखकण्ठादौ विष्णुशिवब्रह्मादिदेवानध्यास्य ऋग्यजुःसामाथर्वलक्षणैश्चतुर्भिर्वेदैः कलशमाश्रितं कृत्वा कलशकुक्षौ च **'साग्रं समुद्रज्येष्ठे'** त्यादिभिरभिमन्त्र्य अत्र गायत्र्यादिसम्प्रार्थनां विधाय जगदीश्वरं सम्प्रार्थ्य पुण्याहं वाचयेत्। तदाहाचार्यः—स्मृतिरूपेण

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः श्रिताः।
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः।
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः।
अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः।
सर्वेष्वारम्भकालेषु त्रयस्त्रिभुवनेश्वराः।
देवाः दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः।
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः।
तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि।
सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तु ते।

इत्युच्चर्याशिषः प्रार्थयेत्। सत्या एता अशिषः सन्तु। इत्याशिषं गृहीत्वा ब्राह्मणाः सोङ्कारं, क्षत्रियवैश्यास्तु निरोंकारं पुण्याहं वाचयेयुः। तमेव प्रकारमाह वेदव्यासः—

सम्पूज्य गन्धमाल्याद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् ।
धर्मकर्मणि मङ्गल्ये संग्रामाद्भुतदर्शने ।
पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं कुर्यात्क्षत्रियवैश्ययोः ॥

काश्यपः—लोके भूतिकर्मसु तान्येव वाक्यानि स्युर्यथा पुण्याहं समृद्धम् इति। भूतिकर्मसु सम्पत्करकर्मसु स्वस्तिवाचनादिस्थितिं यावत्। एतदादीनि प्रणवादीनि। पुण्याहवाचनमुक्तम् बह्वृचपरिशिष्टे। अवनिगतजानुमण्डलं कमलमुकुलसदृशम् अञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेनायुः प्रमाणेन पुण्याहं दीर्घमायुरस्तु। शिवा आपः सन्तु। सौमनस्यमस्तु। अक्षतञ्चारिष्टं[1] चास्तु। गन्धाः पान्तु। सुमङ्गल्यं चास्तु। पुष्पाणि पान्तु, सुश्रियमस्तु। अक्षताः पान्तु, आयुष्यमस्तु, ताम्बूलानि-पान्तु, ऐश्वर्यमस्तु। दक्षिणाः पान्तु, ऐश्वर्यमस्तु। दीर्घमायुः शान्तिः पुष्टिः-तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रञ्चायुष्यञ्चास्तु; यं कृत्वा सर्ववेद-देवयज्ञक्रियाकर्मारम्भा शुभाः शोभनाः प्रवर्त्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये। वाच्यताम्। द्रविणोदा द्रविणसस्तुरस्य। सविता पश्चात्तात्। नवो नवो भवति। उच्चदिवि दक्षिणावन्तो। अस्तुरिति एताः ऋचः पुण्याहे-ब्रूयात्। व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्, समाहितमनसः स्मः। प्रसीदन्तु भवन्तः। प्रसन्ना स्मः। (अन्तः) शान्तिरस्तु। पुष्टिरस्तु। तुष्टिरस्तु। वृद्धिरस्तु। अविघ्नमस्तु। आयुष्यमस्तु। आरोग्यमस्तु। शिवङ्कर्मास्तु। कर्मसमृद्धिरस्तु। पुत्रसमृद्धिरस्तु। इष्टसमृद्धिरस्तु। इष्टसम्पदस्तु। धनधान्यसमृद्धिरस्तु। इष्टसम्पदस्तु। अरिष्टनिरसनमस्तु। यत्पापं तत्प्रतिहतमस्तु। यत् श्रेयस्तदस्तु। उत्तरे कर्मणि अविघ्नमस्तु। उत्तरे अहरहरतिवृद्धिरस्तु। उत्तरोत्तराःक्रियाः सम्पद्यन्ताम्। तिथिकरणमुहूर्तें सनक्षत्रे सग्रहे सदेवते प्रीयेताम्। अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम्। इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम्। अग्निपुरोगाः विश्वेदेवा प्रीयन्ताम्। वशिष्ठपुरोगाः ऋषिगणाः प्रीयन्ताम्। महेश्वरपुरोगाः उमामातरः प्रीयन्ताम्। अरुन्धतीपुरोगमा एकपत्न्यः प्रीयन्ताम्। सर्वाश्च कुलदेवताः प्रीयन्ताम्।

---

१. अरिष्टं सूतिकागृहमित्यमरः।

( बहिः ) हताश्च ब्रह्मद्विषः हताश्च परिपन्थिनः हताश्च विघ्नकर्त्तारः शत्रवः पराभवं यान्तु। घोराणि साम्यन्तु, पापानि साम्यन्तु। साम्यन्त्वीतयः। (अन्तः)शुभानि वर्द्धन्ताम्। शिवा आपः सन्तु। शिवा ऋतवः सन्तु। शिवाः वनस्पतयः सन्तु। शिवातिथयः सन्तु। अहोरात्रे शिवे स्याताम्। निकामे निकामे नः पर्जन्यो वर्षतु। फलवत्यो न ओषधयः पच्यन्ताम्। योगक्षेमो नः कल्पताम्। शुक्राङ्गारकबुध-बृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम्। भगवान् नारायणः प्रीयताम्। भगवान् पर्जन्यः प्रीयताम्। भगवान् स्वामी महासेनः प्रीयताम्। पुण्याहकाले वाचयिष्ये। वाच्यताम्। उद्गातेव शकुने सामगायसि। यान्यज यजति यद्यत्पुण्यं नक्षत्रं तद्वत् कुर्वतो मयूखं यदा वै सूर्य उदेति अधिनक्षत्रम्। नेति यावति तत्र तु यो गच्छेत् यत्र यत्पश्येत् नानुकुर्वीत् यावत् कारी[1]स्यात् पुण्याह एव कुरुते। पुण्याहं भवन्तो ब्रुवन्तु। ओंम् पुण्याहम्। स्वस्तये वायुं उपब्रवामहे। आदित्य उदयनीया।

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्ता-र्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु। अष्टौ देवा वसवो सोम्यासः चतस्रो देवी रजसा स्रविष्टा न यज्ञं या उ रजसः पुरस्तात् संवरणिवास्तममृतः स्वस्ति भवन्तो ब्रुवन्तु। आयुष्मते स्वस्ति। अध्यामस्तोमं सर्वासमृद्धिमृद्धयास्य हव्यै-र्नगसोपसद्य मित्रं देवं मित्रधेयं नो अस्तु। अनुराधां च हविषा वर्धयन्तः शतं जीवेम शरदः शतमदीना०। त्रीणि त्रीणि वै देवानामृध्यानि त्रीणि छन्दांसि चयन-मवलोका समृद्धामेव तद्वीर्यं एषु प्रतितिष्ठति ऋद्धिं भवन्तो ब्रुवन्तु। ऋध्यताम्। श्रिये जातः श्रिय एवं न यस्मिन् ब्रह्मा जय तत्सर्वमेतदनुं लोकमिदमूञ्च सर्वं तत्त्वनक्षत्रमभिजिद्विजित्य श्रियं दधात्वरुणीयमानः आबध्नीय, मन्त्रं मे गोपाय ऋषयस्त्रयो वेदा विदुः यजुः सामानि यजूंषि सा हि श्रीरमृतासताम् श्रीरस्त्वि-भवन्तो ब्रुवन्तु। अस्तु श्रीः। पुण्याहं समृद्धिरस्तु। भगवान् प्रजापतिः प्रीयताम्।

**इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते नृसिंहप्रसादे संस्कारसारे पुण्याहवाचनम्।**

---

१, ख. पु. नास्ति।

## अथ मधुपर्कः

**अथ मधुपर्कोऽभिधीयते ।।** तत्र प्रयोगः षडर्घ्याः भवन्ति । आचार्यऋत्विग्-वैवाह्यराजप्रियस्नातका इति कात्यायनसूत्रे षण्णां मधुपर्कार्हतयाऽभिधानात्तेषां गृहमागतेभ्यः किञ्चिन्निमित्तागमननिमित्तं मधुर्पकं वरणं श्रौतविधिना करिष्ये इति सङ्कल्प्य उक्तलक्षणं दर्भद्वयं गृहीत्वा विष्टरो विष्टरो विष्टर इति त्रिर्निवेद्य आसनार्थमाचार्यादिभ्यो दत्वा चाचार्यादयोऽपि तत्रोदग्ग्रेषु दर्भेषु अहं वर्ष्मसु जात्वानामिति मन्त्रमुच्चार्योपविश्याथवा मन्त्रेण पादाभ्यां विष्टरमाक्रम्योपवेश्यानेन पाद्यं पाद्यं पाद्यमिति त्रिर्निवेदितजलेन क्रमात् प्रक्षालितदक्षिणादक्षिणचरणो लौकिकेनोदकेनाचम्य पूर्ववद्विर्निवेदितमर्घ्यं अञ्जलिना प्रतिगृह्य ततस्त्रिर्निवेदिताचमनीयस्यैकदेशं गृहीत्वा अमृतोपस्तरणमसीति मन्त्रेण त्रिः पीत्वा लौकिकजलेनाचम्य मध्येमार्गमानीयमानं मधुपर्कं 'मित्रस्य त्वा चक्षुषा प्रतीक्ष्य' इत्यपेक्ष्य मधुपर्को मधुपर्को मधुपर्क इति त्रिर्निवेदितं मधुपर्कं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिति तदञ्जलिना प्रतिगृह्य मधुवाता इतिमन्त्रेण मधुर्सर्पिषी वीक्ष्य तन्मात्रं सव्यहस्ते गृहीत्वा अङ्गुष्ठोपकनिष्ठाभ्यां मधुपर्कं त्रिःप्रदक्षिणमालोड्याङ्गुलिगतं मधुपर्कं कर्णश्च वस्त्वा गायत्रेण छन्दसा अक्षयन्त्विति पुरस्तान्निमृ ज्य रुद्रास्त्वां त्रैष्टुभेन छन्दसा भक्षयन्त्विति मंत्रेण दक्षिणतस्त्वादित्यास्त्वा जागतेन छन्दसा भक्षयन्त्विति, पश्चिमतो विश्वेदेवा आनुष्टुभेन छन्दसा भक्षययन्त्विति, उत्तरतो विसृज्य । भूतेभ्यस्त्वेति प्रत्युद्ग्रहणमुच्चरन् मध्यात्त्रिरुत्क्षिप्य मधुपर्कपात्रं भूमौ निधाय विराजो दोहोसीति मधुपर्कैकदेशं गृहीत्वा प्राश्य लौककेनोदकेनाचम्य पुनरेकदेशं गृहीत्वा विराजो दोहमशीयेति प्राश्य पूर्ववदाचम्य पुनः पूर्ववद् गृहीत्वा मे दोहःपाद्यायै विराज इति प्राश्य पूर्ववदाचम्य मधुपर्कशेषमुदङ्मुखो ब्राह्मणाय दद्यात् । तदाहुर्जाबालिकात्यायनादयः—

वैवाह्यमृत्विजं चैवं श्रोत्रियं गृहमागतम् ।
अर्हयेन्मधुपर्केण स्नातकं गुरुमेव च ।। १ ।

विश्वामित्रः—

सुपूज्य मधुपर्केण ऋत्विजः कर्म कारयेत् ।
अपूज्य कारयत् कर्म किल्विषो नैव पूज्यते ।

तद्विधिस्तु कात्यायनसूत्रे--षडर्घ्या भवन्ति । आचार्यः ऋत्विग्वैवाह्यो

राजा प्रिय स्नातक इति संवत्सरानर्हयेयुः। वक्ष्यमाणास्तु ऋत्विज आसनमादाय साधु भवानास्तामर्चयिष्यामि भवन्तमित्याहरन्ति विष्टरं पाद्यं पादार्थमुदकमर्घ्यमाचमनीयं मधुपर्कं दधिमधुघृतमपि विहितम्। कांस्येनान्यस्त्रिस्त्रिः प्राह विष्टरादीनि विष्टरं प्रतिगृह्णाति। वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः इमं तमधितिष्ठामि यो मा कश्चाभिपदासति इत्यनेनोपविशति। पादयोरन्यं विष्टर आसीनाय सव्यपादं प्रक्षाल्य दक्षिणं प्रक्षालयति। ब्राह्मणश्चेद्दक्षिणं प्रथमं विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विरोजो दोहः इत्यर्घ्यं प्रतिग्रह्णात्यापस्थमृष्माभिः सर्वान् कामानवाप्नुयात् इत्यनेनाभिमन्त्रयते। समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छतः। आदिष्टास्माकं विसन्दामी परासे विमत्यय:। इत्याचम्याद्यामागन्यत्रासि सुवर्चसा तं मा कुरु प्रियम्। प्रजानामधिपतिं पशूनामरिष्टिं तनूनामिति। मित्रस्य त्वेति मधुपर्कं प्रतीक्ष्यते। देवस्य त्वेति प्रतिगृह्णाति। सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिःप्राश्नाति। यन्मधुनो मधव्यं परमरूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधुव्यान्नादासानीति। मधुमतीभिर्वा प्रत्यृचम्। पुत्रयति चासिने वोत्तरत आसीनायोच्छिष्टं दद्यात्। सर्वं वा प्राश्नीयात्। प्राग्वा संञ्चरेदिति नयेदाचम्य प्राणान् संमृशति। वाङ्म आस्येनासो प्राणोऽक्ष्णो चक्षुः कर्णयोः श्रोत्रं बाह्वोः बलमुर्वोरोजौरिष्टानि मेऽङ्गानि तनूतस्त्वा सहत्याचान्तोदकाय शासमादाय गौरिति-त्रिः प्राह प्रत्याह—माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः प्र नु वोचं चिकितुषे जनाय मागामदितिं वधिष्ठ। मम चायुष्यं च पाप्मान ँहनोमीति यद्यालभेताथ च सिमृत्सेक्रन् ममात्रायुष्यं च पाप्मा हता ँ उत्सृज तृणानि अत्त्विति ब्रूयात्। ना त्वोवा मा ँ सोऽर्वस्यादधियज्ञमधिविवाहं कुरुतेत्येवं ब्रूयात्।

अथ सकृत्संवत्सरस्य सोमेन यजेत घृताघ्र्याहीं एवैनं वा यजेयुः नाकृतायाघ्र्या इति श्रुतेः। अस्यार्थः—आसनमाहार्यंत्येत् सुबोधम्। साधु भवानित्यादिकमर्घ्यं प्रत्यध्येषणम्। आहरंत्यर्घ्यं पितृसम्बन्धि पुरुषोऽभिप्रायेण बहुवचनम्। विष्टरो[1] चिछन्नाग्रपञ्चविंशतिकुशपत्रकृतः। तथा च परिशिष्टे—

कतिभिस्तु भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः।

---

१. रश्मुपठः।

प्रथमविष्टर उपवेशनार्थः। पद्यति पादार्घ्यं द्वितीयं विष्टरम्। पादार्घ्यमुदकं अर्घ्यः स्यात्। आचमनार्थमुदकमेव। मधुपर्कः—दधिमधुघृतं कांस्यभाजने तेन वा पिहितम्। अर्घार्हपितृव्यतिरिक्तो अन्य एव विष्टरादीनि त्रिस्त्रिः प्राह विष्टरो विष्टरो विष्टरः। प्रतिगृह्णात्येवं। अर्घ्यस्तूक्तमेव। विष्टरं प्रतिगृह्य वर्ष्मोऽस्मीति मन्त्रेण तत्रोपविशति। पादयोरन्यमिति तेन च पादप्रक्षालनानन्तरं द्वितीयविष्टरदानम्। तथाचोत्तरसूत्रे विष्टर आसीनाय सव्यपादं प्रक्षाल्य दक्षिणं प्रक्षालयतीति। एकस्मिन् विष्टर आसीनस्य पादप्रक्षालनमुपदिश्यते। ब्राह्मणश्चेदर्घ्यो भवति। तदा दक्षिण-पादं प्रथमं प्रक्षालयेत्। विराजो दोहोसीति मन्त्रेण जलं गृहीत्वा प्रक्षाल्य एव। आपस्थ इति मन्त्रेण अर्घ्यं प्रतिगृह्णाति। अर्घोदकं निनयत्स-मुद्रं च इति जयति। अमागन्निति मन्त्रेणाचमति। मित्रस्य त्वेति मन्त्रेण मधुपर्कमीक्षते। देवस्य त्वेति मन्त्रेण मधुपर्कं गृह्णाति। सर्वेषु चैतेषु त्रिस्त्रि-रेतानि द्रव्याणि अभिवाद्य प्रतिगृह्णामीत्यर्थमाहत्य अर्घ्यो मधुपर्कं सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया 'नमः शम्भवाय' इति मन्त्रेण मधुपर्कः त्रिः प्रयौतिं मिश्रयतीत्यर्थः। अनामिकाङ्गुष्ठेन त्रिः निरूपयति निषिञ्चय-तीत्यर्थः। च शब्दात्प्रयौति च। अतश्च प्रतियुवनं निरूपणम्। एवञ्च निरूपण-व्यवसानात् समन्त्रकं त्रिः प्रयुवनं विधेयमिति सिद्धयति। यन्मधुन इति मधु-मतीभिर्मधुपर्कस्त्रिः प्राश्नीयात् मधुपर्के च सोमे च नोच्छिष्टो भवतीति स्मर-णात्। उच्छिष्टमेव मन्त्रपाठः। अथाचम्य आस्थादित्यादि मन्त्रैः प्राण्यतनानि संमृशेत्। अत्र साकाङ्क्षत्वात्। अस्तीत्यध्याहारः। मृ इति च सर्वत्राऽनुषङ्गः। अरिष्टानि मेऽङ्गानि तनुरित्यवसमभिव्याहारः। आचान्तोदकापसदनादाप गौरिति त्रिःप्राहेति। आचान्तोदकतदर्थे शस्त्रादानमिति। तादर्थ्यञ्च पश्वा-लम्भस्य च तदर्थत्वात्। एतच्चाचार्य कर्त्ता वाच्यम्; ततो माता रुद्राणामिति-मन्त्र अर्घ्य प्रति ब्रूयात्। अनुष्येति वार्धपितुर्नामग्रहणं यथा लभेत्। पद्मासनं हतो-भातिप्रयोगः। अथ सिसृक्षेन्मम चायुष्यं च पाप्माहतमुत्सृजत तृणानि अत्तु इति ब्रूयादिति। निगदोऽयम्। नत्वेतावान् नामोऽर्घ्यः स्यात्। त्रियज्ञमधिविवाहं कुरुतेत्येवं ब्रूयात्शेषं सुगमम् इति।

**श्री दलपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे**
**मधुपर्कः ॥**

## अथ नान्दीमुखश्राद्धम्

**अथ नान्दीश्राद्धमभिधीयते।** पूर्ववज्ज्योतिष्टोमदशपूर्णमासादियज्ञतुलापुरुषादिविवाहादानोद्वाहव्रतबन्धप्रतिष्ठामेखलाविमोक्षणगर्भाधानादि संस्कारादि सर्वशुभकार्येषु युगपदनुष्ठीयमानानेकविवाहादिषु देवकप्रतिष्ठायाः सकृदनुष्ठेयत्वेऽपि अनेकोपकारकतया सकृदनुष्ठितमनेकोपकारकं तं सूत्रमिति तन्त्रन्यायेन 'गणशः क्रियमाणानां नान्दीश्राद्धं पृथग् भवेदि'ति न्यायेन वोद्देश्य देवतानामनाराधितानामपकारकारितया तस्य देवताक्रोधशामकत्वेन फलसाधनतया फलवत्सन्निधावफलं तदङ्गमिति न्यायेन फलसाधनतयानङ्गत्वादङ्गस्यैव सतः सकृदनुष्ठितस्यानेकोपकारसाधनतथा सकृदनुष्ठेयत्वान्मण्डपप्रतिष्ठायाश्च तादृग्रूपतया सकृदनुष्ठेयत्वेऽपि तस्यापि किञ्चित् फलसाधनत्वेन, तद्रूपत्वशङ्काया फलाभावाद्वा कथञ्चिद् सद्भावेऽपि तादृशफलाभावात्, परिहर्त्तुमशक्यत्वात्। आवृत्यान्यत्र सकृदेवाऽनुष्ठेयम्। तदाहुः—शातातपविष्णुजाबालिकात्यायनमार्कण्डेयाः—

नानिष्ट्वा पितृयज्ञेन दैविकं यः समाचरेत्।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः।

मातृगणस्तु-भविष्यत्पुराणे निरूपितः—

गौरी पद्मासना मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरो लोकमातरः॥

विष्णुपुराणे—

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः।
शुभकर्मणि बालानां चूडाकर्मादिके तथा।
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखान् पितॄनादौ तर्पयेत् प्रयतो गृही।

जाबालिः—

यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्।

तेन वैदिकहोमाङ्गकेषु दर्शपूर्णमासादिषु अन्येषु वचनावशेषितेषु कर्मसु वृद्धिश्राद्धमाचरणीयम्। तथा तुलापुरुषादीनामपि यागशब्दनात् लोकपालानामावाहनमन्त्रेषु च सर्वेषु मां पाहि यज्ञं रक्षेत्यादिशब्दप्रयोगात् सत्यपि दानरूपत्वे यागधर्मेण भवितव्यमिति। तथापि वृद्धिश्राद्धं कर्त्तव्यम्।

एवमेवाहोमकेषु धान्यपर्वतादिषु अप्यनुसन्धेयम्। तस्य विधिमाह कात्यायनः–अभ्युदयिके प्रदक्षिणमुपचारः। पूर्वाह्णेऽपि अमन्त्रवर्जजपयज्ञतपोदर्भार्थाय वै स्त्रिलार्थः। संपन्नमिति त्रिःप्रश्नं सुसम्पन्नमित्यनुज्ञातो दधिवराक्षतमिश्रान् पिण्डान्नान्दीमुखान् पितॄन् वाचयिष्ये इति पृच्छति, वाच्यतामित्यनुज्ञातो नान्दीमुखान् आवाहयिष्ये इति पृच्छत्यावाहयेत्यनुज्ञातो नान्दीमुखाः प्रीयन्तामिति, काम्यस्थाने नान्दीमुखाःपितरः पितामहाः प्रपितामहाः मातरो मातामह्यः प्रमातामह्यश्च प्रीयन्तामिति। न स्वधां प्रयुञ्जीत युस्मानाशयेदिति। निगदव्याख्यानमेतत्। मार्कण्डेयपुराणे––

नान्दीमुखानां कुर्यात्तु प्रातःपिण्डोदकक्रियाः।
प्राजापत्येन तीर्थेन यत्र किञ्चित् प्रजायते॥

प्रौढः श्रीद्विजराजवंशतिलकालङ्कारहीरप्रभु–
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारे सांस्कृतिके करोति चतुरे ीमान् दलाधीश्वरः।
निजामशाहसाम्राज्यधुरन्धरमहीपतिः।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं करुते शुभम्॥ ६॥

**इतिश्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराजश्रीदल-पतिराजविरचिते श्रीनृसिंहप्रसादे नान्दीमुखम्॥**

## अथ संस्काराः

अथ संस्कारसारः प्रारभ्यते—तत्र ब्रह्मक्षत्रियविट्शूद्राश्चत्वारो वर्णाः। ब्रह्मचारीगृहस्थवानप्रस्थादयश्चत्वार आश्रमाः। तत्र वर्णाश्रमधर्मानभिधातुं—तत्र वर्णधर्मसंस्काराभिधः प्रथममनुष्ठेयतया निरूप्यते। संस्कारानुष्ठेयत्वम्मनुनोक्तम्—

वैदिकैः कर्मभिः पुण्यैः निषेकादिद्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च।

निषेको गर्भाधानम् तथा योगी—

ब्रह्मक्षत्रियविट्शूद्रवर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकाद्या श्मशानान्तास्तेषां वै मन्त्रतः क्रिया।

द्विर्जायन्ते इति द्विजाः। द्वितीयं जन्मेव जन्मोपमानन्तत् सन्धिकर्म उपनयनपूर्वसंस्कारः।

यमः—

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः।
न केनचित् समसृजत् छन्दसा तं प्रजापतिः।

विनामन्त्रेण त्वत्र हेतुः। न केनचिदित्यादि छन्दसा वेदेन समसृजत् सम्बन्धितवान्।

ब्रह्मपुराणे—

विवाहमात्रं संस्कारः शूद्रोऽपि लभते सदा।
मन्त्रस्तु अवैदिकत्वादेव तस्य निवृत्तः।
विवाहमात्रशब्दस्तु विहितेतरसंस्कारनिवृत्यर्थः।

योगी—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः॥

तत्र सुमन्तः—

चित्रकर्म यथानेकैः रङ्गैः सम्मील्यते शनैः।
ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्वकैः।

गार्भैर्होमैः जातकर्मचूडामौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते ।

बीजे भवं, बीजनिमित्तं वा बैजिकम् । बीजं शुक्रशोणितदोषजनितं बैजिकमशुचिगर्भनिवासजनितं गार्भिकं शुक्रभवम् । एवं गार्भिकं गर्भाशयस्थ-शोणितभवम् एनः अशुचित्वं ततोऽवश्यं अनुष्ठेयाः संस्काराः । होमग्रहणं होमात्मक-गर्भाधानादेः प्रदर्शनार्थं प्रक्षेपान्तश्च होम इत्यभियुक्तैरुक्तम् । तत्र संस्कारो द्विविधः ब्राह्मो दैवश्च । गर्भाधानादि स्नानान्तो ब्राह्मः ।

पाकयज्ञा हविर्यज्ञाः सौम्याश्च दैवः । तत्र ब्राह्मसंस्कारसंस्कृतः ऋषीणां समानतां सायुज्यं च गच्छति । दैवेनोत्तरेण संस्कृतो देवानां समानतां सायुज्यञ्च गच्छति । तत्र केचित् षोडशैव संस्कारानाहुः । अन्ये तु पञ्च विंशतिः संस्कारान् । ततोऽन्ये चत्वारिंशत्संस्काराः । अष्टावात्मगुणान् ततोऽन्ये अष्टाचत्वारिंशत् संस्कारानिति ।

तत्र गौतमः—गर्भाधानं पुंसवनं अनवलोभन-सीमन्तोन्नयन-जातकर्म-नाम-करण-निष्क्रमणान्नप्राशन-चौलोपनयनचत्वारि वेदव्रतानि तपः सहधर्मचारिणी संयोगः पञ्चानां यज्ञानामनुष्ठानमष्टका पार्वणश्राद्धं श्रावण्याग्रायणी चैत्री आश्वियुजी चेति सप्तपाकसंस्थाः अग्न्याधेयमग्निहोत्रदर्शपूर्णमासाग्रायणा-चातुर्मास्यानि निरुढपशुबन्धसौत्रामणिसप्तहविर्यज्ञसंस्थाः । अग्निष्टोमो-ऽत्यग्निष्टोमः उत्तमषोडशी वाजपेयोऽतिरात्रौ सोर्यार्याम इति सप्तसंस्था इत्येते चत्वारिंशत्संस्काराः । अष्टावात्मगुणा सर्वभूतिक्षान्तिरनसूयाशौचमनायासो मङ्गलमकामास्पृहेति । वेदव्रतानि प्रतिवेदमाम्नातानि प्राजापत्यादीनि । स्नानं समावर्तनं गुरुकुलवासावसानलक्षणम् । सहधर्मचारिणीसंयोगो विवाहः । देव-यज्ञादयः पञ्चयज्ञाः । अष्टकाः श्राद्धविशेषः । पार्वणं पर्वणि क्रियमाणं स्थाली-पाकलक्षणं श्राद्धम् । आग्रायणी आग्रायणेष्टिः वैत्रीदोलाकाख्यं कर्म । आश्वयुजी इन्द्रध्वजहोमाख्यं कर्म, अन्ये प्रसिद्धा इति नोक्ताः, केचिद् औपासनहोमो वैश्वदेव पार्वणअष्टकाश्राद्धादि मासिकश्राद्धं सर्पबलिः ईशानबलिरिति सप्तपाक-यज्ञानाहुः । आत्मगुणलक्षणं प्रागेव अभ्यधायि । यस्येते चत्वारिंशत्संस्कारा अष्टौ आत्मगुणाः सः ब्राह्मणः सायुज्यमेति । आह शङ्खः—

पाकयज्ञाः हविर्यज्ञाः सोमसंस्थास्तथैव च ।
संस्कारा ह्यग्निहोत्रान्ता अग्निहोत्रश्च जुह्वतः ।

संस्कारैः संस्कृतः पूर्वैरुत्तरैरपि संस्कृतः ।
नित्यमष्टगुणैर्युक्तः ब्राह्मणो ब्रह्मलौकिकम् ।
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः ॥ इति ।
नाकपृष्ठं यशोधर्मं त्रिराजानं त्रिविष्टपम् ।

अग्निहोत्राग्रायणिनः दर्शपूर्णमासं विनापि अग्निहोत्रमात्रानुष्ठानमपि विहितमस्ति । तस्याग्निहोत्रपर्यन्ताः संस्काराः हविर्गर्भाधानादिभिः उत्तारेरग्न्याधेयादिभिः । ब्रह्मलौकिकः ब्रह्मलोकार्हः । नाकपृष्ठं मेरुपृष्ठं त्रिविष्टपं देवलोकः, त्रिराजानः पाकयज्ञः पाकसंस्था हविःसंस्था सोमसंस्थाभिः त्रिःसोमयागेन इष्टवानिति माधवस्वामी ।

हारीतः—गर्भाधानवदुपेतो ब्रह्मगर्भसन्दधाति । पुंसवनात् पुंसीकरोति । फलस्तपनान्माता पितृजं पाप्मानमपोहति । रेतोरक्तगर्भोपघातः पञ्चगुणो जातकर्मणा प्रथममपोहति । नामकरणेन द्वितीयं, प्राशनेन तृतीयं, चूड़ाकरणेन चतुर्थं, स्नानेन पञ्चमं एतैरष्टभिः संस्कारैः गर्भोपघातात् पूतो भवति । उपनयनाद्याभिरष्टाभिर्व्रतचर्याभिरन्तर्व्रतैश्चाष्टाभिः स्वछन्दसि निरूढो ब्राह्मणः परं पात्रं देपपितृणां भवति । छन्दसां पारग इति ।

अयमर्थो द्रष्टव्यः—गर्भाधानवद् गर्भाधानविधिना विष्णुर्योनिं कल्पयत्वित्यादिना उपेतः स्त्रियमुपगतः । ब्रह्मगर्भं सन्दधातीति । ब्रह्म वेदः ब्रह्मलोकमित्यादिश्रुतेः । तद्ग्रहणयोग्यं गर्भं सन्दधाति सञ्जनयति । पुंसीकरोति अव्यक्तलिंगं गर्भं पुमांसं करोति । पुमांसं पुत्रं विन्दस्वेति मन्त्रवर्णनात् फलस्तपनाङ्कं सीमन्तोन्नयनात्, मातृपितृजं मातृपितृद्वारा जातम् । गर्भस्थस्याश्रयसंस्कारद्वारा । उपघातः पापसङ्घः, पञ्चगुणः पञ्चप्रकारः, उपपातकः जातिभ्रंशकरणसंङ्करीकरण—मलिनीकरणापात्रीकरणरूपपापपञ्चकं संक्रामतीति जयस्वामी । ततश्च शोणितगर्भान्तिर्गते रेतसि मातृपितृद्वारा पञ्चप्रकारं पापं संक्रामतीति तन्निवृत्तये सीमन्तोन्नयनमर्थवत् इति यावत् । अष्टौ व्रतचर्या । उपनयनादिमेखलेत्यादि ऊर्ध्वमेता इत्यन्ता वक्ष्यमाणा, अन्तर्व्रतानि आदेशविमोकवन्ति वेदभागग्रहणार्थानि सावित्रगौदानिकव्रातिकआदित्यव्रत औपनिषद् ज्यैष्ठमासिकमहानाम्निक-भौतिकानि । स्वच्छन्दो वेदयुक्त इति ।

तत्र सुमन्तुः—तत्र ब्राह्मणक्षत्रियवैश्यानां गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौलोपनयनव्रतचर्याध्ययनसमावर्तनविवाह यज्ञदानानि समानानि इति । तथा च योगी—

विप्रक्षत्रियविट्शूद्रवर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकाद्याश्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ।

इति निषेको गर्भाधानमाद्यो यासां तास्तथोक्ताः । श्मशानं प्रेतकर्म । द्विजादीनां मन्त्रतः क्रिया इति वदता शूद्राणाममन्त्रकः संस्कारः सत्यसूचि । तदाह—संस्काराधिकारे यमः—

शूद्रेऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः । इति ।

एतच्च चूडाकरणान्तसंस्कारविषयम् । तदुक्तमापस्तम्बेन—अशूद्राणाम-दुष्टकर्मणामुपनीतानां वेदाध्ययनमग्न्याधेय-फलवन्ति कर्माणीति । निषेधति च विवाहेतरसकलसंस्कारान् ब्रह्मपुराणनिष्ठं वचः । तथाहि—

विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा । इति ।

अतो विहितप्रतिषिद्धतयाष्टदोषदुष्टविकल्प एवौचितीं धत्ते । ततो नास्ति शूद्रस्य विवाहातिरेकी संस्कारः । आश्वलायनाचार्योक्तप्रागुक्तानां पञ्चविंशति-संस्काराणां नैमित्तिकवार्षिक-मासिक-नित्यभेदेन चातुर्विध्यमाहुः । तथा हि--

नैमित्तिका षोडशोक्ताः समुद्वाहावसानकाः ।
सप्तैवाग्रयणाद्याश्च संस्काराः वार्षिका मता ।
मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकम् ।
महायज्ञास्तु नित्याः स्यु सन्ध्यावच्चाग्निहोत्रवत् ।
संस्काराणामथैतेषां यथावदधिनिर्णयः ।
देशकालानुरूपेण शास्त्रतश्च प्रवक्ष्यते ।

अत्र गर्भाधानाद्युपनयनपर्यन्ता एव संस्कारा सर्वेषाँ नियताः, न तु स्नानादयः । अन्यथा ब्रह्मचर्यादेव प्रव्रजेत इत्यादि विरोधापत्तेः । तस्मादाश्व-लायनाचार्याणां चातुर्विध्यमेवेष्टम् ।

अतः परं द्विजातीनां संस्कृतिर्नियतोच्यते ।
संस्काररहिता ये तु तेषां जन्म निरर्थकम् ।

नियता नित्या, निरर्थकत्वं ब्राह्मण्यानभिव्यक्तेः ।

स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्त्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति ।
पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।
ते पवित्राश्च योग्याश्च श्राद्धादिषु च (सु) यन्त्रिताः ।

अत्रादिशब्दात् यजनादेः; परिग्रहः ।

गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।

बलिः विष्णु बलिः ।

जातकृत्यं नामकर्म निष्क्रमोन्नाशनं परम् ।
चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् ।

अत्र तद्व्रतानामिति तच्छब्दस्य प्रसिद्धपरामर्शित्वात् । वेदविवक्षा ।

स्नानोद्वाहौ चाग्रयणं अष्टकासु यथायथम् ।
श्रावण्यां आश्वयुज्याश्च मार्गशीर्ष्यां च पार्वणम् ।
उपसर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ।

श्रावण्यां श्रवणाकर्म कर्त्तव्यं, आश्वयुज्यां आश्वयुजीकर्म, मार्गशीर्ष्यां ब्रतावरोहणम् ः पर्वणि क्रियमाणं पार्वणम् ।

संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः ।

यद्यपि गौतमादिभिरष्टचत्वारिंशत्संस्काराः परिगणिताः तथापि तत्तद्-गृह्यानुसारेण तथा तथा कर्माणि अनुष्ठेयानि । तत्र याज्ञवल्कीया पञ्चदश संस्कारानाचक्षते । चन्द्रशेखराचार्यरीत्या कात्यायनाभिहितगृह्यकर्कभाष्य-कारिकापद्धतित्रयनारायणपद्धतिपर्यालोचनया अन्यान्यपि चतुस्त्रिंशत्कर्माणि प्रतीयन्ते । ते आधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिःक्रमणान्नप्रासन-कर्णवेधचौलोपनयनव्रतादेशकेशान्तव्रतविसर्गसमावर्तनविवाहादयः पंचदश संस्काराः । अत्र सीमन्तोन्नयनानन्तरं सोष्यन्तीकर्मगृह्यकाराः पठन्ति । तथा नारायणीयपद्धत्यादि सूचितान्यन्यान्यपि अक्षतहोमप्रतिपद्धोमं पञ्चमहा-यज्ञाध्ययनोपाकर्मवेदोत्सर्जनलाङ्गलयोजनबीजवापनश्रवणाकर्मसर्पबलिइन्द्रयज्ञ-सीतायज्ञनवान्नप्राशनाग्रयणस्वस्तरारोहणअष्टकाकर्मशालाकर्ममणिकाधानशीर्षरोग-भगशूलपरिमेहशूलगवकर्मगोयज्ञवृषोत्सर्गपायसभक्षणउदककर्मसभाप्रवेशउरगरथा-रोहणहस्त्यारोहणप्रभृतीनि चतुःत्रिशत्कर्माणि तथा आपस्तम्बाभिमताः केचन कर्मविशेषाः प्रतीयन्त इति ।

**श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्त-यवनाधीश्वरश्रीनिजामशाह समस्तसामाज्यधुरन्धरमहाराजा-धिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे कर्मभेदनिरूपणमिति ।**

## अथ गर्भाधानम्

तत्र बृहस्पतिः—

गर्भाधानमृतौ कुर्यात् सवनं स्पन्दने शिशोः । इति ।

तथा गार्ग्यः—

यदा काले तदाभूत आधीतक्षममार्त्तवम् ।
न भवत्यन्यथात्वे तु गर्भाधानक्षमं भवेत् ।
तदात्मा येन दृष्टश्चेत् उपैति पुरुषाङ्गना ।
एवमार्त्तवसंभूते चतुर्थदिवसात् परम् ।
आस्नानदिवसात्पूर्वं न कुर्यात्तु कथञ्चन ।

तथा आपस्तम्बः—चतुर्थीप्रभृति आषोडशीमुत्तरामुत्तरां युग्मां प्रजानिःश्रेयसमृतुगमनमित्युपदिशन्ति । तथाचाभिहितं विष्णुपुराणे—

ऋतावुपगमस्तस्य स्वपत्न्यां मन्त्रतो द्विज । इति ।

तथा याज्ञवल्क्यः ।

षोडशर्त्तुः निशा स्त्रीणां तस्मिन् युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाद्याश्चतस्रश्च विवर्जयेद् ॥
एवं गच्छन् स्त्रियं क्षामां मघामूलं च वर्जयेत् ।
सुस्थ इन्दौ सकृत्पुण्यं लक्षण्यं जनयेत् सुतम् ।
यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।

तथा श्रुतिरपि—ऋतौ भार्यामुपेयादिति ।

अयमर्थः—स्त्रीणां शोणितदर्शनोपलक्षितः गर्भग्रहणसमर्थः शरीरावरणविशेषो हि ऋतुः । स च रजोदर्शनमारभ्य षोडशनिशापरिमितकालः । तस्मिन् ऋतौ युग्मासु समासु पुत्रार्थी कन्यार्थी विषमासु संविशेत् गच्छेदिति । तदाह-मनुः—

युग्मासु पुत्राः जायते स्त्रियोऽयुग्मासु रात्रिसु ।
युग्मास्वापस्तम्बवचनात् उत्तरोत्तरा प्रशस्ताः ग्राह्याः ।

व्यासश्च—

रात्रौ चतुर्थ्यां पुत्रः स्यात् अल्पायुर्धनवर्जितः ।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः ।

सप्तम्यामप्रजा जाया अष्टम्यामीश्वरः सुतः ।
नवम्यां शुभगाः दाराः दशस्यां प्रवरः पुमान् ।
एकादश्यामधन्या स्त्री द्वादश्यां पुरुषो भवेत् ।
त्रयोदश्यां सुता तस्य वर्णसंकरकारिणी ।
धर्मध्वजः कृतज्ञः स्यात् आत्मवेदी दृढव्रतः ।
प्रश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ।

युग्मास्वपि पर्वाष्टमी चतुर्दशी व्यतिरिक्तासु गच्छेत् । सौरपुराणे—

षष्ठ्यष्टमी पञ्चदशी अमावश्या चतुर्दशी ।
ब्रह्मचारी भवेन्नित्यं जन्मर्क्षे च विशेषतः ।

विष्णुः—

नाष्टमी चतुर्दशी पञ्चदशीषु स्त्रियमुपेयात् ।

शिवरहस्ये—

दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रतम् ।
श्राद्धं दत्त्वा च भुक्त्वा च श्रेयोऽर्थान्न च पर्वसु ।

वाराहपुराणे—

षष्ठ्यष्टमी अमावास्या उभे पक्षे चतुर्दशी ।
मैथुनन्नैव सेवेत द्वादशी च मम प्रियाम् ।

तथा;

अष्टम्याञ्च चतुर्दश्यां षष्ठ्यां द्वादश्यान्तथा ।
अमावश्याञ्चतुर्थ्यां च मैथुनं यो हि गच्छति,
तिर्यग्योनिं हि गच्छेत् समालोकं न गच्छति ।

ततो रजोदर्शनादारभ्य चतस्रो वर्ज्याः । देवत्वेन तिस्रो रात्र्यो वर्ज्या इत्युक्तम् ।

अशुद्धदिवसे चैनां मैथुनार्थं यदि व्रजेत् ।
आयुः प्रज्ञा च धर्मश्च तस्य पुंसः प्रहीयते ।
तस्मात् त्रिरात्रं चाण्डालीं पुष्पितां परिवर्जयेत् ।
ऊर्ध्वं त्रिरात्रासम्भव इत्येके ।

हारीतोऽपि—चतुर्थ्यां रात्रौ गर्भाधानमुक्तवानिति । चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भाधानवदुपेतं ब्रह्मगर्भं सन्दधाति । इति ततश्च विहितप्रतिषिद्धत्वात् विकल्पः । स च व्यवस्थितः । व्यवस्था चेयम्—चतुर्थेऽहनि रजोनिवृत्तौ विधिर्वैपरीत्ये तु प्रतिषेध इति ।

तदुक्तं मनुना—

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला । इति ।

साध्वी गर्भाधानादि विहितयोग्या । ततो रजोनिवृत्तावेवेदं गर्भाधानमनुष्ठेयम् ।

नोपगच्छेत् प्रमत्तोऽपि स्त्रियामार्त्तवदर्शने ।<br>
रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः ।<br>
प्रज्ञातेजोयशश्चक्षुरायुश्चैव न वर्धते ।

इति मनुस्मरणात् ।

तथा देवलः—वैपरीत्ये वैपरीत्यमपि दर्शितवान् ।

अशुद्धदिवसे चैनां मैथुनार्थं यदि व्रजेत् ।<br>
आयुः प्रज्ञा च धर्मश्च तस्य पुंसः प्रहीयते ।<br>
तस्मात्त्रिरात्रं चाण्डालीं पुष्पितां परिवर्जयेत् ।

आद्याश्चतस्र इत्युपलक्षणम् । एकादशी त्रयोदशी च वर्ज्या । अन्यापि याः काचिद् निंद्या सापि वर्ज्येति । क्षामाञ्च गच्छेत् । क्षामता च रजस्वलाधर्मैरेव संसाध्या । लघ्वाहारादिना वा कार्या पुत्रोत्पत्तये । पुरुषेणापि शुक्रविवृध्यर्थं क्षीरादिस्निग्धभोजनमेवानुष्ठेयम्

स्त्रियः शुक्रेऽधिके स्त्री स्यात् पुमान् पुंसोऽधिके भवेत् ।<br>
तस्माच्छुक्रविवृध्यर्थं वृष्यं स्निग्धञ्च भक्षयेत् ।<br>
लघ्वाहारं स्त्रियं कुर्यात् एवं संजनयेत्सुतम् । इति बृहस्पतिस्मरणात् ॥

तथा मनुरपि—

पुमान्पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रियः ।<br>
समे पुमान् पुंस्त्रियो वा क्षीणेऽल्पेऽपि विवर्जयेत् । इति ।

साम्यञ्चेत् क्लीबोत्पत्तिः ।

यमस्तु विशेषमाह—

यदि संयोगकाले तु पुरुषो रागमोहितः ।
द्विधा समुत्सृजेच्छुक्रं यमलं तत्र जायते । इति ।

क्षीणे निःसारेऽल्पे च विपर्ययो गर्भाग्रहणं ऋतुविपर्यये किङ्कर्तव्यमिति चेदिदम्--

यौगपद्ये तु तीर्थानां विप्रादिः क्रमशो व्रजेत् ।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशो पिबे(विशे)त् ।

तीर्थं ऋतु । ऋतुयौगपद्ये अपुत्रागमनं वा पूर्वं सर्वासामपुत्रत्वे पुंसवत्वे च वर्णक्रमेण विवाहक्रमणे वा गमनम् । पराशरो विशेषमाह—

ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नाऽत्र संशयः ।

सन्निधिग्रहणमसन्निधाने न दोष इत्याह--सन्निधावपि शक्यते च दोषः ।

यश्च दारामृतुस्नातां स्वस्थः सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति प्रजाप्राप्ता विनश्यति । इति स्मृतेः ॥

ऋतौ भार्यामुपेयादिति श्रुत्या--

षोडशर्त्तुर्निशा स्त्रीणां तस्मिन् युग्मासु संविशेत् ।

इति स्मृत्या च ऋतुगमनमावश्यकं प्रतीयते, तथा चाम्नायते-जायमानो वै ब्राह्मणस्त्रिभिः ऋणैः ऋणवान् जायते । ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः । एषोऽनृणो यः पुत्री यज्ञी ब्रह्मचारी वेति । एषा च श्रुतिरेकपुत्रोत्पादनविषया । अतोऽजातपुत्रविषयं सर्वं प्रागुक्तमिति ज्ञेयम् ।

यथोक्तं मनुना—

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।

पितृणामनृणश्चैव स तस्मात् सर्वमर्हति । इति ।

इदमेव ब्राह्मणे समाम्नातम् ऋणमस्मिन् संयभ्यामृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् । इति ।

तथा च श्रुत्यन्तरमपि–नापुत्रस्य लोकोऽस्तीति, तत्सर्वे पशवो विदुरिति। तद्व्यतिरिक्तमर्थमाचक्षाणा स्मृतिरपि –

अनन्ताः पुत्रिणो लोका भवन्त्यत्र न संशयः। इति।

ननु पुत्रान्तरोत्पत्तिविधायिकापि श्रुतिर्दृश्यते 'दशास्यां पुत्रानाधेहि पतिमेकादशं कृधी'ति। अतः कथं प्रागुक्तवचनस्यैकपुत्रविषयता? सत्यमेवैतत्। भवेदयं मनोरथो यदीयं विधायिका स्यात्, किन्तु अनेकापत्यप्रशंसार्था। तथाहि—

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।

यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्। इति।

प्रभृतिभिर्बहुपुत्राश्रयात्। अतो नेदं अजातपुत्रविषयमिति केचित्। यथाचोक्तं कूर्मपुराणे—

ऋतुकालाभिगामी स्यात् पुत्रोभिजायत। इति।

अयमर्थः—ऋतु समय एव यावद् गर्भसम्भवो भवति तावद् गन्तव्य इति। गर्भसम्भवचिह्नानि च सुश्रुते दृश्यन्ते। सद्यो गृहीतगर्भायाः श्रमो भवति, ग्लानिपिपासादीनि शक्तिस्पन्दनं शुक्रशोणितयोरनुबन्धः, स्फुरणञ्च योनेरिति। स्त्र्यपि तदकर्त्री भ्रूणघ्नी स्यात्। ततो ऋतौ गन्तव्यमेवेति नियमः। ततः प्रागुक्तसकलानुकूल्ययुक्ते चतुर्थ्यादौ षष्ठ्यादौ वा समदिवसे प्रातःकाले–स्वस्तिवाचनपूर्वकमाभ्युदयिकं कुर्यात्। ततः सह ब्राह्मणैरुपनिषदम् अपराह्णपर्यन्तमधीत्य ब्राह्मणैः सह भुक्त्वा पुण्याहवाचनं कुर्यात्। सायन्तनं नित्यकर्म कृत्वा—

विष्णुर्योनिं कल्पयतु, त्वष्टा रूपाणि पिंशन्तु,
आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते।
गर्भं धेहि सिनीवालि, गर्भं धेहि सरस्वति।
गर्भन्तेऽश्विनौ देवावाधत्तां पुष्करस्रजौ।

इति ऋग्द्वयं जपित्वा नानाविधधूपधूपिते (अनेक) नानाप्रकारदीपदीपिते विततविचित्रवितानयुक्ते हृदयानन्दजनके मत्कुणमशकादिदंशरहिते मन्दिरे मृदुतरास्तरणसुखस्पर्शनशयने घृषितघनसराद्यनेकपूर्णफलादिना कुङ्कुमादीनाऽपि मत्यर्चर्चितशरीरां सुरभितकुसुममात्राघने काले स्वयमपि तथाविधस्तथाविधचन्दनानुलेपितशरीरः तथा नामावलोक्य दृष्टिपाते ह्रौमिति प्रसादबीजं जपित्वा पूर्वोक्तरीत्या देशकालादिस्मृत्वा पितॄणां ऋणापाकरणहेतुकं चिरञ्जीवपुरुषगुण-

पुत्रसम्पादकं गर्भाधानाख्यं कर्म करिष्ये इति संकल्प्य सुगन्धामूलं वृषभमूत्रेणाम्ररसेन वा सम्यग् पेषयित्वा वस्त्राञ्चले निधाय कांस्यपात्रे निक्षिप्य कपिलाक्षीरेण मिश्रयित्वाउदीर्ष्वातः पतिवतीत्यस्य सूर्यासावित्रीत्रिष्टुप् अनेन शोभने मुहूर्त्ते पत्न्या दक्षिणनासारन्ध्रे सिक्त्वा तस्मिन् रसे तदुदरं गते सति तां पूषन् छिवतमामेरयस्वेति मन्त्रं जपित्वा तां सलीलां पत्नीं सकृत् गच्छेत् । तस्यां रात्रावेकवारमेव गच्छेदिति ।

**याज्ञवल्कीयानामभिमतः प्रकारोऽभिधीयते—**

ज्योतिर्विदुक्ते पुण्यदिवसे गर्भाधानं करिष्ये इति संकल्प्य पुण्याहवाचनं विधाय मङ्गलस्नातायां निशि तल्पस्थायां सत्यां संयोगकाले दक्षिणेन पाणिना उपस्थाभिमन्त्रणं कृत्वा 'विष्णुर्योनिं कल्पयत्वि'ति मन्त्रद्वयमुच्चार्य 'गर्भो भवे'ति गर्भाधानं कुर्यात् । अस्या दक्षिणबाहुं नीत्वा 'यत्ते सुसीमे'ति मन्त्रमुच्चार्य हृदयमालभेत, ततोऽभिगमनं कुर्यात् । ऋतुगमने यदि गर्भं न दधीत तदाकण्टकीमूलमुत्पाट्य पुष्येणोपोष्य चतुर्थीस्नातायां निशायां उदपेषं पिष्ट्वा यमाशति दक्षिणस्यां नासिकायामासिञ्चेत् गर्भो भवति । आपस्तम्बमते तु यथागृह्यं व्यवस्था ।

**इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्ग-
प्रवर्त्तकसकलभूमण्डलमण्डनसमस्तयवनाधीश्वर-
निजामसाहसमस्तराज्यधुरन्धरश्रीमन्महा-
राजाधिराजदलपतिराजविरचिते
नृसिंहप्रसादे संस्कारसारे
गर्भाधानम् ।**



## अथ पुंसवनम्

तच्चतुर्थे तृतीये वा मासि कार्यम् । तथाचापस्तम्बीयकारिका—

तृतीये वा चतुर्थे वा मासि पुंसवनं भवेत् ।
गर्भव्यक्तौ स्मृता चेति लोकसिद्धान्तयोर्हि सा ।

याज्ञवल्क्यः —

गर्भाधानं ऋतौ पुंसस्सवनं स्पन्दनात्पुरा ।

स्पन्दनं चलनम् । बैजवापो विशेषमाह—मासि द्वितीये वा तृतीये वा पुरास्पन्दनादिति ।

### नक्षत्रशुद्धिः

विष्णुः—सीमन्तोन्नयनं शुद्धैकदिन एवेति ।

वनिता कन्या जीवे शुक्रे वा स्थिते नेष्टा कर्कटमिथुने सौम्यग्रहयुतेऽपीष्टा । तथा कालदीपके विशेष उक्तः—

पुंसवने वनितानसद्दृष्टा कर्कियमेतरराशय इष्टा । इति ।

तथा रत्नकोशे नक्षत्राणि उक्तानि—

हस्तो मूलं श्रवणपुनर्वसुमृगशिरास्तथा पुष्यः ।
पुंसंज्ञितेषु कार्येष्वेतानि शुभानि धिष्ण्यानि ।

नारदः—

अरिक्तापर्वेति । तथाविधिः । अन्यैरपि उक्तम्—

तिष्ये श्रावणभे विशुद्धिनिधने शुक्रेन्दुदृष्टे युते,
लग्ने तद्दिवसे खगेन्दुभुवनस्त्रीभ्योऽन्यलग्नं शुभम् ॥
पूर्वोक्ते सुरपूजिते व्ययगते दृष्टे चतुर्थे विधि –
र्यत्तत्पुंसवनं परत्र विधिना मासे तृतीये ततः ॥ इति ।

## वारशुद्धिः

शुक्रसोमबुधबृहस्पतिवारेषु पुंसवनं कार्यम् ॥

## तिथिशुद्धिः

तिथयः—चतुर्थी नवमी चतुर्दशी व्यतिरिक्ताः सर्वाः भद्रा वर्ज्याः । जन्मर्क्षादिवर्ज्यं रात्रिश्च ।

## लग्नशुद्धिः

हित्वा कर्कटकं कन्यां मिथुनं च अन्येषु कर्त्तव्यं नवसु लग्नेषु । पूर्वदिने पत्न्या हविष्यान्नैकभोजनं कार्यम् । भर्त्ता चाऽभ्युदयिकं श्राद्धं कार्यम् । तदुक्तम्–भगवता–गर्भस्य वैद्यशास्त्रोक्तदोषाणामपनोदकम्—

पूर्वस्मिन् दिवसे पत्नी हविष्यैकाशनी भवेत् ।
वृद्धिश्राद्धं पतिः कुर्याद् ब्रह्मचारी भवेत्तदा । इति ।

तथान्यच्च—

समानवत्सवर्णाया गोः क्षीरप्रभवं दधि ।
त्रीन्यवान्माषषट्के च सम्पाद्यैतानि विक्षिपेत् ।

कृतैकभक्तांवधूमपि कृतस्नानां धृतधौताम्बरायाम्—

भूषिताङ्गंधमाल्याद्यैः कृतपुण्याहवाचनाम् ।
कृतकौतुकबन्धान्तां कारयित्वा तु शोभनम् ।
मुहूर्त्ते मेलनं कृत्वा वह्निमौपासनन्ततः ।

अथ गर्भाधानमारभ्य प्रणीतासारणा विधिः—

पुरस्तात्तंत्रमाचार्यः प्राजापत्यश्चरुन्ततः ।
निरूप्य श्रपयित्वाज्यसंस्कारविधिपूर्वकम् ।

तत्राश्वलायनगृह्यम्—तृतीये गर्भमासे तिष्येणोपोषितः सरूपवत्साया गोर्दधनि द्वौ द्वौ माषौ यवाश्च निक्षिप्य दधि प्रसृतेन प्राशयेत् । किं पिबसि, किं पिबसीति पृष्ट्वा पुंसवनं पुंसवनं पुंसवनमिति त्रिः प्रतिजानीयात् । एवं त्रीन् प्रसृतीन् इति कारिकापि ।

स्यादाभ्युदयिकं पूर्वं गर्भिण्या एकभोजनम् ।

अथ मन्त्रानुष्ठानक्रमः । पूर्वेद्युराभ्युदयिकं विधाय पत्न्या एकभोजनञ्च कृत्वा अपरेद्युः कृतस्नानां धृतधौतवस्त्रयुग्मां गन्धमाल्यभूषणैर्भूषितां दयितां दक्षिणत उपवेश्य ब्राह्मणैः सह पुण्याहवाचनं कृत्वा पाणिग्रहणप्रकरणोक्तप्रकारेण पत्न्याः प्रति सेतुबन्धनं च कृत्वा ततः शोभने मुहुर्त्ते अग्निं प्रतिष्ठाप्य तदुत्तरकालीनमपि अग्निसम्बन्धिकर्म परिसमाप्य उपासनं विधाय तत्रान्वाधाय आज्यसंस्कारपूर्वकं प्राजापत्यश्चरुङ् कृत्वा प्रत्यगग्नेर्पत्युर्दक्षिणतः प्राङ्मुखः पुंगवचर्मणि प्राङ्मुखीं 'पत्नीं उपवेश्य पत्नीश्चाग्निश्चान्तरं गत्वा' गोचर्मणि उपविश्य ततस्तां करेण संस्पृश्य इध्माधानपूर्वकं पुरस्तात्तन्त्रशेषं परिसमाप्य पूर्वेद्युः संस्कृतं यत्समानवत्सवर्णाया गोर्दधि प्रसृतिपरिमितं पत्न्याः परस्परसर्वांगुलिपाणिरूपप्रसृतौ निक्षिप्य तत्र दवनि यवं पुंसो लिङ्गमिव निक्षिप्य तत्पार्श्वयोर्माषद्वयं च निक्षिप्य किं पिबसीति पत्या त्रिः पृष्ट्वा पुंसवनमिति पत्न्या त्रिरुक्त्वा सयवं माषद्वयं दधि निश्शेषं पीत्वा जलमाचम्य पुनरेवं द्विः पीत्वा जलमाचामेदिति ।

वाजसनेयिनान्तु—एवं मुहूर्त्तविशेषः सर्वः सम एव । पुण्याहं वाचयित्वाऽभ्युदयिकश्राद्धं कृत्वा निशि स्त्रियमुपवास्य मङ्गलस्नानं विधाय नवे वाससी परिधाय प्रतिसरमाबध्य न्यग्रोधावरोहात् तदङ्कुरान् रात्रावुदकेन पेषयित्वा पावनवस्त्रेण रसं परिप्लाव्य 'हिरण्यगर्भः समवर्त्तताग्रे' 'अद्भ्यः सम्भूत' इत्येताभ्यां दक्षिणस्यां नासिकायामासिंचेत् किंकृतकसोमाश्रुं चैकैकन्यग्रोधावरोहपल्लवेषु प्रक्षिप्यति । तस्या स्त्रिया उपस्थे सोदकं शरावं निधाय सपदि कामयेत् वीर्यवान् स्यात् इति तदा तं स्पृष्ट्वा विकृतिसञ्ज्ञः सुपर्णोऽसि गुरुत्मान् त्रिवृते शिर इत्यारभ्य दिवं गच्छस्व एतैरेव मन्त्रैरभिमन्त्रयेत् । एवं प्रतिगर्भं पुंसवनं कुर्यात् । कालातिक्रमे प्रायश्चित्तहोमं विधाय पुंसवनं कुर्यादिति ॥

**इति श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते नृसिंहप्रसादे संस्कारसारे पुंसवनम्**



# अथानवलोभनम्

**अथानवलोभनाभिधं कर्माभिधीयते।** अथानवलोभनं गर्भसंरक्षणम्, तच्चतुर्थे मासि कार्यम्। तदुक्तमाश्वलायनगृह्यपरिशिष्टे—

तृतीये मासि पुंसवनं चतुर्थेऽनवलोभनम् गर्भसंरक्षणाभिधम्। तथोक्तं बैजवापगृह्ये—अथ पुंसवनानवलोभने करोति। मासि द्वितीये तृतीये वा पुरास्पन्दन इत्यापूर्यमाणपक्षे पुण्याहे यदहः पुंसा नक्षत्रेण च इमा युज्येत इति। तथा सांख्यायनगृह्येऽपि—

तृतीये मासि पुंसवनं तिष्येण श्रवणेन च।
चतुर्थे गर्भसंरक्षणञ्चेति…………………।

अत्राश्वलायनगृह्यम्—

अथास्यै मण्डलागारछायायां दक्षिणस्यां नासिकायां अजितामौषधिं नस्तं करोति। प्रजावती जीवपुत्राभ्याहैके प्राजापत्यस्य स्थालीपाकस्य हुत्वा हृदयदेशमालभेत्। यत्ते सुसीमे हृदये हिमणन्त प्रजापतौ मन्येहमातु विद्वान् सप्ताहस्योत्र पद्यग्रिणामीति।

अस्यार्थः—अत्र पौत्रमयं भिगामीति मन्त्रलिङ्गादिदमनवलोभनं विज्ञायते। अस्यै इति षष्ठ्यर्थे चतुर्थी। छान्दसत्वात् मण्डलाकारमागारं कृत्वा तच्छायायां अदः कर्म कर्त्तव्यम्। अजिता श्वेतदूर्वा। अभयत्वाभूतसादीध्यानेत्यादि प्रजावान् मन्त्रः। अग्निरैतु प्रथमो देवतानामिति जीवपुत्राः मन्त्राः।

अत्रैके आचार्याः प्रजावज्जीवपुत्राभ्यां श्वेतदूर्वारसस्य नाशाविलेनान्तःप्रवेशकरणरूपनस्तकरणमिच्छन्ति।

अपरे तु—आ ते गर्भो योनिमेतु, अग्निरैतु प्रथमो देवतानामिति मन्त्राभ्यामिच्छन्ति। तत्र आदावेव चरुं श्रपयित्वा आज्यभागान्तं कृत्वा प्राजापतये स्वाहेति स्थालीपाकं वा हुत्वा यत्ते सुसीमेति हृदये स्पर्शयेत्।

**अथ पुंसवनावलोभनयोः कर्त्तव्यताप्रयोग उच्यते**—गर्भमासप्रभृतितृतीयमासे गर्भाभिव्यक्तौ तदनभिव्यक्तौ चतुर्थे षष्ठेऽष्टमे वा मासि सीमन्तदिने वा कर्त्तव्यम्। तत्र पुंसवनावलोभने चिकीर्षुः पूर्वेद्युः उक्तलक्षणाया गोः क्षीरं दध्यर्थं

सम्पाद्य अनवलोभनार्थं वृत्ताकारं गृहदेशं सम्पाद्य विधिवत् आभ्युदयिकं कृत्वा भार्याञ्च गर्भाभिघातविरोधिहविष्यान्नकृतैकभुक्तां सम्पाद्य परेद्युः पुष्या-द्युक्तानुकूलनक्षत्रे पूर्वोक्तरीत्या भार्यामलङ्कृत्य उपविश्य ब्राह्मणैः सह स्वस्ति-वाचनं कृत्वा देशकालस्मरणपूर्वकं मम भार्यागर्भस्य पुरुषरूपता सिध्यर्थं तद-भिवृद्धिप्रतिरोधपरिहारार्थं पुंसवनमनवलोभनञ्च कर्म करिष्ये इति संकल्प्य विधि-वत्कौतुकसूत्रमाबध्य ततः शोभने मुहूर्त्ते विधिवदौपासनमग्निं प्रतिष्ठाप्याथ क्रियमाणपुंसवनानवलोभनहोमे द्रव्यदेवतापरिग्रहार्थमग्न्याधानं करिष्य इति संकल्प्य अग्न्याधानं विधाय अस्मिन्नन्वाहितेऽग्नौ इत्यादि 'चक्षुषी आज्येनेत्यन्तं पूर्वोक्तं उक्त्वा प्रजापतिं चरुद्रव्येण शेषेण स्विष्टकृतमित्युक्त्वा अन्वाधाय प्रणीतान्तं विधाय प्रजापतये त्वा जुष्टं निर्वपामीति चतुरो मुष्टी निरुप्य प्रदक्षिणादि बर्हि-रासादनञ्च तत्र विधाय भार्याहस्ते दधि निक्षिप्य पूर्वोक्तरीत्या सर्वं पुंसवनं निष्पाद्य अनवलोभने मण्डलाकृतिगृहं निष्पाद्य तत्र दूर्वापुञ्जं अदृष्टरजसा कन्यया दृषदुपलेन पेषयित्वा तत्पाणिना पिण्डीकृत्य शुद्धवसनाञ्चले संगृह्य आते गर्भो योनिमैत्वित्यादि समर्धयेत्। तत्र प्रजावदाख्यं सूक्तं अग्निरैतु प्रथम इत्यादि तव जीवन्तु पुत्रा इत्यन्तं जीवपुत्राख्यं च सूक्तं जपित्वा प्राङ्मुखीभूतभार्यायाः पश्चिमरितष्ठन् तन्मुखमवनमय्य दक्षिणनासाविले अंगुष्ठाग्रेण दूर्वारसमभि-षिञ्च्य तदुदरं प्रापय्य प्राजापत्यचरुं प्रागुक्तवदवदानधर्मेण प्रजापतये स्वाहेति हुत्वा, यत्ते सुसीम इति मन्त्रेण भार्याहृदयदेशं पाणिना स्पृष्ट्वा ततः स्विष्टकृदादि होमेन समापयेत्।

इति श्रीमन्महाराजाधिराजश्रीदलपतिराज-
विरचिते श्रीनृसिंहप्रसादे संस्कार-
सारेऽनवलोभनन्नाम कर्म ॥



# अथ सीमन्तोन्नयनम्

यस्मिन् कर्मणि सीमन्तः केशेषु पृथगाकृतिः।
उन्नीयते तदुक्तं हि सीमन्तोन्नयनं बुधैः।
तथा शल्पादर्भेण उदुम्बरयवाङ्कुरैः।
विभिद्य तस्याःकेशेषु मध्ये सीमन्तमुन्नयेत्।

तदुक्तञ्च—त एव समुत्थान एव प्रधानकर्म च गर्भसंस्कारः। सीमन्तं पात्रसंस्कारमित्युक्तेः। तत्र लौगाक्षिः—तृतीयगर्भमासे सीमन्तं कारयेत्। शुक्लपक्षस्य पुण्याहे पर्वणि वा—बैजवापः।

अथ सीमन्तोन्नयनं मासि चतुर्थे षष्ठेऽष्टमे वा। सोमः षष्ठे सीमन्तोन्नयनम्। आपस्तम्बः। सीमन्तोन्नयनं प्रथमगर्भे चतुर्थे मासि। सांख्यायनगृह्ये—सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनम्। विष्णुः—षष्ठेऽष्टमे मासि सीमन्तोन्नयनम्। याज्ञवल्क्यः—षष्ठेऽष्टमे वा सीमन्तो मास्यन्ते जातकर्म चेति। तथा स्मृत्यन्तरे—षष्ठे वाष्टमे सीमन्तकर्मेति। बृहस्पतिः—सीमन्तः षष्ठेऽष्टमे मासीति। तथा च ज्योतिः शास्त्रे—

सीमन्तोन्नयनं कुर्यात् मासि षष्ठेऽष्टमेऽपि वा।
पुंनामर्क्षगते चन्द्रे बलिभिस्त्ववलोकिते।
नरभनखारके विलग्ने सुरपति मन्त्रिणि मन्त्रिणि त्रिकोणे।
व्ययधनपञ्चमे शुद्धे केन्द्रेषु शुभगखगै रहितेषु तिथिषु गर्भपुष्ट्यै॥ इति।

इदञ्च सीमन्तोन्नयनं संस्कारमात्रं सकृदेवानुष्ठेयम्। गर्भसंस्कारपक्षे तु प्रतिगर्भमावर्त्तनीयम्। तदुक्तं हारीतेन—

सकृत्संस्कृतसंस्कारा सीमन्तेन द्विजस्त्रियः।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्॥

तथाह देवलः—

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता। इति।

गर्भसंस्कारपक्षे विष्णुः—

सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते।
केचिद् गर्भस्य संस्कारं प्रतिगर्भं प्रयुञ्जते।

तथा च शौनकः—चतुर्थे गर्भे सीमन्तोन्नयनमिति ।

ननु कः पुनःपक्षः श्रेयान् उक्तः यत्राप्यार्षाणि वाक्यानि श्रूयन्ते । न चान्यतरपक्षस्वीकारे निर्णयहेतुर्दृश्यते । उभयपक्षस्वीकारे विरोधः । नहि नहि सकृदनुष्ठानमावृत्यनुष्ठानमेकत्र समवैति, विरोधात् ।

निबन्धकारास्तु- न निर्णयं कृतवन्तः प्रत्युत भ्रान्तिमेवोत्पादयन्ति स्म । आपस्तम्बः—प्रथमगर्भ इत्याह अन्ये तु प्रतिगर्भमिति ।

अत्र वदामः—उभयानुग्रहस्य न्याय्यत्वादुभयपक्षनिष्ठवन्नप्रामाण्याविशेषाच्च गर्भक्षेत्रयोरयं संस्कारः । स च प्रथमगर्भ एवावश्यमनुष्ठेयः । शक्तश्चेत् प्रतिगर्भमनुतिष्ठेत् । अनुतिष्ठतां जातनामकर्मसीमन्त इति । तदुक्तमाश्वलायनपरिशिष्टे- गार्भपात्रसंस्कार इति श्रुतेः । गर्भपात्रयोरयं गार्भपात्रः । गार्भस्योदरगतस्य तदाधारस्य क्षेत्रस्य स्त्रिया इत्यर्थः । अस्मादेवान् गर्भमाधेहीति सत्यपि गर्भलिङ्गे तस्याः प्राधान्यान्न प्रतिगर्भमावृत्तिः ।

गृहप्रवेशं सीमन्तं स्त्रीप्रधानञ्च कारयेत् ।

इति वचनात् ।

तत्र द्वितीयादिगर्भे अष्टाचत्वारिंशत्संस्काराणां न्यूनता, आधानसंस्कारद्वारा तेषामपि अयं संस्कार इति । ततश्चैते संरक्षणसामर्थ्ये सति प्रतिगर्भमनुष्ठेयाः जातादीन्यप्यनुष्ठेयानि स्युः । यदा तु विनैव सीमन्तं प्रसवस्तदा पुनरनुष्ठेयताम् । तदुक्तं कालप्रदीपे—

स्त्रियामकृतसीमायां प्रसवे तु कथञ्चन
गृहीतपुत्रा विधिवत्पुनः संस्कारमर्हति ।

अत्र नक्षत्रादि निर्णयः । तत्र नक्षत्राणि हस्तमूलश्रवणपुनर्वसुमृगशिरः पुष्यप्रभृतीनि पुन्नक्षत्राणि पुंसवनोक्तानि ग्राह्याणि । तिथौ विशेषः । तत्र गुरुः—

चतुर्दशी चतुर्थी च कदाचित्तु शुभप्रदे ।
पञ्चदश्याञ्च सीमन्तं चन्द्रेति शुभकर्मणि ।
नक्तञ्च विष्टिः कुलिकौ च नेष्ठौ रिक्ताष्टमी पर्वकुजार्किवाराः ।
वर्ज्यञ्च जन्मत्रित्रयं तथान्यत् सीमन्तकर्मण्यशुभं च नेष्टम् ।

कालदीपे—

सीमन्तोन्नयने शस्तो राशिः सिंहालिवर्जितः।
सप्तमादौ चतुर्थे च पौर्णमासी चतुर्दशी।

सिंहवृश्चिकव्यतिरिक्ताराशयः शुभाः, शुभग्रहयुक्ताः शुभा इत्यन्ये। सप्तमादौ स्थाननाशं ततोऽन्यः स्त्रीसेवीतिस्मृत्यन्तरे। इदं कर्म पितृसन्निधौ स्वशुरादवरगोत्रजादिभिः कार्यम्।

अथ विधानमाह आचार्यः—

पतिः पूर्वदिने वृद्धिश्राद्धं कृत्वा परेऽहनि।
वधूमलङ्कृतां विप्रैः कृतपुण्याहवाचनाम्।
कृतकौतुकबन्धाञ्च वन्दिताऽभीष्टदेवताम्।
वृद्धनारीसमुद्दिष्टमङ्गलाचारसंयुताम्।
कारयित्वा स्त्रियं पश्चात् मुहूर्त्ते शोभनेऽखिलम्।

मुहूर्त्तन्तु विवाहप्रकरणे वक्ष्यते—

औपासनं समिद्धाग्निमन्वाधानपुरस्सरम्।
आज्यसंस्कारपर्यन्तं तत्र कृत्वा पुरस्तनम्॥ इति।

अत्रेदं गृह्यम्—अथाग्निमुपसमाधाय पश्चादानडुहंचर्मास्तीर्य प्राग्ग्रीवमुत्तरलोमस्वस्मिन् उपविष्टायां समन्वारब्धायां हुत्वा 'धाता ददातु दाशुषे' इति द्वाभ्यां राकामाह इति द्वाभ्यां नेज मेषेति प्रजापतये नत्वदेवतानन्य इति प्राच्यतापुंसवनवत् ज्ञेयाः। अपक्वफलद्वयोपेत्य औदुम्बरस्तवकः शल्ली आरण्यवराहविशेषसारः दर्भमण्डलानि एतैरेकीकृतैर्मूलतो बध्वा ललाटकेशयोः सन्धितारन्यक्रुद्धं सीमन्तं व्यूहति, सीमन्तो यथा भवति तथा त्रिचतुर्वा व्यूहति। प्रतिव्यूहञ्च मन्त्रावृत्तिः। मन्त्रश्च भूर्भुवः स्वरोमिति। यदाह भगवान्—

अत्रायं प्रयोगः—पूर्वोक्तमासे शुक्लपक्षे नक्षत्रराशिवारादि स्मृत्वा मम पत्न्याः गर्भाऽभिवृद्धिपरिपन्थिपिशितरुधिरप्रियालक्ष्मीभूतराक्षसीगणदूरनिरसनक्षमसकलसौभाग्यमूलभूतमहालक्ष्मीसमावेशार्थं स्त्रीसंस्कारलक्षणं सीमन्तोन्नयनाख्यं कर्म करिष्ये इति संकल्पः।

शोभने मुहूर्त्ते पूर्ववदौपासनाग्निं प्रतिष्ठाप्य पुनस्तिथ्यादिस्मृत्वा अद्य करिष्यमाणे सीमान्तोन्नयनहोमे द्रव्यदेवतापरिग्रहार्थमित्यादि चक्षुषी आज्येन इत्यन्तमुक्त्वा धातारं, राकां, विष्णुं प्रजापतिमेताः प्रधानदेवता

आज्यशेषेण स्विष्टकृतमित्यादि पूर्ववदुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनादि परिस्तरणान्तं पूर्वोक्तस्थले उक्तलक्षणमानडुहं चर्मास्तीर्य पूर्ववदुदगग्रे प्रोक्षणपात्रश्रुवौ प्रणीताज्यपात्र इध्माधानबर्हिषी क्रमादासाद्य पवित्रकरणाद्याज्यसंस्कारान्ते तस्मिन्नजिने तामाचान्तसलिलां पत्नीं प्राङ्मुखीमुपविश्य तया पाणिना स्पष्टः सन् इध्माधानाद्याज्यभागान्तं कुर्यात्। 'धाता ददातु दाशुषे' इति मन्त्रद्वयस्य हिरण्यगर्भो धाता अनुष्टुब्द्वितीयात्रिष्टुब् राकामहमिति तद्वयस्य गृत्समदो राका जगती नेजमेषे'त्यादिमन्त्रस्य हिरण्यगर्भो विष्णुः अनुष्टुब् प्रजापतिः इत्यस्य हिरण्यगर्भः प्रजापतिः त्रिष्टुप् एतैरष्टभिर्मन्त्रैः क्रमेणाष्टावाज्याहुतीर्हुत्वा पत्न्यापश्चिमतः पूर्वाभिमुखस्तिष्ठन् अपक्वफलद्वयमौदुम्बरस्तबकद्वयं त्रिशुक्लां शल्लींकुशांकुरत्रयं पाणिनैकीकृत्य गृहीत्वा तन्मूलेन भार्यायाः केशललाटयोः सन्धिमारभ्यामूर्धदेशाद्यथा सीमन्तरेखा भवति तथा 'ॐभूर्भुवस्वरोमि'ति मन्त्रं प्रत्यूहमुच्चरन् त्रिश्चतुर्वा केशान् पृथक्कृत्य यथाचारं सगोधूमामौदुम्बरमालां कण्ठे निधाय वीणया गायन्तौ द्विजौ सोमं राजानं संगायतामिति सम्प्रेषयेत्। ततो ब्राह्मणाय दक्षिणादि दत्वा भोजयेत्।

**याज्ञवल्कीयानान्तु अयं क्रमः**—मम भार्यायाः सीमन्तोन्नयनं करिष्ये इति संकल्प्य पुण्याहं वाचयित्वा विधिवल्लौकिकाग्निमुपसमाधाय दक्षिणतो ब्राह्मणमुपवेश्य उत्तरतः प्रणीताप्रणयनपरिस्तरणं प्रोक्षणीपात्रं निधाय आज्यस्थाली चरुस्थाली संमार्जनकुशाः उपयमनकुशाः समिधः स्रुवः ब्रह्मवरणादि आज्यासादनान्तं कृत्वा तिलमुद्गमिश्राँस्तण्डुलान् कृत्वा तिलमुद्गमिश्रस्थालीपाकेन 'प्रजापतेन अग्नये स्विष्टकृत' इति आहुतिद्वयं हुत्वा आज्येन महाव्याहृत्यादि प्राजापत्यन्तमीरयित्वा जयादिशांतिकं वचनान्तं कृत्वा चर्मस्थाने भद्रपीठं कृत्वा तत्रोपविष्टभार्यायाः पूर्वोक्तौदुम्बरादित्रयं गृहीत्वा शुभलग्ने सीमन्तमूर्ध्वं विनयति भूर्भुवः स्वर्विनयामि इति प्रतिमहाव्याहृति वा कृत्वा अयमूर्जोवृत्तो जीवोपलिनी भवेति मन्त्रेण त्रिवृत् प्रादेशमाबध्नातीति।

## अथ सोष्यन्तीकर्म

**अथ सोष्यती कर्माभिधीयते।** इदं वस्तिदेशं प्राप्ते गर्भे वेगेन सुखप्रसवार्थं कर्तव्यम्। तदाह-गोभिलगृह्यम् --सुप्रसूतये जपः कार्य इति गृह्यकारिकाकाराः। प्रसवार्थं शूलपत्रामद्भिरभ्युक्ष्यतां स्त्रियं मन्त्रेण--

दशमे मासि मन्त्रेण प्राक्तनेन तु यदा जरा। 'धजः पातु अवै तु प्रश्निरि'त्यमुं मन्त्रं जपेत् सभा नेक्षेत् सोष्यन्ती दोषदर्शनात् इति। दं दं सर्वेषां मेकमेव।

## अथ विष्णुबलिः

**अथ विष्णु बलिरभिधीयते**—तदाह स्मृतिरत्नकोशकारः—

वैष्णवो ह्यष्टमो मासो विष्णुर्गर्भस्य देवता।
बलिं च तूष्णीं वा कुर्यात् गर्भस्य परितुष्टये। इति।

तथा आचार्या अप्याहुः—

तथा विष्णुबलिश्चापि सप्तवध्रे स्तु तुष्टये।
प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते।
अकृते च भवेद्दोषः कृते पुष्टिं समृच्छति।
गर्भबाधानिवृत्यर्थं सुखसूत्यर्थमेव च।
महादोषापनुत्यर्थं बलिः कार्यो यथाविधि। इति।

तथा श्रीधरीये—

रोहिण्यां वा वैष्णवे पूर्वपक्षे द्वादश्यां वा सप्तमे वा तिथौ च।
मध्ये चाह्नः पूर्वभागे न रात्रौ विष्णोः पूजां कारयेद् गर्भपुष्ट्यै। इति।

अत्र मासविधिस्तु पूर्वमेवोक्तः। मास्यष्टमे विष्णुबलिं च कुर्यादिति। तथा च सूत्रम्—

अष्टमे मासि रोहिण्यां श्रवणे वा शुक्लपक्षे द्वादश्यां सप्तम्यां वा पूर्वाह्णे वा मध्याह्ने वा गर्भपोषणार्थं विष्णुबलिं कुर्यादिति। तथा च वशिष्ठः—

मास्यष्टमे च गर्भस्य कुर्याद्विष्णुबलिक्रियाम्।
श्रवणे चैवे रोहिण्यां पुष्ये चैव प्रशस्यते।
द्वितीया सप्तमी चैव द्वादशी च शुभा तिथिः।
शुभग्रहोदयाः श्रेष्ठास्तेषाञ्च दिवसा अपि।
पापास्त्रयारिगा श्रेष्ठा नेष्टाः सर्वेऽष्टमे स्थिताः। इति।

आश्वलायनाचार्यः—

बलिः प्रवक्ष्यते सम्यक् हितार्थाय क्रियावताम्।
विप्रैरवेक्ष्यमाणत्वात् वृत्तिकारादिभिस्तु तत्।

प्रोक्षणेऽग्निं समाधाय सुमुहूर्त्ते गृहेऽथवा ।
घृतैर्हुत्वाज्यभागान्तस्थण्डिले चार्चयेद्धरिम् ।
पद्मस्थं स्वस्तिकस्थं वा समभ्यर्च्य निवेद्य च ।
आज्याक्तेनैव चरुणा वक्ष्यमाणैर्हुनेत् त्रिभिः ।

तत्र निर्वापप्रोक्षणे तूष्णीं कर्त्तव्ये । तदवादि कारिकाकृता—

मन्त्रोक्तदेवतानान्तु तूष्णीमेवार्थ निर्वपेत् ।
चतुरश्चतुरो मुष्टीः प्रोक्षणञ्च तथा भवेत् ।
तदैव श्रपयेत्तत्र नास्तिक्याद्धरणं तथा ।
आदिष्टमन्त्रहोमेषु सर्वत्रैवं विधीयते ।

**पूजाप्रकारस्तु**—आश्वलायनाचार्यैरभिहितः—

तत्र देशः अग्नेर्दक्षिणतः कुर्यात् स्थंडिले पूजनं हरेः ।
विना स्थण्डिलयोगेन केचित् द्रक्ष्यति च द्विजः ।

पूर्वेद्युः कृत्यमुच्यते—

तौ तु सन्मङ्गलस्नातौ दम्पती संहताम्बरौ ।
भवेतां पूर्वदिवसे नान्दीश्राद्धादयस्तथा ।

होममन्त्रा उक्ताः—

अतो देवा इति चरुं तस्मिन्नग्नावधिश्रितम् ।
षड्भिर्विष्णोर्नु काद्यैश्च दशभिर्सप्तभिर्हुनेत् ।
संवामित्यष्टभिर्ऋग्भिः चतुर्दशभिरेव च ।
पर इत्यथ सूक्तेन पौरुषेण विचक्षणः ।
हुनेदादावथान्ते वा विष्णुर्योनिमिति त्रिभिः ।
चतुःषष्टिभिरन्तेन हुनेद् देवबलैर्हरिः ॥

बलिप्रकारमाह—

अग्नेः प्रागुत्तरे भागे लिप्ताङ्गां गोमयेन तु ।
सितेन रजसा कुर्यात् चतुरस्रं चतुष्पदम् ॥
चतुष्षष्टि परन्तस्मिन् कृत्वा स्पर्शं यथाविधि ।
चतुरङ्गुलमानेन प्रतिपाद्य ततो बलिम् ।
निर्ऋत्यादिषु तिष्ठन्ती मन्त्रैर्विकिरेद् बलिम् ।
पिण्डमेकञ्च तन्मध्ये दद्यादर्घ्यञ्च विष्णवे ।

नमो नारायणायेति तारायं मन्त्रमुच्चरन् ।
दम्पती प्राशयेदन्नं पृथक् पिण्डद्वयं शुभम् ।
स्वयं कर्त्ता चरेत् कर्म पत्न्या स्पृष्ट इति द्विजः ।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ।
दक्षिणां गुरवे दत्त्वा भुञ्जीयात्तु द्विजैः सह ।
बलिरेवं प्रकर्त्तव्यः प्रतिगर्भं द्विजन्मना इति ॥

अथ प्रयोगोऽभिधीयते—

गर्भाष्टमे मासि पूर्वेद्युः दम्पती स्नात्वा धृताहतवाससालङ्कृतो भूत्वा तत्र पतिः प्रागुक्तवदाभ्युदयिकं कृत्वा परेद्युः पुण्याहवाचनानन्तरं 'गर्भिण्याः मम पत्न्याः गर्भस्य विविधपरिपोषणपूर्वकसुखप्रसूतिसिध्यर्थं महापातकापनोदकं गर्भाधिदैवतविष्णुप्रीतिकामः श्रीविष्णुबलिनामकं कर्म करिष्ये' इति संकल्प्य प्रागुक्तलक्षणैः कर्तृगृहाङ्गणे तदन्तरे वा पूर्वोक्तविधिना स्थण्डिलेऽग्निं प्रतिष्ठाप्य पुनर्देशकालौ निर्दिश्याद्य करिष्यमाणे विष्णुबलिहोमे द्रव्यदेवतापरिग्रहार्थं इत्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा चतुःषष्टिवारं विष्णुप्रधानां देवतां च हव्येन, शेषेण स्विष्टकृतमित्यादि प्रागुक्तवद् हुत्वान्वाधाय परिसमूह्य आज्यभागान्तं कृत्वा ततो दक्षिणतोग्रे स्थण्डिलेऽष्टदलपद्मं स्वस्तिकं वा प्रकल्प्य तत्र विष्णुमावाह्य षोडशभिरुपचारैरभ्यर्च्य पुनर्यथासनमास्थितया पत्न्या पाणिना स्पृष्टः पुंसवनधर्मेण चरुमवदाय स्रुवा चतुःषष्टिमन्त्रैः मासित्वा चतुषष्टिमाहुतीः कुर्यात् ।

तत्रायं मन्त्रक्रमः—अतो देवा इति षडर्चस्य सूक्तस्य मेधातिथिर्ऋषिर्विष्णुर्देवता गायत्रीछन्दः। विष्णोनुकमिति सप्तदशर्चस्य सूक्तत्रयस्य दीर्घतमा ऋषिः विष्णुर्देवता आद्यस्य त्रिष्टुप्छन्दः, द्वितीयतृतीययोर्जागतं छन्दः । संवा इत्यस्य अष्टर्चस्यसूक्तस्य भरद्वाज ऋषिः विष्णुर्देवता त्रिष्टुप् छन्दः । परोमात्रायेति सूक्तद्वयस्य वशिष्ठऋषिः विष्णुर्देवता अनुष्टुप् छन्दः । सहस्रशीर्षेति षोडशर्चस्येसूक्तस्य नारायणऋषिः पुरुषो देवता अनुष्टुब् छन्दः अंत्यात्रिष्टुप् । नैगमेत्यस्य मन्त्रस्य हिरण्यगर्भ ऋषिः विष्णुर्देवता अनुष्टुप् छन्दः । सर्वत्रापि विष्णवे इदं न मम इत्युच्चार्यः । ततोऽग्नेरीशान्यां स्थण्डिले गोमयेनोपलिप्य सितेन रजसा चतुरस्रमारभ्य तन्मध्ये प्रागुदगायन्तरेखामुपलेखनेन प्राक् चतुरस्रं मण्डलचतुष्टयं सम्पाद्य तस्यापि रेखाद्वयस्य पार्श्वयोः प्रत्येकं रेखात्रयं संख्यया प्रागायताः षड्, उगायताश्च षड्रेखाःपरस्परं चतुरङ्गुलान्तरमालिख्य तत्र निष्पन्नेषु चतुःषष्टिपादस्थाने ऋतपदादि-

क्रमेण प्रथमबाह्यावृत्तौ ततोऽनन्तरस्तथा प्रतिष्ठा प्रागुक्तचतुःषष्टिपादष्ठानैः प्रादक्षिण्येन च बलिं दत्वा तन्मण्डलमध्ये 'ॐ नमो नारायणाय' इति बलिमामन्त्र्य च दत्वा पुनः कलशद्वयं कृत्वा दम्पती पृथगश्नीयाताम् ततः पतिः स्विष्टकृदादि होमशेषं समाप्य गुरवे दक्षिणां दत्त्वा ब्राह्मणान् भोजयित्वा स्वयं भुञ्जीत ।

**इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्गप्रवर्त्तक-**
**सकलभूमण्डलमण्डनसमस्तयवनाधीश्वरनिजामशाह-**
**समस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराज-**
**श्रीदलपतिराजविरचिते नृसिंहप्रसादे**
**संस्कारसारे सीमन्तोन्नयनम् ॥**



## गुर्विणीधर्माः

**अथ गुर्विणी धर्माऽभिधीयन्ते।** अवस्करेषु मुशलोपलादिषु नोपविशेत्, जलं नावगाहेत, शून्यगृहं च वर्जयेत्, वल्मीकं न स्पृशेत्। नचोद्विग्ना भवेत्। नखैर्न भूमिं विलिखेत्, नाङ्गारेण, न भस्मना च। न यातु सदा तिष्ठेत। व्यायामञ्च न कुर्यात्। तुषाङ्गारभस्मास्थिकस्मलेषु न समाविशेत्। कलहञ्च वर्जयेत् तथा गात्रभङ्गं च। मुक्तकेशी न तिष्ठेत्। नाशुचिस्तिष्ठेत्। उत्तरशिरा न शयीत, अधःशिरा च। वस्त्रहीना उद्विग्ना च आर्द्रचरणा च सती न तिष्ठेत्। अमङ्गल्यं च न वदेत्। हास्याधिका च न भवेत्। श्वसुरयोः पूजा नित्यं सदा मङ्गला प्रसन्नवदना भर्तुः प्रियहिते रता। असन्ध्याभोजना। वृक्षाधस्ताद् गमनावस्थानवर्जिता। सदानिद्रा न तिष्ठेत्, मञ्चकछायावर्जनरता। सर्वौषधिजलस्नानरता। कोष्णेन वारिणा च स्नानरता। कृतरक्तसुभूषणा, वास्तुपूजनरता, शुभशीला, तृतीयायां पार्वतीनक्तरता भवेत् इत्यादिनियमोपेतया भाव्यम्। तदाह--

एवं वृत्ता भवेन्नारी विशेषेण च गर्भिणी।
यस्तु तस्यां भवेत्पुत्रः शीलायुः वृद्धिसंयुतः।
अन्यथा गर्भपतनमवाप्नोति न संशयः।

गर्भिण्यापेक्षितं च दातव्यम्, अन्यथा याज्ञवल्क्येन—

दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्।
वैरूप्यं मरणञ्चापि तस्मात् कार्यं प्रियम्प्रियः। इति।

गर्भिणीपतिश्चैतावन्न कुर्याद्। तदुक्तम्—

तीर्थयात्रा नखश्मश्रुकर्त्तनोदधि दर्शनम्।
पर्वतारोहणञ्चैव न कुर्यात् गुर्विणीपतिः।
उदन्वतोम्भसि स्नानं तथैव प्रेतधारणम्।
अन्तर्वत्नीपतिः कुर्वन्नप्रजो भवति ध्रुवम्॥

**इति श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते**
**नृसिंहप्रसादे संस्कारसारे**
**गर्भिणीधर्माः॥**



# अथ सूतिकागृहनिर्माणविधिः

रत्नकोशे—–

आसन्नप्रशवे मासि कुर्याच्चैव विशेषतः ।
तद्वत्प्रसवकालः स्यादिति शास्त्रेषु निश्चयः ।
तारानुकूलराशौ च रिःफषष्ठाष्टवर्जिते ।
राक्षसस्य दिशि प्रोक्तं सूतिकाभवनं बुधैः । इति ।

वशिष्ठः—–

ऐन्द्रयां तु विक्रमस्थानमाग्नेय्यां धनसंग्रहम् ।
याम्यायां भोजनगृहं नैऋत्यां सूतिकागृहम् ॥ इति ।

वराहः—–

हस्त्यादित्यशशाङ्कतिष्यपवनप्रागीशमित्रोत्तरा-
श्चित्राश्विश्रवणेषु वृश्चिकघटौ हित्वा विरिक्ते तिथौ ।
शुक्राचार्यशनैश्चरज्ञशशिनां वारेऽनुकूले शुभे
राशौ वेश्मनि सूतिकागृहविधिः क्षेमङ्करः कीर्त्तितः ॥

गर्गः—

मेषे मृत्युभयं कुर्यात् वृषभेऽर्थस्य नाशनम् ।
मिथुने सूतिकानाशं कुलीरे वृद्धिमुत्तमाम् ।
सिंहे कन्यातुलायान्तु पुष्टायुः श्रीविवर्द्धनः ।
वृश्चिके कार्मुके राशौ शुभग्रहनिरीक्षिते ।
पापग्रहविनिर्मुक्ते सूतिकागृहमुत्तमम् ॥

## अथ सूतिकागृहसंस्कारः

तदाह सोमः—सूतिकागृहसंस्कारान् प्रसवान्तं कर्मेति । अयमर्थः—–सूतिकागृहसंस्कारं कृत्वा प्रसवस्यान्तर्भूतजातकर्म कार्यमिति । तत्र सांख्यायनगृह्ये संस्कारप्रकार उक्तः । काकजङ्घामेचकरातनीकोशतक्या बृहत्या कालक्रीतकस्येति मूलानि पेषयित्वा उपलेपयेत् । यस्मिन् देशे प्रजायेत, रक्षसा स महत्यै काकादन्यत्र काकजङ्घा मेचकरातनी काचमाचीकाकोशातकीघोषकः कालक्रीतकः ।

मार्कण्डेयपुराणे--

अग्न्यम्बुशून्ये च तथा निर्यूपे सूतिकागृहे।
अदीपशस्त्रमुशले भूतिसर्षपवर्जिते।
अनुप्रविश्य या जातमपहृत्यात्मसम्भवम्।
क्षणप्रसविनी बालं तत्रैवोत्सृजते द्विज।
सा जातहारिणीनाम सुघोरा पिशिताशना।
तस्मात् संरक्षणं कार्यं यत्नतः सूतिकागृहे।

यूर्पोत्र यूपाकारः काष्ठविशेषः।

**इति श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे सूतिकागृहनिर्माणम्।**



# जातकर्म

अथ जातकर्माभिधीयते—

जातमात्रकुमारस्य मुखमादौ विलोकयेत् ।
पैत्राद्दणाद्विमुच्येत पुत्रस्य मुखदर्शनात् ।।

तथा च–बह्वृच्ब्राह्मणम्—

ऋणमस्मिन् संनयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ।। इति ।

इदं स्नानोत्तरं कार्यं स्नानं शीतोदकेनैव ।

तथा च संवर्त्तः—

जाते पुत्रे पितुः स्नानं सचैलन्तु विधीयते ।
कुर्यान्नैमित्तिकस्नानं शीताद्भिः काम्यमेव च ।

तत्तु रात्रावपि कार्यम् ।

पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यदा निशि ।

इति वचनात् ।

अथ उत्तराभिमुखं स्नानम्—

श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् ।
उत्तराभिमुखो भूत्वा नद्यां वा देवखातके । इति ।

ज्योतिर्वशिष्ठः स्नानं दानमप्युपलक्षयति । तदुक्तम्—

पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम् । इति ।

तथा च विष्णुः—

जातकर्म ततः कुर्यात्पुत्रे जाते यथोदितम् ।
गृह्योक्तविधिनात्यर्थं स्नानानन्तरमेव हि ।

तच्च कर्म नाभिवर्धनात् प्रागेवानुष्ठेयम् ।

प्राग्नाभिवर्धनात् पुंसो जातकर्म विधीयते ।

इति मनुस्मरणात् ।

जैमिनिरप्याह—

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात् सूतकन्तु विधीयते ।

यत्तु विष्णुधर्मोत्तरेऽभ्यधायि—

अच्छिन्ननाभ्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि ।
आशौचापगमे कार्यमथवा नियतात्मभिः ।

इति द्रव्यालाभे ज्ञेयम् । अत एवोक्तम् बैजवापेन—

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालं चेदतीते सूतके भवेद् । इति ।

तत्रामश्राद्धं तदभावे हिरण्यश्राद्धं कार्यम्—

स्त्रीशूद्रश्वपचश्चैव जातकर्मणि चान्यथा ।
आमश्राद्धं तदा कुर्यात् विधिना पार्वणेन तु ।

इति वचनात् ।

व्यासोऽपि—

द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत भार्या यस्य रजस्वला । इति ।

पक्वान्ननिषेधस्तु आदित्यपुराणे दृश्यते—

जातु श्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।
यस्माच्चान्द्रायणाच्छुद्धिस्तेषां भवति नान्यथा । इति ।

वृद्धयाज्ञवाल्क्येन विशेष उक्तः—

तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु विवर्जयेत् ।
भक्षयित्वा तु तं मोहाद् द्विजश्चान्द्रायणञ्चरेत् । इति ।

ज्योतिःशास्त्रेऽपि विशेषः । मुहूर्तविधौ—

जाते पुत्रे पिता सद्यः सचैलं स्नानमाचरेत् ।
ब्राह्मणेभ्यो यथाशक्ति दत्त्वा कालं विशोधयेत् ।
जातमात्रकुमारस्य जातकर्म विधीयते ।
स्तनप्राशनतो पूर्वं नाभिकर्त्तनतोपि वा ।
एष्वतीतेषु कालेषु शुभयोगे शुभोदये । इति ।

आदित्यपुराणेऽपि--

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्।
आयान्ति तस्मात् तदहः पुण्यं पूज्यश्च सर्वदाः।
तत्र दद्यात्सुवर्णन्तु भूमिं गां तुरगं रथम्।
छत्रं छागं वस्त्रमाल्यं शयनं चासनं गृहम्।
अच्छिन्नायां प्रतिग्राह्यं न दोषस्तद्दिनेऽपि वा। इति।

वृद्धगार्ग्यः--

एष्वतीतेषु कालेषु शुभयोगे शुभोदये।
जातकर्मक्रियां कुर्यात् पुत्रायुःश्रीविवर्धनम्।
मृदुध्रुवक्षिप्रचरेषु भेषु शिशोर्विधेयं खलु जातकर्म। इति।
तिथिवारर्क्षमासाद्यैः फलं नेच्छन्ति पण्डिताः।
एष्वतीतेषु कालेषु शुभकालं निरीक्षयेत्।

वशिष्ठः—

वस्त्रगोभूहिरण्यादि दत्त्वा लग्नं परीक्षयेत्।
लग्नमेव प्रशंसन्ति ज्योतिःशास्त्रविदो जनाः।
अरिक्तपाणिर्दैवज्ञं वृणुयात् पुत्रजन्मनि। इति।

वशिष्ठः--

जातमात्रकुमारस्य मुखमस्यावलोकयेत
पैत्राद्दृणाद्विमुच्येत पुत्रस्य मुखदर्शनात्। इति।

अथ विधेयन्यत् तदुच्यते—तत्र हारीतः--जाते कुमारे पितॄणामामोदात् पुण्यं तदहस्तस्मात् तिलपूर्णानि पात्राणि सहिरण्यानि ब्राह्मणानाहूय पितृभ्यः स्वधा कुर्यात्। प्रजापतये च स्वधाशब्देन श्राद्धमुक्तम्। प्रजापतये च सहिरण्यं तिलपात्रं त्यजेत्। अत्राचार्याः—

जाते कुमारे तं दृष्ट्वा स्नात्वानीय गुरुं पिता।
नान्दीश्राद्धावसाने तु जातकर्म समाचरेत्।

कारिकाकारोऽप्याह--

पुत्रे जते पिता कुर्यान्नान्दीश्राद्धं विधानतः।
जातकर्म ततः कुर्यादन्यत्रालम्भनात् पुरा।

तत्र गृह्यकाराः आहुः—पुत्रं जातं पुरान्यैरालम्भानात् सर्पिमधुनी हिरण्येन प्राशयेत् । व्रते ददामीत्यादि मधुसर्पिषी हिरण्यानि कथं हिरण्येन प्राशयेत् । पुरान्यैरालम्भनात् पूर्वमन्यैप्रसवार्थव्यावृत्तैर्मनुष्यैः आलम्भनात् स्पर्शात् पुरा । पूर्वमयं संस्कारः कुमारस्यैव । कुमार्यास्तु–अमन्त्रकः कर्त्तव्यः । कुमार्या अमन्त्रकं जातकर्म कुर्यादिति । वृत्तिकारप्रभृतीनामपि इदमेवभिमतं यदमन्त्रकसंस्कारानुष्ठानमिति ।

तत्र प्रकारः—मधुसर्पिषी मानतो विषमतया मिश्रीकृते प्राशयेदिति ।

तदाहुः कारिकाकाराः—

एकस्मिन् भाजेन सर्पिः मधु चैव समानयेत् ।
अवघृष्टहिरण्येन संसृञ्जन् वस्तु वामया ।
हिरण्येन कुमारं तं प्राशयेन्मधुसर्पिषी ।
व्रते ददामि मन्त्रेण मातुरुत्सङ्गसंस्थितम् ॥

मन्त्रस्तु—प्र ते ददामि मधुनो घृतस्येत्यादिकः ।

शंखः—यवपिष्टमधुसर्पिषी सुवर्णान्तर्हिततयानामिकया मेधाजननं मन्त्रेण बैजयां च गृह्यनानामन्त्रैर्भू स्त्वामिदं धामीति तत्प्राशयेदिति ।

**अथपारस्करः** । जातस्य कुमारस्याच्छिन्नायां नाड्यं मेधाजननायुष्ये करोति दक्षिणं कर्णमभिनिधाय वागिति त्रिरथास्त्रगुह्यं नाम करोतीति । अभिनिधाय अभिमुखीभूय । गुह्यं मातापितृवेद्यम् । बैजवापगृह्ये विशेषः—जाते कुमारे अरणिभ्योऽग्निं निर्मथ्य तस्मिन् आयुष्यहोमान्तं जुहोति । तस्मिन् चूडाकरणोपनयनव्रतादेशगोदानिकक्रियाः तस्मिन्नेवोद्वाहयेयुरिति ।

तदाह मनुः—

प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते ।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषा । इति ।

याज्ञवल्कीयानामयं विशेषः—प्रसववेलायां तु 'गर्भं विमुञ्चतीं स्त्रियं दशमास्य' इति कण्डिकयाद्भिरभ्युक्षेत् । व्रते जाते कुमारे अच्छिन्ने नाले शीतेनोदकेन सचैलं स्नात्वा तत्रागत्य प्राणानायम्य–अस्य कुमारस्य मेधाजननाद्यर्थं जातकर्म करिष्ये इति संकल्प्य अन्नेनामेन, हिरण्येन वा आभ्युदयिकं श्राद्धं सुवर्णान्तर्हितया अनामिकया मेधाजननं 'करे……ति अभिलिख्य' मधुसर्पिषी घृतमेव वा प्राशयेत् ।

तत्र मन्त्राः—भूस्ते दधामि भुवस्ते दधामि इति । इदं कर्म स्वकाले एव कार्यं न कालातिक्रमेऽपि—

कालव्यतिक्रमे नैव मेधाजननमिष्यते ।
व्यतिक्रमेऽपि कर्त्तव्यास्तनयावावधिक्रिया ।

इति वचनात् ।

अथायुष्यं करोति कुर्यात् इति । अथ नालभेदानन्तरं इदमपि कर्मनामेति केचित् । नाभिसमीपे दक्षिणकर्णसमीपे वा त्रिवारं जपं कुर्यात् । तत्र मन्त्राः—अग्निरायुष्मान् वनस्पतिभिरायुष्मान्, तेन त्वायुषायुष्मन्तं करोमि, सोम आयुष्मान् स अवधीभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि । ब्रह्मायुष्मान् सः ब्राह्मणैरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि। देवा आयुष्मन्तस्तेऽमृतैरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि । ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि, पितरः आयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि, यज्ञ आयुष्मान् स दक्षिणाभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि, समुद्र आयुष्मान् स सस्रवं भूतिभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि इति मन्त्रेण त्रिर्जपेत् । 'कश्यपस्य त्रियायुषम्' इति कण्डिकाञ्चेति त्रिवारं जपेत् । स कुमारः सर्वमायुर्यत् यदन्यत् कामयेत्तत्सर्वमस्य स्यात् । ततस्तं कुमारं बाणेनाभिस्पृशेत् । दिवस्परीत्येतस्यानुवाकस्य उत्तमामृचं वर्जयित्वा अवशिष्ठं यदादात्समित्यभिधीयते ।

ततः कुमारस्य प्रतिदिशं पञ्चब्राह्मणान् स्थापयित्वा पूर्वब्राह्मणमुद्दिश्य यजमान इममनुप्राणितेति वदेत्, पूर्वदिगवस्थितो ब्राह्मणः प्राणेति वदेत्, दक्षिणस्थं ब्राह्मणमुद्दिश्य यजमान इयमनुप्राणितेति वदेत्, दक्षिणदिगवस्थितो ब्राह्मणो व्यानेति वदेत्, तथापरमुखाय वदेत्, पश्चिमास्थः अपानेति वदेदिति । एवमुक्तरीत्या उत्तरदिगवस्थितः उदानेति वदेत्, मध्यस्थब्राह्मण उक्तरीत्योक्त्वा ऊर्ध्वमवलोक्य समानेति वदेत्, ब्राह्मणसन्निधाने स्वयमेव तत्तत्कार्यं तत्र गत्वा कुर्यात् । ततः कुमारजन्मभूमिसविधे गत्वा तथाभिमन्त्रणं कुर्यात् ।

तत्रायं मन्त्रः—वेदनेमि हृदयं दिविचन्द्रमधिष्ठितम् । वेदाहं ते तन्माहं तद्विद्या पश्येम शरदः शतम् जीवेम शरदः शतं, शृणुयाम शरदः शतम्' । इत्याद्यैरभिमृश्य इदमायुष्यकरणाद्यभिमर्शनान्तं कालातिक्रमेऽपि कार्यम्, कुमारसंस्कारत्वात् ।

अस्मा भव परशुर्भव हिरण्यममृतं भव ।
वेदो वै पुत्रनामासि संजीव शरदां शतम् ।

इत्याद्यस्य नामकरोति। वेदोऽसीति पदद्वयात्मकमन्त्रेणास्य कुमारस्य दक्षिणस्तनं प्रक्षाल्य इमं स्तनं यस्ते स्तनं इत्येताभ्यां प्रयच्छति उत्तरस्तनं प्रक्षाल्य इमं स्तनं यस्ते स्तनं इत्येताभ्यां प्रयच्छति। उदपात्रं अपो देवेष्वित्यनेन मन्त्रेण द्वारदेशेन पञ्चपदार्थं कृत्वा लौकिकाग्निं प्रतिष्ठाप्य कणमिश्रितान् सर्षपान् हस्तेनाग्रावावपति।

अत्र मन्त्रः—स्वषंडामर्का उपावीरः शौण्डिकेयेत्यादिना इदं षण्डामर्काभ्यां न मम। आलिषं नानमिषः किं वदत इत्यादिना इदमालिस्तानिमिषाभ्यो देवताभ्यो न ममेति कुमारस्य ग्रहोपद्रवशङ्कायां कालेनोत्तरीयेण वा प्रच्छाद्य पिता कुमारमङ्के आधाय कुर्कुरटः सर्कुरः मत्रं जपेदभिमृशेत्।

आपस्तम्बीयास्तु--कुमारे जाते शीतलोदकेन स्नात्वा प्राणानायम्य जातकर्मणोऽङ्गं पुण्याहवाचनं करिष्य इति संकल्पं कुर्यात्। ततः कृतपुण्याहवाचनो जातकर्माङ्गभूतमाभ्युदयिकं श्राद्धं करिष्य इति संकल्पं कुर्यात्। ततः कृताभ्युदयिकः प्राणानायम्य कुमारस्य जातकर्म करिष्य इति संकल्प्य दिवस्परि प्रथमं जले अग्निरित्यादिजनयत् सुरेता इत्यन्तेनानुवाकेन अभिमृश्य अस्मिन्नहमित्यङ्के उपवेश्य—

अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे।
आत्मा वै पुत्र नामासि त्वं जीव शरदः शतम्।

अस्मा भव परशुर्भव हिरण्यममृतं भव पशूनां त्वा हिंकारेणाभिजिघ्राम्यसावत्र जन्मनाम्ना सम्बुध्यते कुमारं निर्दिशति तन्नामधेयं प्रयुञ्जीत। कार्त्तिकरौहिणमार्गशीर्षार्द्रिकपुनर्वसौतिष्यपौषमाघफाल्गुनहस्तचैत्रस्वातिविशाखानुराधाजेष्ठामूलकाषाढाश्रावणप्रौष्टपदरैवताश्वयुजाभरणेति। स्त्रिया इकारान्तानि पुनर्वसौ नकार इत्येवं पूर्वोक्तमन्त्रद्वयेनैव धर्मस्यावघ्राणं दक्षिणकर्णे जपं कृत्वा दर्भेण सुवर्णे वैष्टिकं बध्वा तेन घृतसंयुक्तं मधुमेधान्ते देवः सविता देवी सरस्वती।

मेधां मे अश्विनौ देवावाधत्तां पुष्करस्रजौ।
त्वयि मेधां त्वयि प्रजां त्वय्यग्निस्तेजो दधातु।

इत्यादिना भ्राजो दधात्वित्यन्तेन कुमारं प्राशयेत।

ततः क्षत्रिये त्वा निर्ऋत्यैत्यादि मुञ्चामि वरुणस्य पाशानिति पञ्चभिः सकृत्स्नापयेत्ततः भूःस्वाहा स्वः स्वाहा भुवःस्वाहा भूर्भुवःस्वः स्वाहेति चतुर्भिः पृषदाज्यं कांस्यपात्रे सकृत्प्राशयेत्। शेषं संमृज्येत्यादिना पथ्यमाना स्वे गृहे इति कुमारं मातुरङ्के आधायायं कुमारो धरां धयतु दीर्घमायुः तस्मै धङ् स्तनं प्रदाप्यायुर्वर्योयशोबलमिति। दक्षिणं स्तनं प्रतिष्ठाप्य परुमे हृदयं दिधीति द्वाभ्यां पृथिवी-

मभिमन्त्रमामपति न रुदति पनत्रयं वदामः इत्यादिरुदञ्चमित्यन्तेन शिरःसमीपे कुम्भान्निधाय विधिवदग्निं प्रतिष्ठाप्य प्राणायामं कृत्वा जातकर्माङ्गभूतं होमं करिष्य इति संकल्पं कुर्यात्। ततः सर्षपातफलीकरणमिश्रान् अञ्जलिना सकृद् गृहीत्वायं कलिं पतयंतेत्यादि पर्यधिं स्वाहा मरुद्भ्य इदं स्वाहा न ममेति वा शेषं हुत्वा पुनः स्वाहाकारपूर्वकं द्विर्जुहुयात्। एवमाहोमसमाप्तेः शण्डरथ्य इत्यन्तैः मन्त्रैः अक्षीणि निर्देहेदित्यान्तैः सप्तमन्त्रैरग्नये त्यागं कुर्यात्।

अथ कर्त्रैवमहरहरयं कलिमित्याद्या आहुतीरादशदिनं जुहुयात्। दशमेऽह्न्यतीते दम्पती प्राणानायम्य अस्य कुमारस्य नामकर्म करिष्याव इति संकल्पं कुर्याताम्। ततो नाम कुरुतः। तच्च द्व्यक्षरं चतुरक्षरं वा पूर्वोक्तलक्षितं ब्राह्मणो वासुदेव इति देवसम्बद्धं पितृपितामहादिसम्बन्धं वा यज्ञदत्तोऽसीति वा अयुजाक्षरं कुमार्या। विवाहात् प्राग् यानि संस्कारकर्माणि तान्यमन्त्रकाणि कुर्यात्। ततो ब्राह्मणभोजनं कृत्वा अशिषो वाचयेत्।

प्रवासादागतश्चेत् तदायं अङ्गात् सम्भवसीति द्वाभ्यां पुत्रमभिमन्त्र्य यवाभ्यां मूर्धन्यवघ्राय दक्षिणे कर्णेऽग्निरायुष्मानिति पञ्चमन्त्रान् जपेत्। कुमारी सर्वस्मादात्मनः सम्भूतासि संजीव शरदः शतमिति यजुषाभिमन्त्रयेत्। अङ्गादङ्गादित्यत्र वेदो वै पुत्रनामासीति विशेषः।

अक्षीणमूलप्रभवो विवास्यः तिष्ठेदद्दश्यः पितुरष्टवर्षम्।
पितुश्च मातुश्च कुलस्य हन्ता पादत्रये मान्त्यपदे समृद्धः। १ ॥
सार्पर्क्षजातः पितृमातृपुत्रं तन्मातुलान् हन्ति पदक्रमेण।
पित्रोर्मृतिर्हस्तयमत्रिपादे पितुस्तृतीये जलपुष्ययोश्च।
त्वाष्ट्राद्यपादे पितृमातृनाशश्चन्द्रोदये मातृवधो यमाद्याम्।
चतुर्घटीमूलमघाश्विनादौ गण्डान्तमन्ते च फणि इमन्ति।
नक्षत्रैस्तिथिभिर्लग्नैः गण्डान्तं त्रिविधं स्मृतम्।
नवपञ्चचतुर्थानां यद्वैकार्धघटी स्मृता।
नक्षत्रे मातरं हन्ति तिथौ च पितरं तथा।
लग्ने जातो विनाशी स्यात् गण्डान्तोप्यशुभे त्रिके।
जातो न जीवति नरो मातुरपत्यं भवेत् स्वकुलहन्ता।
यदि जीवति गण्डान्ते बहुगजतुरगो भवेद् भूयः।
अर्कश्चन्द्रः कुजः शौरी पञ्चमश्च प्रसूतिषु।
पितरं मातरं भ्रातॄनात्मानं च जिघांसति।

दिवार्कशुक्रौ पितृमातृसंज्ञितौ शनैश्चरेन्दुः निशि तद्विपर्ययात् ।
पितृव्यमातृव्यसुसंञ्ज्ञितौ तु यथोक्तयुग्मर्क्षगतौ न वा शुभौ ।
दिवाकरेन्दू स्थिरगौ कुजार्कं गतप्रदौ पुंगवयोषितोस्तथा ।
व्ययत्रिगौ मृत्युकरौ युतौ तथा तदेकदृष्ट्या मरणाय कल्पितौ ।
अर्कादष्टमराशिस्थौ प्रशवे सौरलोहितौ ।
सौम्यग्रहेण दृष्टौ चेत् पितुः सद्यो मृतिप्रदौ ।
चन्द्रात् सप्ताष्टधर्मस्था पापा मात्रा सहार्भकम् ।
त्रिविधमिह शास्त्रकारो नियतमनियतं रजोऽमृतं प्राहुः ।
योगसमक्षं तावत् आक्षेपाश्चाप्युपरिशेषौ ।
अथ होरागतः सूर्यो नच केन्द्रे बृहस्पतिः ।
निधने पापकः कश्चिद् जातमात्रो विनश्यति ।
पापास्त्रिकोणकेन्द्रस्था शुभाः षष्ठव्ययाष्टगाः ।
आदित्योदयवेलायां जातो यमपुरीं व्रजेत् ॥
उदयति च रवौ शीतांशौ वा त्रिकोणगे निधने वा ।
शुभोपेतः शुभैप्यरयुतेक्षितौ ................................... ।
लग्ने रविसौरकुजा शत्रुगृहे सप्तमे वा शशिक्षीणे ।
दृष्टो न देवगुरुणा सप्तभिरब्दैर्विनाशयति ॥
रन्ध्रकेन्द्रेषु पापे पापान्तनिधनहिबुकयुतं युक्ते तु चन्द्रे ।
एवं लग्ने भवति मदनच्छिद्रसंस्थेषु पापे (पात्रे) प्रयातु ।
सुशिशुवियोगमस्ते च पापैस्तु हितोंशुलग्ने ।
शुभे विलग्ने शुभदेवदृष्टे षष्ठाष्टमे वार्कसुतो नियुक्तः ।
जीवार्कसंस्थः शुभदृष्टिहीनो जातस्य पापः कुरुते प्रणाशम् ॥
मारयति षोडशाहे शनैश्चरः पापवीक्षितो लग्ने ॥
संयुक्तो मासेन तु वर्षादूर्ध्वन्तु मारयति ।
राहुश्चतुर्थषष्ठस्थो मरणाय निरीक्षितो भवति पापैः ।
वर्षैर्वदन्ति दशभिः षोडशभिः केचिदाचार्याः ॥
मासद्वयेन मरणमुदये केतुसंस्थिते ।
त्रिभिरब्दैः सितीरिष्ठं यदि शुक्रनिरीक्षितः ।
होरायां कण्टके भौमो भवेद्यस्तु प्रजायते ।
नच केन्द्रगतो जीवो जातश्चेन्मृत एव सः ।
वक्री शनिर्भौमगृहे प्रपन्नः छिद्रे च पापे च चतुष्ठये च ।

कुजेन संप्राप्तवलेन दृष्टो वर्षद्वये नाशयति प्रसूतम् ।
तातो विकाशोदरमातुलश्च मातामहीमातृसनामसूनुः ।
सूर्यादिखेटाः क्रमशः प्रदिष्टास्त्रिकोणगास्तेपि च तान्निहन्युः ।
रिपुधेयगतैः पापैर्यदि वा धनमृत्युगैः ।
लग्ने वा पापमध्यस्थे सूते वा मृत्युमाप्नुयात् ।
राशिप्रमितो वर्षैर्मारयति विलग्नपो रिपुस्थाने ।
मासैद्रेष्काणपतिर्दिवसैरंशाधिपो हन्ति ।
लग्नाधिपजन्मपत्री लग्नपतिश्चास्तमुपगतो यस्य ।
संवत्सरैस्तु मरणं निर्व्याजं कतिपयैरेव ।
कर्कटधामनि सौम्यषष्ठाष्टव्ययगो विलग्नर्क्षान् ।
चन्द्रेण दृष्टमूर्तिर्वर्षचतुष्टयेन मारयति ।
चन्द्रः सूर्यर्क्षगः शुक्रः षट्व्ययाष्टगतो यदि ।
शुभदृष्टियुतः षड्भिः वर्षैर्मृत्युं प्रयच्छति ।
सौम्या षष्ठाष्टमगात् क्रूरा वार्कार्किसंगमैर्दृष्टः ।
मासेन मृत्युदास्ते यदि ते न शुभैस्तु संदृष्टाः ।
बृहस्पतिर्भौमगृहे प्रभास्थः सूर्येन्दुभौमार्कजदृष्टमूर्त्तिम् ।
अष्टैस्त्रिभिर्भार्गवदृष्टिहीनो लोकान्तरे प्रापयति प्रसूतम् ।

पक्षेऽसिते भवति जन्म यदि क्षपायां कृष्णेऽथवाहनि शुभाः शुभदृश्यमानः ।
तच्चन्द्रमारिपुविनाशगतोपि यत्नाद्रापत्सुरक्षतिपितेव शिशुं न हन्ति ।
भौमदिवाकरशौरा छिद्रे जातस्य यस्य शुक्रगृहे ।
म्रियतेऽवश्यं स नरो जातु सुधारसो येन पीतोऽपि ॥

## अथारिष्टभङ्गः

सर्वैर्गगनभ्रमणैर्दृष्टश्चन्द्रो विनाशयति दुरितम् ।
आपूर्यमाणमूर्त्तिर्यथा नृपः सुनयेद्विद्वेषम् ।
चन्द्रः सम्पूर्णतनुः शुक्रेण निरीक्षितः सुहृद्भागे ।
अरिष्टहरणं श्रेष्ठो वातहरणं यथा वस्तिः ।
परमोच्चशिरसि तनुः शुक्रेण निरीक्षितो सुहृद्भागे ।
रिष्टहरणमभूत् तनयनिरीक्षितो हरति रिष्टम् ।
सम्यग्विवेकवमनं शमयति पित्तकफान्यथ दोषम् ।

चन्द्रः शुभवर्गस्थः क्षीणोऽपि शुभेक्षितो हरति रिष्टम् ।
जलमिव महातिसारान् दाडिमकक्वाथले कथितम् ॥

## अथ जन्मप्रभृतिदशदिनकृत्यमभिधीयते

तत्र व्यासः—

सूतिकावासनिलयात् जन्मदत्तमदेशतः ।
तस्यां यागनिमित्ते तु शुद्धिर्जन्मनि कीर्त्तिता ।

तत्र प्रथमदिने सुवर्णादिदानम्, षष्ठसप्तमयोर्बलिदानम् दशमेऽन्नदानम्, तत्राह परमर्षिः—

प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिधा शौचं न कुर्वीत सूतके पुत्रजन्मनि ।
दद्यात्तु प्रथमे हेमं षष्ठे वा सप्तमेऽपि वा ।
बलिदानन्तु दशमे ह्यन्नदानं प्रशस्यते ॥

बार्हस्पत्योऽपि—

जन्मनः पञ्चताराङ्कं याते चन्द्रे शिशुं पिता ।
भूषयेद् भूषणैः सर्वैः पञ्चायुधसमन्वितम् ॥

मार्कण्डेयः—

रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ॥

नारदः—

जननात् सप्तमे चाह्निः मृत्युरायाति घातकः ।
तद्दिने चैव रक्षेयं कर्त्तव्यायुर्विवृद्धये ॥
सायाह्ने पूज्य विघ्नेशमपूपैश्च पृथग्विधैः । इति ।

ततश्चायं शास्त्रार्थः—प्रथमदिने हेमदानं, पञ्चमदिने नृत्तगीतजागरणैरुत्सवः षष्ठे जीवन्तिकापूजनं जागरणादि लोकप्रसिद्धं सर्वं, अस्माभिः सर्वं वक्ष्यते । सप्तमे गणेशपूजनं नानापूपैश्च नैवेद्यं बलिदानञ्च ।

तत्र प्रयोगः—सप्तदिनप्राप्तमृत्युपरिहारार्थं गणेशपूजापूर्वकं बलिदानमहं करिष्ये । अनेन तुष्यतु धर्मराज इति । पञ्चमदिने कालतत्त्ववेदिना विशेष उक्तः ।

तत्र पञ्चायुधाभरणजातस्य पञ्चमदिने शुभदे मुहूर्त्ते पञ्चायुधाभरण-धारणमिष्टमाह--

तथोक्तं श्रीधरेण—धारणवतिप्रदेशपरिलम्बि सुपर्णसूत्रप्रोतं शिरोत्सर्जन-निवारणहेतुकं युक्तमिति **कालप्रदीपे**। पञ्चमपञ्चमदिने जातस्य जन्मनक्षत्रात् पञ्चमनक्षत्रे पञ्चमदिने वा पञ्चायुधाभरणधारणं पञ्चायुधसमन्वितं धारणं शंखचक्रगदाशार्ङ्गनन्दकानां पञ्चायुधतया लोकेऽपि क्वचित्। शास्त्रे प्रसिद्धिर्नि-रङ्कुशा। इदं च शिशोरित्युक्तेः।

कुमारवत् कुमार्या अपि कर्त्तव्यम्, तदाह वृद्धबृहस्पतिः—

जन्मनः पञ्चताराङ्कयाते चन्द्रे शिशुं पिता।
भूषयेद् भूषणैः सर्वैं पञ्चायुधसमन्वितैः।
विशेषात् कन्यकायाश्च कर्त्तव्यं मङ्गलेन च।
पुंसस्त्वायुधमाकल्पमायुः श्रीकान्तिदं शिशोः। इति॥

**इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डल-मण्डनसमस्तयवनाधीश्वरनिजामसाहसमस्तसाम्राज्य-धुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराज विरचिते संस्कारसारे जातकर्म।**

## अथ नामकरणम्

तत्र मनुः--

नामधेयं दशम्यां तु द्वादश्यां वास्य कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ।

दशाहे नामकरणं दशाहात्प्राग् सूतकनिवृत्तौ द्रष्टव्यम् । यदा सूतकमध्ये सूतकं तदा पूर्वसूतकावशिष्टदिवसैरेव सूतकनिर्वृत्तिर्दशाहादर्वाक् सूचिता ।

तदाह विष्णुः— आशौचव्यपगमे नामधेयमिति' । ततश्च—

पुण्ये तिथौ न रिक्तासु मुहूर्त्ते वा गुणान्विते ।

तथा भविष्यति--

नामधेयं दशम्यान्तु केचिदिच्छन्ति पार्थिवा ।
द्वादश्यामपरे राज्ञां मासे पूर्णे तथापरे ।
अष्टादशेऽवाह्नि तथा वदन्त्यन्ये मनीषिणः ।

याज्ञवल्क्यबृहस्पती—

'अहन्येकादशे नामे'ति । तदाह-गोभिलः—

जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणमिति ।

व्युष्टे अतिक्रान्ते । शङ्खः—

दशम्यामुत्थाप्य पिण्डवर्धनं श्राद्धं कार्यं पितॄणां तत्र सानिध्यमिति श्रुतेः ।

ब्रह्मणे च पश्चाहुतिं पूर्वं हुत्वा पितॄननुमन्य ततः । इति ।

तदहरेव नामकरणम् । तच्च नाम कुलदेवतानक्षत्राभिसम्बद्धम् पिता वा कुर्यादन्यो वा कुलवृद्धः । कथञ्च नामकर्त्तव्यमित्यपेक्षायां निरुक्तकाराभिहितो मार्गोऽभिधीयते । द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तःस्थं पुंसाम्, ईकारान्तं स्त्रीणाम् । एवं कृते नाम्नि शुचि तत्कुलं भवति । पिण्डवर्धनं श्राद्धं कार्यम् । पदनियममाह-यमः--

शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभूजाम् ।
भूतिदत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ।

इदञ्च कार्यन्नामान्ते यथा—रामदेवः, कृष्णदेव इति ।

शौनकः—

प्रतिष्ठाकाममन्विष्यन् ह्युत्तरं निर्दिशेत् पिता ।
ब्रह्मवर्चस्कामस्य निर्दिशेच्चतुरक्षरम् ॥

बैजवापस्तु–पिता नामकरोत्येकाक्षरं, द्व्यक्षरं, चतुरक्षरं, अपरिमितं, घोषवदान्तरन्तस्थं दीर्घाभिनिष्ठान्तं बोधयन्ति । यान्यक्षराणि वर्गतृतीयचतुर्थानि अन्तःस्था यरलवा अभिनिष्ठानो विसर्जनीयाः एतान्यादिमध्यावसाने यथाक्रमं कर्त्तव्यानि ।

अथवा पितामहादि नाम कुर्यात् पारस्करः—

दशम्यामुत्थाय ब्राह्मणान् भोजयित्वा पिता नामकरोति। द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितमयुजाक्षरमेकारान्तं स्त्रीतद्धितान्तवर्गतृतीयचतुर्थपञ्चमहकारश्च घोषवन्तः अन्तर्मध्ये अन्तस्था यरलवा अभिनिष्ठानं समाप्तिकृतं कृत् प्रत्ययान्तम्। न तद्धितम्, न तद्धितप्रत्ययान्तम् ।

स्त्रिया पुनरयुजाक्षरम् ।

गार्ग्यः—

मासनामगुरोर्नाम दद्याद्बालस्य वै पिता ।
कृष्णोऽनन्तो चतुश्चक्री वैकुण्ठोथ जर्नादनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमादिति ।

तथा मनुः—

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसयुक्तं शूद्रस्य तु जुगुप्सितम् ।

मङ्गल्यं मङ्गलशब्दप्रतिपादकम् । बलान्वितं शौर्यप्रतिपादकम् । धनसंयुक्तं धनप्रतिपादकशब्दसंयुक्तम् । जुगुप्सितं निन्दाभिधायकशब्दवत् । आद्यं लक्ष्मीश्वरादि । द्वितीयं युधिष्ठिरादि । तृतीयं महाधनादि । चतुर्थं नरदासादि । आशीर्वादाभिधानवत् स्त्रीणां कार्यम् । यथा सुभद्रा इति । विष्णुः—क्रमेण चतुर्णां वर्णानां शर्मवर्मगुप्तदास इति नाम कुर्यात् एतदन्तमन्यन्नाम कुर्यादिति तात्पर्यार्थः । ज्योतिर्वशिष्ठः—

अथातः सम्प्रवक्ष्यामि नामकर्म क्रियां शुभाम् ।
पुत्रजन्मर्क्षाद् द्वादशाहे वा दशाहे वा विशेषतः ।

कुर्याद्वा नाम कुर्वीत कुमारस्येति वेष्यते ।
तदभावे तु नक्षत्रे शुभांशकरणान्विते ।
सुलग्ने तिथिसंयुक्ते कुर्यादेवमिति स्थितिः ।
तस्याः सम्यक् परीक्ष्यैव कर्त्तव्यं शुभमिच्छता ।
उत्तरारेवतीहस्तमूलं पुष्यास्तु दारुणाः ।
श्रवणादीनि मैत्रश्च स्वातीमृगशिरस्तथा ।
प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि ।
स्वपुत्राय भ्रातृपत्नी नवमस्था शुभाग्रहाः ।
चापास्त्रिलाभषष्ठस्था नामकर्मणि पूजिता ।
व्ययवर्जशुभाः सौम्या प्रयच्छन्ति महायशाः ।
पूर्वोक्तं चैव मध्याह्ने कुर्यादेवं विचक्षणः ।
अपराह्णे च रात्रौ च नामकर्म विवर्जयेत् । इति ।

अथमन्त्रानुष्ठानक्रमः --उक्तदिनेऽनुकूले १२ दिवसे नाम करिष्यन् पूर्वेद्युः नान्दीश्राद्धं कृत्वा ब्राह्मणमाहूय स्वस्तिवाचनमुपक्रम्य पूर्वोक्तपुण्याहत्रयमुक्त्वा करिष्यमाणं नामोच्चार्यतन्नामवते स्वस्ति भवन्तो ब्रुवन्तु इत्युक्त्वा ब्राह्मणैः एवं नाम्ने स्वस्तीति प्रत्युक्ते पुनरेवं द्विवारमुक्त्वा पुण्याहशेषं समाप्य ब्राह्मणान् सम्बोध्य तदनुज्ञामादाय तिथ्यादिस्मृत्वा कुमारस्यायुरभिवृध्यर्थं व्यवहारसिध्यर्थं च नाम करिष्य इति संकल्प्य चैत्रमासादि मार्गशीर्षादि क्रमेण प्रागुक्तं कृष्णादिनामानि परिगणय्य क्रमप्राप्तं तत्र जन्ममासनाम प्रथमं कृत्वा पुंसो-जन्माक्षरां देवं पितामहं वा कृत्वा ततोऽभिवादनीयं नाम लक्ष्मीधरादि कुर्यात् । ततः पिता देवताभ्यो ब्राह्मणेभ्यश्च नमस्कृत्य ब्राह्मणान् भोजयेत् । दीनानाथांश्च तोषयेत् ।

अथ देशान्तरादागतस्य पितुः कृत्यमभिधीयते । यदा पिता प्रोष्य प्रत्यागच्छति तथा पुत्रस्य शिरः उभाभ्यां हस्ताभ्यां सर्पतो ग्रहीत्वा मूर्ध्यनि त्रिरवघ्राणं कृत्वा—

अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे ।
आत्मावै पुत्रनामासि [1]सञ्जीव शरदः शतम् ।

इति ऋचं जपित्वा कर्त्तव्यम् । एतच्च पुत्रेऽपि प्रोष्यागते कर्त्तव्यम्, न्यायस्य तुल्यत्वात् । तथात्र सत्याश्वलायनगृह्ये आगतश्चपुत्रमित्युपक्रम्यायं विशेषः—

---

१. त्वम् इति पाठान्तरम् ।

प्रोष्य कार्यवशाद् वेश्म पुनः प्रत्यागतो गृही ।
मन्त्रं गृहाणानंप्रीद इत्याद्यंरिषदन्तकम् ।
जपित्वाथ समीपेन बहिर्द्वारि स्थितो गृहम् ।
तद्वहीनतमित्यादिमन्त्रेण प्रविशेद् गृहम् ।

याज्ञवल्कीयानां त्वयं विशेषः—समेऽहनि सूतिकोद्यापनं कृत्वा दशम्यामेकादश्यां वा पुण्ये वापि वासरे पिता प्राणानायम्य अस्य पुत्रस्य नामकरणं करिष्ये, इति संकल्प्य पुण्याहं वाचयित्वा नान्दीश्राद्धं कृत्वा श्राद्धव्यतिरिक्तान् त्रीन् ब्राह्मणान् भोजयित्वा पिता कुमारस्य नाम कुर्यात् । तत्कृदन्तं कृत्प्रत्ययान्तं सत्सवँ पूर्ववद् ब्राह्मणस्य शर्मेति नाम । शर्मशब्दो मङ्गलवचनः । क्षत्रियस्य वर्मेति वर्मशब्दः शौर्यवचनः । वैश्यस्य गुप्तेति गुप्तशब्दः आद्यवचनः ।

ततश्चायं निर्णयः—मार्गशीर्षादिमासानां केशवादि द्वादशनाम सहितो नाम प्रयोगः । पुण्याहे मन्त्रन्त ॐ स्वस्ति ते शिवशर्मा अस्तु, केशवराम स्वस्ति भवत्वित्येवं नाम कुर्यात् । व्यवहारनाम्नः पूर्वं मासनामकरणं कर्त्तव्यम् । आपस्तम्बानां न क्वचिद्विशेषः ।

## अथ खट्वारोहणम्

ज्योतिः शास्त्रप्रसिद्धमेतत् तत्र बृहस्पतिः—

खट्वा[१]रोहस्तु कर्त्तव्यो दशमे द्वादशेऽपि वा ।
षोडशे दिवसे वापि द्वात्रिंशद्दिवसेऽपि वा ।

तथा भविष्यति—

अभीष्टे पुण्यदिवसे चन्द्रे ताराबलान्विते ।
मृदुध्रुवक्षिप्रभेषु माता वा कुलयोषितः ।
योगशायं हरिं ध्यात्वा प्राक्शीर्षं विन्यसेच्छिशुम् ।

मृद्वादिलक्षणं संग्रहेभ्यधायि ।

## अथ क्षीरपानम्

**अथ क्षीरपानमभिधीयते** । तत्र—

अन्नप्राशननक्षत्रदिवसोदयरात्रिषु ।
एकत्रिंशद्दिने विद्वान् पयः शंखेन पाययेत् ।

---

१. क्वचित् प्रेङ्खेति पाठः ।

एकत्रिंशद्वासरे वा द्वितीये जन्मर्क्षे वा शुद्धलग्नेऽनुकूले।
शंखे क्षीरं सन्निदध्याच्छिशूनां वक्त्रे धात्री पूज्यपूजां विधाय।

जातस्य कुमारस्य जन्मदिवसादेकविंशतितमे दिवसे तदलाभे द्वितीयजन्मनक्षत्रे वा क्षीरपानं कारयितव्यम्। तदुक्तं नृसिंहेन--

एकत्रिंशद्दिने चैव पयः शङ्खेन पाययेत्।
नक्षत्रे मासि सम्पूर्णे जातर्क्षे च विशेषतः।
मासान्ते दुग्धपानं स्यात् पश्चात्काले सुशोभने।
उत्तरात्रयहस्तौ च त्वाष्ट्रवैष्णववासवाः।
पौष्णाश्विनौ मघास्वाती वरुणादितिजीवभम्।
रोहिण्यैन्दिवमैत्राश्च क्षीरपाने शिशोः शुभाः।
षष्ठीरिक्ताष्टमीदर्शा वर्ज्या विष्टिर्दिवा[१]ऽपि च।
वर्ज्याश्चाशुभयोगाश्च कृष्णे चान्त्यत्रिभागकः।
अधोमुखानि वर्ज्यानि मीनजालिमृगाविजे।
जीवशुक्रेन्दुसौराणां वारवर्गोदयाः शुभाः।
योगिनीराहुरुद्रादिमुखञ्चैव विवर्जयेत्।

**इति श्रीमन्महाराजाधिराजदलपतिराजविरचिते नृसिंहप्रसादे संस्कारसारे खट्वारोहक्षीरपानविधिः।**

---

१. स्थिराणि इति वा पाठः।



# अथ निष्क्रमणम्

अथ निष्क्रमणमभिधीयते। निष्क्रमणं नाम शिशोर्गृहात् प्रथमनिर्गमः।
तदाह-बृहस्पतिः—

अथ-निष्क्रमणं नाम गृहात् प्रथमनिर्गमः।
अकृतायां क्रियायां स्यात् आयुःश्रीर्नाशनं शिशोः।
कृते सम्पद्विवृद्धिः स्यादायुवर्धनमेव च।

तथा भविष्यति—

द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात्।

प्रथमनिर्गमः—

अकृतायां क्रियायां स्यात् आयुः श्रीनाशनं शिशोः।
कृते सम्पद्विवृद्धिः स्यादायुवर्धनमेव च।
चतुर्थे मासि कर्त्तव्यं तथान्येषां मते विभो।

तथा मनुः—

चतुर्थे मासि कर्त्तव्यं शशोर्निष्क्रमणं गृहात्।

शङ्खः—

चतुर्थे मासि कर्त्तव्यं बालस्यादित्यदर्शनम्।
चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम्।

अतुल्यार्थत्वाच्चन्द्रसूर्यदर्शनयोर्न विकल्पोऽपि तु समुच्चयः।

तथा भविष्यति—

द्वादशेऽहनि राजेन्द्र शिशोः निष्क्रमणं गृहात्।

इति लौगाक्षिः। तृतीयेऽर्धमासे दर्शनमादित्यस्य। तृतीये पक्ष इत्यर्थः।

विष्णुः --

चतुर्थे मासि सूर्यस्य दर्शनमिति । अत्रापि शाखाभेदाद्विकल्पः । अत्र सूर्येन्दुदर्शनयोराभ्युदयिकश्राद्धाभावोवसीयते । तदाह--छन्दोगपरिशिष्टे कात्यायनः--

सूर्येन्दोः कर्मणी ये च तयोः श्राद्धं न विद्यते ।

इतिमुहूर्त्तसंग्रहे—

उपनिःक्रमणं कुर्याच्चतुर्थे मासि सावने ।

चत्वारि विश्वमादीनि तिस्रोहिर्बुध्न्यभाद्दिमुरिति । तत्र मैत्रआदित्यपुष्यरोहिणी उत्तराषाढादीनि चत्वारि, अहिर्बुध्न्यादीनि उत्तराभाद्रपदादीनि त्रीणि । पक्षः शुक्लपक्षः ।

तदुक्तम्--

पूर्वपक्षःशुभःप्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।
रिक्ता षष्ठचष्टमी दर्शो द्वादशी च विवर्जिता ।
वर्ज्याश्चाशुभयोगाश्च विष्टिश्च शकुनान्यपि ।
वृषालिमेषा वर्ज्याः स्युस्तथैवाधोमुखानि च ।
केन्द्रत्रिकोणगाः सौम्याः पापाः षष्ठत्रिलाभगाः ।
उपनिष्क्रमणे शस्ताः मातुलो वाहयेच्छिशुम् ।
अन्नप्राशनकाले वा कुर्यात् निःक्रमणक्रियाम् । इति ।

अथानुष्ठानक्रमः—प्रकारश्चाभिधीयते—जन्मापेक्षया चतुर्थमासादावुक्तेकाले शुक्लपक्षे प्रागुक्तनक्षत्रादियुक्ते दिवसे बालकस्य निःक्रमणाख्यं कर्म करिष्ये इति संकल्प्य ब्राह्मणा दर्भपूर्णकलशकन्यागणपुष्पाक्षतप्रदीपमालाध्वजलाजालक्षणसप्तद्रव्याणि च पुरतो नयन् यथाविभवमुचितवाहनमधिरोहयेत् । पिताकृतमङ्गलस्नानः शिशुमलङ्कृत्य सम्यग्ब्राह्मणभोजनं कृत्वा तैश्च ब्राह्मणैः स्वस्तिवाचनं वाचयित्वा तिथ्यादिस्मृत्वा अस्य शिशोः दीर्घायुरभिवृद्धचर्थं निःक्रमणाख्यं कर्म करिष्ये । आरूढं तदलाभे निजबन्धुस्कन्दमारूढवालकं शाकुनिकसूक्तद्वयजपेन गृहान्निर्गमनं विधाय स्वाभिमतमेकदेवायतनं नीत्वा तस्य देवस्य प्रदक्षिणं विधाय ततः प्रविश्य गन्धादिभिर्नैवेद्यान्तैरभ्यर्च्य तस्मै देवाय शिशुं प्रणमय्य तत्र वर्त्तमानैः शिष्टैर्विद्वद्भिर्विहिताशीर्वचनं बालं गोमयेनोपलेपिते चतुरस्रप्रदेशे धान्यराशा-

वुपवेश्य तत्र गणपतिं भूतपतिं च सम्पूज्य नानाविधभक्ष्यैः समान् बालकान् परितोष्य तं च शिशुं ललाटे मूर्धनि च गन्धपुष्पाक्षतैरलङ्कृत्य मृतसंजीवनीमन्त्रेण रक्षां कृत्वा ततश्च तमादाय तस्मात् स्थानान्निर्गत्य शिष्टातिसुहृद् ब्राह्मणानामाशिषो गृहीत्वा वृद्धसम्बन्धिनारीभिर्नीराजनं कृत्वा निजगृहं गच्छेदिति ।

## अथ प्रकारान्तपेण सूर्यावलोकनम्

याज्ञवल्कीयास्तु--कुमारस्य सूर्यनिरीक्षणरूपं कर्म करिष्य इति संकल्प्य तच्चक्षुरिति मन्त्रेण सूर्यमुदीक्षयेत् पितुर्मन्त्रपाठः ।

**इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्गकर्मानुष्ठानप्रवर्त्तक-सकलभूमण्डलमण्डनसमस्तयनाधीश्वरश्रीनिजामशाहसमस्तसाम्राज्य-धुरन्धरश्रीमन्महाराजाधिराजदलपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे निष्क्रमणम् ।**

## अथ कर्णवेधः

### अथ कर्णवेधप्रकरणमभिधीयते ज्योतिःशास्त्रे

कार्त्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने।
सुनक्षत्रे शुभे चन्द्रे सुस्थे शीर्षोदये शुभे।
दिनछिद्रव्यतीपातविष्टिवैधृतिवर्जिते।
शिशोरजातदन्तस्य मातुरुत्संगसर्पिणः।
सौचिको वेधयेत् कर्णौ सूच्या द्विगुणसूत्रया। इति।

### अथ नक्षत्राणि

अश्विनीपुनर्वसुतिष्यहस्तस्वातीन्दुचित्राहरिरेवतीषु कार्यः। वारास्तु चन्द्रगुरुशुक्रवारेषु। तदुक्तम्

चन्द्रेऽनुकूले गुरुशुक्रवारे कर्णौ तु वेध्यावमरेज्यलग्ने। इति।

मुहूर्त्तसंग्रहेऽपि—

दशमे द्वादशे वापि षोडशे कर्णवेधनम्।
प्रथमे सप्तमे मासि चाष्टमे दशमे तथा।
द्वादशे च तथा कार्यः कर्णवेधः शुभावहः।

कालप्रदीपे—

हस्ताश्विनीस्वातिपुनर्वसूषु तिष्येन्दुचित्राहरिरेवतीषु।
चन्द्रेऽनुकूले गुरुशुक्रवारे कर्णौ तु वेध्यावमरेज्यलग्ने।

**इति श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते नृसिंहप्रसादे संस्कारसारे कर्णवेधः**



# अथ शिशुभीतिरक्षणकर्म

यदि बालकः प्रमादेन भुवि पतनादिना बिभेति तदा पार्थिवरजो हस्तेन गृहीत्वा बालशिरःप्रदक्षिणमावर्त्त्य विष्णुस्ते पूर्वतः पातु इति श्रीरामो रक्षत्वित्यादि श्रीरामदुर्गं वा, तप्तहाटककेशान्तेति मन्त्रेण वा रक्षां कुर्यात्। इदञ्च रक्षाविधानं शकटभञ्जने नन्दगोपेन भीतोऽयं शिशुरिति बुध्या श्रीकृष्णस्य कृतम्। तथा हरिवंशे--

नन्दोऽङ्के सुतमारोप्य भूरेणुं परिगृह्य च।
शिरः प्रदक्षिणं कुर्वन् मन्त्रमेतमुवाच च।
विष्णुस्ते पूर्वतः पातु रुद्रो रक्षतु दक्षिणे।
ब्रह्मा च पश्चिमं पायात् चन्द्रो रक्षत्वथोत्तरम्।
उपरिष्टात्तथा सूर्यः पाश्चाद्वाधश्च वासुकिः।
पायादूर्ध्वमथो वत्सं शिष्टाः कष्टाः समीरणः।
स्वस्ति करोतु भगवान् पिनाकी वृषभध्वजः।
गावो रक्षन्तु सर्वत्र पृथ्वी पातु सदा शिवा।
एवमुच्चारयन् मन्त्रं कृष्णदेवेन भाषितम्।
स एव मन्त्रो बालानां रक्षायै परिकीर्त्तितः॥

**इति भीतबालकरक्षाविधिः**



# अथान्नप्राशनम्

अथान्नप्राशनमभिधीयते । तत्र मनुः—

षष्ठेऽन्नप्राशनं मासि यच्चेष्टं मङ्गलं कुले ।

बृहस्पतिसंहितायाम्—

मासि षष्ठेऽथ सौरेण चाष्टमे दशमेऽपि वा ।
द्वादशे वा परं विद्यात् युग्मेषु शिशुजन्मतः ।
पञ्चाशद्दिवसात् त्रिघ्नात् पश्चात्रिहतषष्ठिकान् ।
अर्वागिवोत्तमा भुक्तिर्मास्यन्येप्येवमूचिरे ।
यानि कार्याणि चोक्तानि मासि कार्ये शचीपते ।
तेषु तेष्वेवमेवं स्यात् मासकालस्तु सावनात् ।
मासप्रोक्तेषु कार्येषु मूढत्वं जीवशुक्रयोः ।
न दोषकृत्तथामासे लक्षणे च वलान्विते ।

तत्र लौगाक्षिः—षष्ठे मासेऽन्नप्राशनं जातेषु दन्तेषु चेति । तत्रापि यथाचारं व्यवस्था मार्कण्डेयो विशेषमाह—

देवता पुरतस्तस्य धात्र्युत्संगगतस्य च ।
अलङ्कृतस्य दातव्यं अन्नपात्रे च काञ्चने ।
मध्वाज्यकनकोपेतं पाययेत् पायसं नु तम् ।
कृतप्राशमथोत्संगाद्धात्री बालं समुद्धरेत् । इति ।

वृद्धगार्ग्यः—

हस्तोत्तराश्वयुजपौष्णसौम्यतिष्यं समाहितः ।
आरोग्यं बालबृद्धिं च कुर्यात् भोक्तुर्निशाकरः ।
मैत्रवारुणवायव्यवासवत्वाष्ट्रवैष्णवम् ।
युक्तःशीतकरो भोक्तुर्मित्रस्थोस्य धनावहः ।
उत्तराभिश्च तिसृभिः रोहिण्याञ्च कलापते ।
भोजनैः वृद्धिमाप्नोति स्थानकाममथापि वा ।

मूलेन्द्राग्निमघाभिस्तु संयुक्ते शशलाञ्छने ।
नचात्र भोजनं कुर्यान्न तु बालान्नभोजनम् ।
सौम्यानि सौरसर्पेन्दू त्रिपूर्वासहितः शशी ।
शोकं कलहमायासं जनयेदन्नकर्मणि ।
मूर्त्तिद्रवणपुत्राय धर्मदारेषु संस्थिताः ।
भोक्तुरारोग्यमायुष्यं विदध्यादमरार्चितः ।
स्वसुराद्यर्थचतुरः धर्मभ्रातृषु संस्थितः ।
सम्प्रीतिमतिवृद्धिञ्च कुर्याद्भोक्तुः गुरोःसुतः ।
आयस्त्वायारिदुश्चिकां बन्धुदाराष्टपञ्चमे ।
बुधः शुभकरो भोक्तुरिति तज्ज्ञैरुदाहृतम् ।
लाभभ्रात्रासुतस्त्रीभिर्योगं याति निशाकरः ।
नवान्नभोजनं कुर्यात् आयुरारोग्यवृद्धये ।
आयान्ति भानृणात्पूर्वे राहुमन्दारकेतवः ।
परिरक्षन्ति भोक्तारं करिष्यन्ति च सम्पदम् ।
षष्ठे च निधने व्योम्नि बन्धुव्ययगतो गुरुः ।
चोरात्सर्पासिशस्त्रेभ्यःपीडां भोक्तुः समाहरेत् ।
दशमो द्वादस्थो वा षट्सप्तस्थोऽपि भार्गवः ।
परिरक्षसि भोक्तारं करिष्यन्ति च सम्पदम् ।
षष्ठे च निधने व्योम्नि.......................... ।
अर्थनाशमरेर्वृद्धिं कुर्याद् भोजनकर्मणि ।
नैधने व्ययषष्ठे च कर्मस्वनुगतो बुधः ।
कर्मक्षयपरिक्लेशशोकरोगभयप्रदः ।
लाग्नाष्टरिपुधर्मेषु कर्म दारेषु संस्थितः ।
भोक्तुर्व्ययधनक्लेशशोकरोगप्रदः शशी ।
पापाः समस्ताः व्यस्ता. वा त्रिकोणाष्टमकंटके ।
अन्नभोजनकृत्येषु क्लेशशोकभयङ्करम् ।

अष्टमस्थो धरासूनुर्भोक्तुर्मरणमादिशेत् ।
भार्गवोऽपि कलत्रस्थः स्वस्तंगोकुलगो वुधः ।

तथा वशिष्ठ आह—

विष्टिश्च नवमं चैव पक्षच्छिद्रांतथैव च ।
वर्जयेद् भोजने कार्ये पातवैधृतयोस्तथा ।
पापाः सौम्याः सितेन्दूनां द्रेष्काणदिवसांशकाः ।
शस्ताः शुभावहाः सम्यग् ध्रुवञ्चंद्रार्कजा कुजाः ।
गौश्च कुम्भतुलाकन्यासिंहकर्किमृगोदयाः ।
एते च राशयः सधनमेषवृषवृश्चिकाः ।
सम्पत्साधनमैत्रेषु क्षेमे परममैत्रिके ।
भोजयेच्छुभवृद्धचर्थं कर्माधानेऽक्षमेऽपि वा ।
शेषर्क्षवर्जिता जन्म विंशत्यपरनैधना ।
जन्मर्क्षं परिहरेद्विद्वान् विशेषेण विनाशकृत् ।

केचिदन्नप्राशनोपनयनादिषु जन्मनक्षत्रमिच्छन्ति । दामोदरीये—

अन्नप्राशनकर्मसूपनयने राज्याभिषेके तथा ।
जन्मर्क्षं शुभदं वदन्ति मुनयो नान्ये च कार्ये शुभम् ।

अत्रैव गुणफलानि तत्र पारस्करः—सर्वान् रसान् सर्वमन्नमेकत्रोद्धृत्य प्राशयेत् । तूष्णीं हतभारद्वाजमांसेन वाक्प्रसारितकामस्य, कपिंजलमासेनान्नायकामस्य, मात्स्येन जवनकामस्य, कृकषाया आयुष्कामस्य, आज्यं ब्रह्मवर्चसकामस्य, सर्पिः सर्वकामस्य अन्नपर्यया । वाक्प्रसारितं वाक्प्रसरः । कपिंजलो गौरतित्तिरः । कृकषा गोधा, अन्नपर्यया अन्नपरिपाट्या । तथा सांख्यायनगृह्यम्—षष्ठे मास्यन्नप्राशनं आजमन्नाद्यकामः, तैत्तिरं ब्रह्मवर्चसकामः । मात्स्यं जवन[1]-कामः, घृतौदनं तेजस्कामो, दधिमधुघृतमिश्रमन्नं प्राशयेत् ।

---

१. जवनम् = वीर्यमित्यर्थः ।

अथानुष्ठानक्रमनिष्कर्षः—कुमारस्य जन्ममासादारभ्य षष्ठे मासि अन्यस्मिन् वा युग्मेसु सामयुग्मेन स्त्रीणां प्रागुक्तेऽनुकूलेऽहनि बालकस्यान्नप्राशनाभिधं कर्म करिष्यन् जनकः सहोमकपक्षाश्रयणे पूर्वेद्युः नान्दीश्राद्धमपरेद्युः कौतुकबन्धनं कुर्यात्। तदनाश्रयणे तद्दिनेऽन्नप्राशनदिने बालकस्य मङ्गलस्नानं विधाय सम्यगलंकृत्य च ब्राह्मणान् भोजयित्वा गन्धमाल्यदिभिरर्चितं तैस्तैः भोजितैः ब्राह्मणैः पुण्याहं वाचयित्वा तिथ्यादिसम्यक् स्मृत्वास्य बालकस्य मातृगर्भमलप्राशनशुद्धिद्वारा ब्रह्मवर्चसेन आयुःप्रसिद्धिलक्षणफलसिध्यर्थमायुरभिवृध्यर्थमन्नप्राशनं कर्म करिष्ये इति संकल्प्य स्वसमीपस्थापिते शुभासने स्वाभीष्टदेवतापुरस्थितधान्यके वालं प्राङ्मुखमुपवेश्य स्वर्णपात्रे दधिमधुघृतमिश्रमन्नं सुवर्णपात्रेणानीयान्नयतेन्न इत्यस्य नहुषो नृपतिर्जगतीअन्नपतये इत्यनेन मन्त्रेण सकृत्फलं भोजयित्वा पुनर्बालकं तूष्णीं भोजयित्वा मुखं प्रक्षालयेत्। अङ्काधिरोहणपक्षे तदङ्कादवरोह्य मुखं प्रक्षालयितव्यम्। स्त्रियामेतत्सर्वमपि तूष्णीं कुर्यादिति सर्वमकलङ्कम्।

**अथ द्वितीयप्रकारे याज्ञवल्कीयानां विशेषः**—अस्य बालकस्यान्नप्राशनं करिष्य इति संकल्प्य आभ्युदयिकं श्राद्धं कृत्वा लौकिकाग्नि प्रतिष्ठाप्य परिसमूहनादिकृत्वा ब्रह्म ब्रह्मासनादिदक्षिणान्ते विशेषः। पात्रासादनं आज्यस्थाल्यनन्तरं चरुस्थाली आज्यानन्तरं तण्डुलं मांसं चोपकल्पनीय एव आज्यश्रपणानन्तरं चरोरधिश्रयणं आज्योद्वासनानन्तरं चरोरुद्वासनं कृत्वा आज्येन आघारावाज्यभागौ जुहुयात् प्रत्याहुति पात्रान्तरे संस्रवप्राशनमान्येन देवीं वाचमिति जुहुयात्। इदं वाचे न ममेति त्यागः।

पुनर्देवी वाचं वा जोनो अधेति च द्वाभ्यामेको होमः प्राणेनान्नमसीय स्वाहा इदं प्राणाय। अपानेन गन्धानशीय स्वाहा इदमपानाय। चक्षुषा रूपाण्यसीय स्वाहा इदं चक्षुषे। श्रोत्रेण यशोयसीय स्वाहा इदं श्रोत्राय। अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते इति आज्ये महाव्याहृत्यादि प्राजापत्यन्तं त्यागः पूर्ववत्। पूर्णपात्रस्य ब्रह्मणे दानम्। प्रणीताविमोकः शान्तिवाचनम्। सर्वान् सरसान् सर्वमन्नमेकत्र उद्धृत्यैनं प्राशयेत्। तूष्णीं हन्तेति वाचं मांसन्तु न भक्ष्यं, कलौ निषेधादिति।

आपस्तम्बमतानुवर्त्तिनस्तु—जन्मनोऽपि षष्ठे मासि प्राणानायम्य अमुं कुमारं अन्नप्राशनकर्मणा संस्करिष्य इति संकल्पं कुर्यात्, ततो ब्राह्मणान् भोजयेत्।

आशिषो वाचयेत्ततः दधिमधुघृतादन्नात्संमृज्य भूरपां त्वौषधीनां रसं प्राशयानि शिवास्त आप ओषधयः सन्त्वनमीवास्तु आप ओषधयः सन्तु वासुदेवशर्मन् भुवयोपां भूभू र्वस्वरपां औषधीनां रसं प्राशयामि । शिवास्त आप औषधयः सन्तु अमीवास्तुः आप ओषधयःसन्तु वासुदेवशर्मन्निति चतुर्भिः सकृत्प्राशयेदिति ।

**इति श्रीमन्महाराजाधिराजश्रीदलपतिरा-
जविरचिते श्रीनृसिंहप्रसादे संस्का-
रसारे अन्नप्राशनविधिः**



# अथ अब्दपूर्तिविधिः

**अथ प्राप्तैकवर्षस्य शिशोरब्दपूर्तिविधिरभिधीयते—**

कालविधाने—

वर्षान्तजन्मदिवसे रविमासशुद्धे संस्नाप्य शान्तिकरकर्म चिराय कृत्वा।
आवध्य हेमकटिसूत्रमथानुकूले लग्ने शिशोर्नवतराम्बरयोगमाहुः।

अयमर्थः—सौरे वर्षान्ते जन्मदिवसे शिशुं संस्नाप्यायुर्वृद्धिकरं कर्मप्रभूतं कृत्वा हेममयं कटिसूत्रमाबध्य नवतराम्बरधारणं कर्त्तव्यं कारयितव्यम्।

अब्दपूर्तिविधाने—

अब्दपूर्त्ति प्रवक्ष्यामि सर्वसम्पत्करीं शिशोः।
सौरेणाब्दान्तजन्मर्क्षे शिशुं संस्नाप्य शास्त्रतः।

यथोक्तं विधिरक्षे—

अब्देन सौरेण शिशोःसमान्ते बालं च संस्नाप्य च जन्मधिष्ण्ये।
कृत्वा वयोवृद्धिकरं च कर्म तं धारयेच्छान्तिसुवर्णसूत्रम्।

नृसिह आह—

सौरेणाब्दान्तजन्मर्क्षे शिशुं संस्नाप्य शास्त्रतः।
आबध्यहेमसूत्रन्तु धारयन्ननुकूलके।
नवक्षौमाम्बरादीनि यथार्हं धारयेत्तथा।
हस्तादिपञ्चनक्षत्राण्यजस्त्रीण्युत्तराणि च।
वसुपुष्यदितिपुष्यवाजिभानि शुभानि च।
रिक्तापर्वाष्टमी चैव कृष्णायां तत्त्रिकं विना।
शकुनादीनि विष्टिश्च वर्ज्याः योगाशुभेतराः।
शुभानां वारवर्गाश्च राशयश्च धनुर्विना।
श्रेष्ठा नेष्ठा तथा दोषा मकरो मध्यमो भवेत्।
लग्ने सर्वे शुभा श्रेष्ठास्तथा केन्द्रत्रिकोणयोः।
चन्द्रः शुभप्रदो ज्ञेयो द्वादशाष्टमकं विना।
पापत्रिकांत्यषष्ठस्था शुभा वस्त्रस्य धारणे।
उच्चवर्गस्थमित्रेषु शुभे केन्द्रत्रिकोणभे।
वस्त्रवाहनशस्यादिभूषणाः स्युः विवृद्धये।
सद्गुणस्थे निशानाथे कुर्युस्ते शोभने दिने।
नक्षत्रतिथिवारादिशोधयेन्नैव बुद्धिमान्।

नद्यादिगमने चैव तथा देवादिदर्शने ।
शिशोर्लीलादिवान्यच्च वस्त्रधारणवद्भवेत् ।

तथा गार्ग्योऽपि—

प्रत्यब्दान्ते च नक्षत्रविधिं वक्ष्ये नृणाम् परम् ।
येनायुर्वर्धते नित्यं सत्त्वन्तेजः सुखं सदा ।
पूर्वजन्मदिवा रात्रौ कृत्वा कौतुकमङ्गलम् ।
कृत्वा शांत्युदकञ्चैव प्रातस्तेनाभिषेचयेत् ।
ग्रहशान्तिं समाप्यैव नक्षत्राधिपपूजनम् ।
आयुष्यहोमं कृत्वा च गिरिशानर्चयेत्ततः ।
नवाम्बरधरो भूत्वा शुक्लस्रग्वस्त्रभूषणः ।
गुरुप्रणामं कृत्वा च राजा च महिषीसखः ।
निगडान्तं विसृज्याथ मनुजान्निगडैर्युतान् ।
अन्यानि पुण्यकर्माणि प्रकुर्वीत यथाविधि ।
पापकर्म न कुर्वीत कृतं शतगुणं भवेत् ।

अथायुष्यहोमोऽभिधीयते—

आयुष्यहोमं प्रवक्ष्यामि शौनकोक्तं द्विजन्मनाम् ।
कुर्याच्च जन्मनक्षत्रे विषुवे संक्रमे तथा ।
पौर्णमास्याममावास्यां ग्रहणे चन्द्रसूर्ययोः ।
स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
अलंकृतं स्वस्तिवाच्यं अन्नं दत्वा द्विजातये ।
अथाज्यभागपर्यन्तं कृत्वोपलेपनादिकम् ।
कृत्वान्नं जुहुयात् सम्यगवदानस्य सम्पदा ।
आनो भद्राःक्रतव इत्यृचा दशकेन च ।
इमं स्तोममर्हत इत्यृचा षोडशकेन च ।
एकया जातवेदस्य हुत्वा स्विष्टकृतं ततः ।
होमशेषं समाप्याथ ब्राह्मणान् भोजयेत्ततः ।
स्वस्तिवाच्यं द्विजाग्रैस्तैर्धेनुं दद्याच्च दक्षिणाम् इति ।

**इति श्रीमन्महाराजाधिराज श्रीदलपतिराज विरचिते नृसिंहप्रसादे संस्कारसारे अन्नप्रशन-आयुष्कामहोमविधी ।**



# अथ चूडाकर्म

अथ चूडाकर्माभिधीयते । वृद्धमनुः —

तृतीये पञ्चमे वर्षे चूडाकर्म प्रशस्यते । इति ।

शौनकः-तृतीये वर्षे चौलं यथा कुलधर्मांविति तत्तद्गृह्यानुसारेण व्यवस्था । तथा मनुरपि—

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं स्मृतिचोदनात् ।

यम आह—

ततः संवत्सरेऽपूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्त्तव्यं स्मृतिचोदनात् ।

चूडानियमा लौगाक्षिणोक्ताः—

दक्षिणतः कमुजा ( चूडा ) वशिष्ठानामुभयतोऽत्रिकश्यपानां मुण्डा, भृगवः पञ्चचूडाः, अङ्गिरसो वाजिमेके (केशपंक्ति) मङ्गलार्थं, शिखिनोऽन्ये यथाकुलधर्मं वा शुक्लपक्षस्य पुण्याहे पर्वणि वेति । शिखाचूडावाजिकेशषङ्गिर्जन्मप्रभृतिवर्ष-संख्या वेदितव्या जन्मनोधितृतीये वर्षे चौलमिति । नक्षत्रनियमो हि व्यासेनोक्तः—

अश्विनी श्रवणं स्वाती चित्रा तिष्यः पुनर्वसू ।
धनिष्ठारेवतीज्येष्ठामृगहस्तेषु कारयेत् ।

**अथ निषिद्धानि**—

नक्षत्रेषु न कुर्वीत यस्मिन् जातो भवेन्नरः । इति ।

स एवाह-तिथिविशेषः—

तिथिं प्रतिपदं रिक्तां विष्टिं चैव विवर्जयेत् ।
वारं शनैश्चरादित्यं भौमानां रात्रिमेव च ।

मुहूर्त्तसंग्रहे—

तृतीये पञ्चमे वाथ सप्तमे जन्मतः शिशोः ।
गर्भाद्वा चौलकं कुर्यात् इति जीवेन भाषितम् ।
सावनात् प्रथमे वर्षे तृतीये पञ्चमेपि वा ।
दामोदरमतं जातात् सप्तमे चौलकर्मणि ।

नक्षत्रात्प्रथमे वर्षे तृतीये पञ्चमेपि वा ।
सप्तमे चौलकं कार्यमिति काश्यपदर्शनम् ।
त्रैवर्णिकानां जीवोक्तं कदाचिन्मौञ्जिबन्धनम् ।
जन्मर्क्षात् सप्तमतः त्रयस्त्रिशद्दिनात्परम् ।
सषष्ठित्रिशद्दक्षेषु केचिच्चौलं प्रचक्षते ।
तृतीये पञ्चमे कुर्यादित्युक्तं विश्वकर्मणा ।
अयने चोत्तरे सौख्यं दक्षिणत्वं शुभावहम् ।

इति बृहस्पतिः—

पूर्वपक्षे शुभं प्रोक्तं कृष्णे वान्त्यत्रिकं विना ।
हस्ताश्विविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यभम् ।
सौम्यचित्रे नवक्षौरे ह्युत्तमा नवतारका ।
त्रीण्युत्तराणि वायव्यं रोहिणी वारुणन्तथा ।
क्षौरे षण्मध्यमा प्रोक्ता शेषा द्वादश गर्हिताः ।

तथा गार्ग्यः—

अस्तगे च गुरौ शुक्रे वाले वृद्धमलिम्लुचे ।
नामान्नप्राशनं चौलं विवाहादीन् विवर्जयेत् ।

नामकरणं दशम्यादिदिनत्रयव्यतिरिक्तविषयम् ।

वशिष्ठः—

निधने जन्मनक्षत्रे वैनाशे चन्द्रमाष्टमे ।
विपत्तारे नवक्षौरं प्रत्यये च विवर्जयेत् । इति ।

गुरुः—

आज्येशो विपदि त्याज्यः प्रत्यारे चैवमाशुभा ।
वधे त्याज्यस्तृतीयोंशःशेषांशेष्वपि योजनम् । इति ।
जन्माष्टमे विधौ याते क्षौरमायुः क्षयाय च ।
तस्माज्जन्माष्टमं वर्ज्यं सर्वथा क्षुरकर्मणि ।
शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरम् ।

## अथ तिथयः

दशम्येकादशी चैव पूज्या तद्वत्त्रयोदशी ।
षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी ।
प्रतिपत्पंचदश्यौ च निन्दिता द्वादशी तथा ।

## अथ वाराः

तत्र वशिष्ठः—

अर्कार्किभूमिपुत्राणां मन्दपे च दिवोदये ।
तेषान्द्रेष्काणहोराणां क्षौरं हि परिवर्जयेत् ।
तथा अर्के विनाशः स्यात् शस्त्रान्मृत्युः कुजोदये ।
यमोदये विनाशः स्यात्तापश्चन्द्रोदये भवेत् ।
सोमवारः सितः पक्षः पूज्यः कृष्णोऽतिगर्हितः ।
बुधवारोऽशुभः प्रोक्तः पापग्रहयुते बुधे ।
अस्तगस्य गुरोर्योगः समीपस्य गुणान्वितः । इति ।
पापग्रहाणां वाराब्दौ शुभवासर एव च ।
पापग्रहाणां वारादौ विप्राणान्तु शुभो रवेः ।
क्षत्रियाणां धरासूनोर्विट्शूद्राणां शनैश्चरम् । इति ।
अर्कोदयः प्रशस्तः स्यात् विप्राणां क्षुरकर्मणि ।

वशिष्ठः—

अजे दुःखं हरौ शोको व्यसनं वृश्चिके तथा ।
तथा नृपभयं विद्यात् शुभैर्दृष्टैर्न दुष्यति ।

तथा गुरुः—

आकेकरश्च मत्स्यश्च बुधः शुक्रेन्दुराशयः ।
क्षुरकर्मणि पूज्यास्तु शेषाः त्याज्याः स्वभावतः ।

आकेकरो मकरः । गुरुः—

व्याधिशोकप्रदौ सिंहवृश्चिकौ क्षुरकर्मणि ।
अतीव दुःखदो मेषश्चापो राजभयप्रदः ।
कुलीरः कुलनाशः स्यात् कथितः क्षुरकर्मणि ।
शुभैर्युक्ता शुभैर्दृष्टा यद्यप्येते शुभाशुभाः ।
शुभैर्युक्तोऽपि दृष्टोऽपि न शुभः कुम्भभृद्ग्रहः ।

कुम्भभृद्ग्रहः कुम्भराशिः ।

पापग्रहाणां वर्गश्च वर्ज्या क्षौरे विशेषतः ।
शुभग्रहाणां पूज्याश्च शक्रस्यापि विवर्जयेत् ।
अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः ।
शुक्रस्तु निधने क्षौरे सर्वसम्पत्प्रदः शिशोः ।
क्षौरे स्वरस्थौ भौमार्कौ मृत्युदौ नियतं शिशोः ।

यमो भाग्यविनाशाय सर्वनाशाय भार्गवः ।
स्मरे चन्द्रज्ञजीवास्तु क्षौरे सम्पत्प्रदाः शिशोः ।
राहुकेतुस्मरस्थाने सर्वसम्पत्प्रदौ शिशोः ।

सौरे धनुःकेशरिणौ घटः सदा पूर्वा चतुष्टो मदने कुजो शुभः ।
नक्रोपि याविन्दुरिति........................................................ ।
अन्योपि विशेषो गुरूक्तः—

राजकार्ये नियुक्तानां नटानां चोपजीविनाम् ।
श्मश्रुलोमनखच्छेदे नास्तिकालविशेषता ।
राजाज्ञया च दीक्षायां प्रत्यये रोगपीड़िते ।
क्षुरकर्मणि कर्त्तव्ये नास्ति कालविधिर्नृणाम् ।
सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चाब्दात्प्राग्यथोक्तन्तु गर्भिण्यामपि कारयेत् ।

तथा—

रात्रौ प्रवेशे प्रस्थाने संन्ध्ययोश्च विवर्जयेत् ।
विवाहे पञ्चमाहे च दशाहे मृतसूतके ।
दीक्षान्तेऽवभृथे यज्ञे सीमन्ते राजशासने ।
सद्यः क्षौरं प्रकुर्वीत न तुरङ्गोपजीविनः ।
गर्भिण्यां मातरि शिशोः क्षौरं सूनोः न कारयेत् ।
षडष्टे षोडशाहे च विवाहान्ते तथैव च ।
अन्तर्वत्न्यां हि जायायां क्षौरं कुर्वन् विनश्यति ।

वृद्धगार्ग्यः—

पुत्रचूडाकृतौ माता गर्भिणी यदि सा भवेत् ।
शस्त्रेण मृत्युमाप्नोति तस्मात् क्षौरं विवर्जयेत् । इति ।
नोदन्वतोम्भसि स्नानं न च श्मश्रुविमोचनम् ।
अन्तर्वत्नीपतिः कुर्यात् स व्रजेन्नरकं ध्रुवम् ।
व्यक्ते गर्भेऽपि सीमन्ते विवाहे क्षुरमाचरेत् ।
क्षौरमाप्रसवे प्रोक्तमन्यत्र वचनाच्छुभम् ।
न विवाहदिने क्षौरं प्रशस्तं हितकाम्यया ।
पूर्वं चाथ न कर्तव्यं पश्चाद्वा पञ्चमेऽह्नि ।
मीने धनुषि सिंहे च स्थिते चाग्रे तु लग्नके ।
क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म च ।

कालदीपे—

अशुभर्क्षे कृते क्षौरे क्षिप्रं कुर्यात् ततः शुभम् ।
निषिद्धेषु च कालेषु क्षुरकर्म यदा भवेत् ।
तद्दोषशान्तये क्षिप्रं कुर्यात्तस्य शुभे दिने ।

आहिताग्निविषये विशेष उक्तः—

दर्शे च पौर्णमास्याञ्च द्वादश्याञ्चोभयं शुभम् ।
अस्यैव रात्रौ कर्त्तव्यमन्यत्र तु विवर्जयेत् ।

**इति याज्ञवल्कीयानाम् ।**

अथ सूत्रं सांवत्सरिकस्य चौलकरणं तृतीये वा प्रतिहते षोडशवर्षे केशान्तो यथामङ्गलं सर्वेषामिति ।

**अथानुष्ठानक्रमोऽभिऽधीयते—**

प्रागुक्ते तृतीयादौ वर्षे उत्तरायणे शुक्ले पक्षे प्रागभिहिताऽनिन्द्यतिथिवार-नक्षत्रयुते मुहूर्त्ते कुमारस्य चौलकर्म करिष्यन् कर्त्ता पूर्वेद्युः स्वस्तिवाचनं कृत्वा नान्दीश्राद्धञ्च विधाय नवग्रहमखञ्च विधाय परेद्युः कृतमङ्गलस्नानं कुमार-मलङ्कृत्य ब्राह्मणैः पुण्याहं वाचयित्वा तिथ्यादिस्मृत्वास्य कुमारस्य बैजिक-गार्भिकदोषनिवृत्तिद्वारा बलायुरभिवृध्यर्थं चौलाख्यं कर्म करिष्ये इति संकल्पं कुर्यात् । पूर्ववदुपलेपनादि अग्निप्रतिष्ठान्तं कर्म निर्वर्त्त्य पूर्ववद्देशकालौ निर्दिश्य मया क्रियमाणे चौलहोमकर्मणि द्रव्यदेवतापरिग्रहार्थं अन्वाधानाख्यं कर्म करिष्य इति । अस्मिन्नन्वाहितेऽग्नौ इत्यादि चक्षुषी आज्येनेत्यन्तं पूर्ववदुक्त्वा अग्निं पवमानं अग्निं पवमानमग्निं पवमानं प्रजापतिश्चैताः प्रधानदेवताः आज्येन शेषेण स्विष्टकृतमित्याद्युक्त्वा समिद्वयमग्नावाधाय सीमन्तोक्तरीत्या पूर्णपात्रविधानार्थं पुरस्तनं तन्त्रं विधायोदगग्नेरास्तीर्णेषु दर्भेषु व्रीहियवमाषतिलैः पृथक् पृथक् पूरितानि नवानि चत्वारिंशतुशरावाणि क्रमेणैकैकशः प्राक्संस्थमासाद्य प्रत्यग्नेराशीनस्य कर्त्तुर्दक्षिणतः कुमारमुत्संगे बिभ्रती जननी प्राङ्मुखी आसीत् । ततो मातुः समीपे-पुरस्तादग्नेः पश्चादनडुहसकृत्शरावं शमीपर्णशरावं च विधाय, ततःपिता ब्रह्मा च एकविंशतिकुशाङ्कुरान् दधानो मातुर्दक्षिणतो निवसेत् । तत्र पितुःकुशधारणपक्षे पितुरन्यः चौलकर्त्ता ब्राह्मणः कुशाङ्कुरधारणपक्षे पितैव चौलकर्त्ता स्यात् । ब्रह्मा-कुशधारी स्वस्थान एवासीत्, ततः कुमारेणान्वारब्धः 'कर्त्ता पुरस्तनं' तन्त्रं कृत्वा 'अग्नआयुंषीति त्रिऋचस्य शतं वैस्वानरा अग्निष्ववमानो गायत्री इति मन्त्र-त्रयेण अज्याहुतिद्वयं जुहुयात् । प्रजापत इत्यस्य हिरण्यगर्भ ऋषिः प्रजापतिर्देवता-

त्रिष्टुप्छन्दः अनेन चतुर्थीमाहुतीं हुत्वा शीतमुष्णञ्चोभे वारिणी पात्राभ्यां पृथगानीय शिशोः पश्चिमदेशे स्थित्वा तदुदकद्वयमन्यस्मिन् पात्रे पाणिभ्यां उष्णेन वा यदुदसेकेनेहेति मन्त्रेण युगपन्नयीत्। ततो नवनीतेन तदभावे दध्ना वा सह मिश्रयित्वा तदेकदेशपाणिनादाय कुमारस्य वामकर्णप्रदेशमारभ्य प्रदक्षिणमदितिः केशान्वपतु मदन्वन्तुवर्चस इति मन्त्रप्रतीकेनेदमावर्त्तयत् शिरस्त्रिवारं क्लेदयित्वा पितुर्ब्रह्मणो वा हस्ते स्थितेष्वेकविंशतिकुशाङ्कुरेषु त्रीनङ्कुरानादाय कुमाराभिमुखान् कृत्वा ओषधे त्रायस्वेनमिति मन्त्रेण दक्षिणकेशभागे निधाय तेष्वङ्कुरेषु ताम्रमयं क्षुरं 'स्वधिते मैनमि'ति मन्त्रेण निधाय 'येनावपदि'ति मन्त्रेण सह केशान् कुशाङ्कुरान् कृत्वा तानङ्कुरान् प्रागग्रान् कृत्वा शरावाच्छमीपत्राण्यादाय तैः सह एकीकृत्य मातुः करे दद्यात्।

सा माता तान् केशान् शमीपर्णाङ्कुरान् आनडुहे गोमये निदध्यात्। एकं द्वितीयादिषु छेदनेषु कुशाङ्कुरान्निधाय कर्तनमंत्रस्तु-येन धातेति द्वितीये छेदने, येन तु यच्चराभ्यामिति तृतीये। चतुर्थे तु येनावपद्येन धाता येन भूयश्चेति त्रयो मन्त्राः। एवं दक्षिणकेशभागे चत्वारि छेदनानि कृत्वोत्तरकेशभागेऽप्यनया रीत्या त्रीणि छेदनान्यादित आरभ्य मन्त्रत्रयेण कृत्वा ततः क्षुरधारयाङ्कुरेण वीर्यमतीतिमन्त्रेणाग्रत आरभ्यामुना तस्य पाणिना एकीकृत्य यथा कुलधर्ममुपकाल्पितशिरं कुमारं स्नापयित्वा पूर्ववन्मातुरुत्संगेऽवस्थाप्य स्विष्टकृदादिहोमशेषं समाप्य तच्च व्रीह्यादिपात्रचतुष्टयं नापिताय दद्यात्। एवं सर्वं होममन्त्रेण। कुमार्यास्तु-अमन्त्रकं होमस्तु समन्त्रक इति।

**आश्वलायनीयरीत्या चौलकर्मविधिः।**

## अथ स्त्रीसंस्कारः

तत्र मनुः—

अमन्त्रिका तु कार्येयं स्त्रीणामवर्गशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्।

अर्वाक् जातकर्मादिक्रियाया।

तत्र याज्ञवल्क्योऽप्याह—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः।

एता जातकर्मादि चूडाकरणान्ता क्रियाः तूष्णीम्। विना मन्त्रेण कार्या। अर्वाक् पुनर्विवाहात् शेषा सर्वा मन्त्रेणैव।

गोभिलस्तु विशेषमाह—

तूष्णीमेताः क्रियाः स्त्रीणाममन्त्रेण तु होमतः। इति।

मनुना पुनर्विशेष उक्तः।

स्त्रीणान्तु पुनर्विवाहोपनयनमिति।

तथाहि—

वैवाहिको विधिस्त्रीणामौपनायनिकः स्मृतः।
पतौ सेवा गुरौ वासो गृहार्थेऽग्निपरिक्रिया। इति।

अतश्चात्रापि प्रागुपनयनात् कामचारवादभक्ष्या इत्यादि समानम्। यदवादि हारीतेन—

द्विविधाः स्त्रियः ब्रह्मवादिन्यः सद्योवध्वश्च। तत्र ब्रह्मवादिनीनां उपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्येति। सद्योवधूनान्तु उपस्थिते विवाहे कथञ्चिद् उपनयनमात्रं कृत्वा विवाहः कर्त्तव्य इति तत्सर्वं कल्पान्तराभिप्रायं व्याख्येयम्।

तदुक्तं यमेन—

पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनञ्च वेदानां सावित्रीवाचनन्तथा।
पिता पितृव्यो भ्राता वा न तामध्यापयेत् परः।
स्वगृहे चैव कन्याया भैक्षचर्या विधीयते।
वर्जयेदजिनं चीरो जटाधारणमेव च। इति।

**इति स्त्रीसंस्कारः।**

## अथानुपनीतधर्माः

विष्णुपुराणे—

भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथाकृते।
अस्मिन् काले न दोषः स्यात्स यावन्नोपनीयते। इति।

ननु पेये इति उक्ते मद्यपानेऽपि न दोष इति चेन्नैवं अन्यत्राऽदोषेऽपि मद्यपानदोष उक्तं श्रुतः। स्मृतोऽस्य दोषस्तथा हि स्मरति गौतमः—वर्जयेदित्यनुवृत्तौ—

नित्यं मद्यं ब्राह्मण इति। नित्यग्रहणं अनुपनीतस्य निषेधकम्, ननु प्रागुपनयनात् ब्राह्मण्यमेव नास्तीति चेद् गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनमिति

मनुना ब्राह्मणस्य सतः उपनयनविधानात्। किंच न उपनयननिमित्तं ब्राह्मण्यम्। येनोपनयनात् प्राक् न ब्राह्मण्यं स्यात्। किन्तु जातनिमित्तं ब्राह्मणात् ब्राह्मण्यां हि जातो ब्राह्मण इत्युच्यते, नहि ब्राह्मण्यमाचारनिमित्तं उपनयननिमित्तं वा, तथात्वे आचारात् ब्राह्मण्यम्, ब्राह्मणस्य सत आचारा विधीयन्ते इति दुर्वारितरेतराश्रयता च स्यात्। गौतमवचनन्तु महापातकव्यतिरिक्तविषयम्। तथा च स्मरन्ति—

स्यात् कामचारभक्ष्योपि महतःपातकाद्धतः। इति।

तथा च गौतमोऽपि—प्रागुपनयनाद् कामचारवादभक्षा इति। इच्छागतिः कामचारः, कामवादोऽश्लीलादिभाषणम्। कामक्ष्यः पर्युषितादिभक्ष्यम्। क्वचित् गौतमः—कामभक्ष्यमपवदति हुतादिति।

हुतं हुतशिष्टं चरुपुरोडाशादि हुतं तदत्तीति हुतात्, न हुतादहुतात् यथायमहुतात् स्यात् तथा पित्रादिवद् इत्यर्थः। तथा च यमः—

वैश्वदेवं पुरोडाशमग्निमध्ये च यद्धुतम्।
मद्यं जिघृक्षुराकृष्यः मात्रा रक्ष्यः प्रयत्नतः। इति।

वैश्वदेवं वैश्वदेवताशिष्टम्। तथा काममप्यपवदति गौतमः—ब्रह्मचारिणस्तु—यदा कथञ्चिद् गर्भाष्टमादावुपनयनातिक्रमः तदापि तेन ब्रह्मचारिणा न भवितव्यमिति तस्यार्थः।

नच ब्राह्मचारीत्येतत् ब्रह्मचारिधर्मप्राप्त्यर्थमिति वाच्यम्।

न तस्य विद्यते कर्म किञ्चिदामौञ्चिबन्धनात्।
वृत्या शूद्रसमस्तावत् यावद् वेदे न जायते। इति।

तथा मूत्रपुरीषयोर्दिङ्नियमाभावोऽपि यथोपपादं मूत्रपुरीषाः भवन्ति इति स्मरणात्। आचमननिर्मित्तेष्वाचमनञ्च विद्यते। अग्निहोत्रहवनबलिहरणानि न कुर्यात्। गौतमः—न ब्रह्माभिव्याहरयेदन्यत्र स्वधानिनयनादिति। स्वधानियमं प्रेतकर्म। तत्रानुपनीतस्य मन्त्राध्ययनमविरुद्धमित्यर्थः।

**इति श्रीमल्लक्ष्मीनृसिंहचरयुगलसरोरुहभ्रमरसकलभूमण्डल-मण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तकरणा-धीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराजदलपतिराज विरचिते संस्कारसारे अनुपनीतधर्माः**



## अथाक्षरारम्भः

अथाक्षरस्वीकारोऽभिधीयते। तत्र मार्कण्डेयः—

प्राप्ते तु पञ्चमे वर्षे अप्रसुप्ते जनार्दने।
षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्। इति।

विधिरत्ने—

बालस्य पञ्चमे वर्षे प्राप्ते भानोर्मृगादिके।
आरभेताक्षरं तत्र शुभकाले यथोदिते।

तथा मुहूर्त्तसंग्रहे—

उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत्।
पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना।

हस्तादित्यमरुन्मैत्ररौद्रपौष्णाग्निचित्रभम्।
वैष्णवं तु प्रसिद्धं स्यादक्षरग्रहणे शिशोः।

प्रतिपत्पर्वरिक्ताश्च षष्ठ्यष्टम्यौ च वर्जयेत्।
चराणि सर्वसौख्यानि करणानि विशेषतः।

शकुनादीनि विष्टिश्च वर्जयेत् सर्वदा बुधः।
ज्ञाने ज्ञाचार्यशुक्राणां वारवर्गोदया, शुभाः।

स्थिराः श्रेष्ठा चरा निंद्या मध्यमाश्चोभयात्मकाः।
शुभाःसप्तमरन्ध्रस्थाः सर्वे नेष्टा शुभग्रहाः।

भ्रातृमर्माय षष्ठस्थाः पापाः सर्वे शुभावहाः।
शुभांशके त्रिकोणस्था धनभ्रातृगता शुभाः।

सर्वे लाभे प्रशस्तास्युरक्षरग्रहणे शिशोः।
एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत्।

पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम्।
स्वविद्यां सूत्रकारांश्च स्वविद्याँ च विशेषतः।
एतेषामेव देवानां नाम्ना तु जुहुयाद् घृतम्।

दक्षिणाभिर्द्विजेन्द्राणां कर्त्तव्यञ्चात्र पूजनम् ।
प्राङ्मुखो गुरुरासीनो वारुण्याभिमुखः शिशुः ।
अध्यापयेत्तु प्रथमं द्विजातिभिः सुपूजितः ।
ततः प्रभृत्यनध्यायान् वर्जनीयान् विवर्जयेत् ।

**इति श्रीमत्महाराजाधिराजदलपतिदाजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे शिशोरक्षरस्वीकारः ।**



## अथोपनयनादर्वाचीनसंस्कारातिपातप्रायश्चित्तम्

तत्र कात्यायनः—

देवतानां विपर्यासे जुहोतिषु कथं भवेत् ।

शौनकः—

सर्वं प्रायश्चित्तं कृत्वा क्रमशः पुनराचमेत् ।
आरभ्याध्वानमाशौचात् कालातीतं तु कर्मसु ।
आज्यं व्याहृतिभिर्हुत्वा प्रायश्चित्तं समाचरेत् ।
एतेषु तु कालेषु पादकृच्छ्रं समाचरेत् ।
चूडायामर्धकृच्छ्रः स्यात् आपदित्येवमेव हि ।
अनापदि तु सर्वत्र द्विगुणं त्रिगुणं चरेत् । इति ।

स्मृत्यन्तरेऽपि—

संस्कारा अविपद्येरन् स्वकालं चेत्कथञ्चन ।
हुत्वैतदेव कर्त्तव्यं ये तूपनयनात् परम् ।

सर्वं प्रायश्चित्तं कात्यायनेनोक्तम् ।

प्रत्यृचं त्वन्न इत्यादि ।

भग्नाँश्चैवमयाचनायैतत् शतम् । उत्तमव्याहृतीश्च यथा क्रमात् इति ।

**इति संस्कारसारे प्रायश्चितम् ।**



# अथोपनयनम्

अथोपनयनमभिधीयते—उपनयनं हि माणवकसंस्कारः वेदविदां गृह्य-स्मृतिषु प्रसिद्धो मौञ्जीबन्धनापरपर्यायः।

तत्र श्रुतिः—गायत्र्या ब्राह्मणं उपनयीतेति। अष्टमे ब्राह्मणमुपनयीत। गर्भाष्टमे वा गर्भपञ्चमे वा।

तथा स्मृतिश्च—

उपनीय तु यः शिष्यं वेदमिति। तथा सप्तमे वर्षे ब्राह्मणस्योपनायनम्। नवमे राजन्यस्य, एकादशे वैश्यस्येति।

तथा शङ्खः—गर्भाष्टमे ब्राह्मणम् एकादशे राजन्यं, द्वादशे वैश्यमिति।

तथा च बौधायनः—गर्भादिसख्यावर्षाणां तदष्टमे ब्राह्मणमुपनयीत्। तदधिकेषु राजन्यं तदेकाधिकेषु वैश्यम्।

तत्र पैठीनसिः—गर्भपञ्चमे ब्राह्मणमुपनयीत्। गर्भाष्टमे वा गर्भैकादशे राजानम्, गर्भद्वादशे वैश्यं, गर्भषोडशमेव वा।

तथा च मनुः—

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे। इति।

अङ्गिराः—

षष्ठे तथा द्वादशे च राज्ञो बुद्धिबलायुषोः।

तथा च मनुः—

राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे। इति।

ईहा कृष्यादिविषये चेष्टा।

तथा आपस्तम्बः—उपनयनकालं प्रक्रम्य यथा मङ्गलं वा सर्वेषाम्।

अयमर्थः—अन्यस्मिन्नपि काले क्रियमाणं कुले मङ्गलं यत्र भवति तथैव कर्त्तव्यमिति। अत एवोक्तमव्याकुलमिति।

उपनयीतेत्यनुवृत्तावापस्तम्बः—अथ काम्यानि सप्तमे ब्रह्मवर्चसकामम्, अष्टमे आयुः कामम्, नवमे तेजस्कामम्, दशमे अन्नकामम्, एकादशे इन्द्रियकामम्,

द्वादशे पशुकाममिति। गौतमः—उपनयनं ब्राह्मणस्याष्टमे नवमे पञ्चमे वा काम्यमिति।

गार्ग्यः—

मेधाकामी तु पञ्चमेऽब्दे वीर्यकामी तु सप्तमे।
धनकाम्यष्टमे कुर्यात् ब्राह्मणादिरुपायनम्। इति।

दत्तात्रेयः—

ब्रह्मचर्यमायुष्यं तेजोऽन्नाद्यं तथेन्द्रियम्।
पशुं मेधां च पुष्टिं च शत्रुनाशमभीप्सितम्।
सप्तमादिषु वर्षेषु षोडशेप्युपनायनम्। इति।

**अथोपनयन-गौडकालः**। तत्र मनुः—

अषोडशात् ब्रह्मणस्य सावित्रिर्नातिवर्त्तते।
द्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः।

अयमाङभिविधौ। तदाह व्यासः—

औपनायनिकः कालः परः षोडशवार्षिकः।
द्वाविंशतिपरो ह्यस्यः चतुर्विंशः परम्परः।

अस्याप्यतिक्रमश्चैतर्त्तर्हि पातित्यमेव भवेत्। तदाह योगी—

आषोडशाद् द्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां कालः औपनायनिकः स्मृतः।
असंस्कृता त्रयोप्येते सर्वधर्मबहिष्कृताः।
सावित्री पतिता व्रात्याः व्रात्यस्तोमाद् ऋते क्रतोः।

तथा यमः—

सावित्री पतिता व्रात्या परिहार्या प्रयत्नतः।

आपस्तम्बः—आषोडशाद् ब्राह्मणस्य आविंशात्क्षत्रियस्य आचतुर्विंशाच्च वैश्यस्य। आश्वलायनगृह्यकाराः—गर्भाष्टमेऽष्टमे ब्राह्मणस्योपनयनम्, एकादशे राजन्यस्य, द्वादशे वैश्यस्य। अथातीतः कालः आषोडशात् ब्राह्मणस्य, आद्वाविंशात्क्षत्रियस्य, आचतुर्विंशाद् वैश्यस्य, अत ऊर्ध्वं पतितसावित्रीका भवन्ति। नैनानुपनयेत्, नाध्यापयेत्, न याजयेत्, नैव विवहेयुरिति।

अयमर्थः ब्राह्मणमिति शूद्रादि निवृत्यर्थं पुंस्त्वं विवक्षितमिति, स्त्रीनिवृत्यर्थमिति। तदुक्तं—

वैवाहिको विधिस्त्रीणामौपनायनिकः स्मृतः।
पतिसेवा गुरोर्वासो गृहस्थाग्निपरिक्रिया इति।

अथ तिथ्यादयो निर्णीयन्ते।

तृतीयैकादशी चाद्य पञ्चमी द्वादशी तथा।
द्वितीयायां च मेधावी भवेदर्थबलान्वितः।
रिक्तायमर्थहानिः स्यात् पौर्णमास्यान्तथैव च।
प्रतिपद्यपि चाष्टम्यां कुलवृद्धिविनाशकृत्।
सप्तम्यामष्टम्याञ्च प्रतिपदि रिक्ताचतुर्दश्याम्।
आयुर्विद्यानाशो व्रतबन्धे त्रयोदश्यां वा।
न च षष्ठ्[1]यामथाष्टम्यां पञ्चदश्याञ्च पर्वणि।
प्रतिपत्सु न कर्त्तव्यो न विष्टिकरणे तथा।
रिक्तासु वा न कर्त्तव्यरहस्पक् दिवसन्तथा।
न विपज्जन्मतारासु नैधनं प्रत्यपरासु च।
सम्पत्करे तथा क्षेम्यां साधके मैत्रसंज्ञिके।
परमेप्यथमैत्रे च नाशः सर्वत्र शोभनः।

**अथ वाराः—**

ते च रविबुधगुरुशुक्राः शस्ताः। शुक्रार्कबृहस्पतयो वा। तदाह—

विद्यारम्भे नृणां वाराः कुर्वन्ति तपनादयः।
आयुः जाड्यं मृतिं प्रज्ञां बुद्धिं सिद्धिं च पञ्चताम्। इति।

तथा—वारेषु शुक्रार्कबृहस्पतीनां हितानुबन्धा द्विजमुञ्जबन्धः।

**अथ नक्षत्राणि—**

हस्तत्रयं दैत्यरिपुत्रयञ्च शाक्रेषु पुष्याश्विनिरेवतीषु।

गुरुर्भृगुसुतो धात्रीपुत्रः शशिधरात्मजः।
स्युरेते ऋग्यजुःसामाथर्वणामधिपाः क्रमात्।

भृगुसुतः शुक्रः। धात्रीपुत्रो भौमः। शशधरात्मजो बुधः। एता ऋगादीनामधिपाः। तेन तस्मिन् तस्मिन् वासरे तत्तच्छाखीयानामुपनयनं कार्यम्।

शाखाधिपे बलिनि केन्द्रगते तु मौञ्जीबन्धस्तदीयदिवसेऽर्थसुखाय क्लृप्तः।

---

१. अयं निषेधः प्रदोषयुक्तषष्ठीविषयः।

अस्मिन् वले तु रहितेन पुनर्द्विजानां स्याद्वर्णसङ्कर इति प्रवदन्ति तज्ज्ञाः ।

हस्तत्रयादित्यरिपुत्रयश्च शाक्रेन्दुपुष्याश्विनिरेवतीषु ।

तथान्यत्रापि—

हस्तत्रये पुष्यधनिष्ठयोश्च पौष्णाग्निसौम्यादितिसौम्यभेषु ।
शस्ते तिथौ चन्द्रवलेन युक्ते कार्यो द्विजानां व्रतबन्धमौञ्जी । इति ।

**अथ राशिफलम्**— ।

मेषे भवति सुरापो धीमानपि रोगशोकपरिहीनः ।
गदवान् समष्टलग्ने विधुरो धीरः कुलीरे च ।
करिकलिगैरिणि बलवान् विद्यावान्नैव योषिति क्रूरः ।
सुभगः सुखोपभोक्ता तौलिनिकेते विनाशमुपयाति ।
धनुषि धनाढ्यः प्रेयान् यादसि सघटे धनैः परित्यक्तः ।
षट्कर्माभिरतः स्यात् मीने धनवान् प्रवक्ता च ।

वृषभश्च तुला कन्या ब्राह्मणानामुदाहृतम् ।
सिंहो धन्वी तथा मीनः क्षत्रियाणां प्रकीर्त्तितः ।
मेषो युग्मस्तथाकार्की वैश्यानां परिकीर्त्तितः ।
कुर्यात्तु कालवर्षे च तत्रोपनयनं द्विजः ।

**अथ मासाः** । तत्र सुरेश्वरी—

माघे मासि महाधनो धनपतिः प्रज्ञावले फाल्गुने ।
मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः ।
वैशाखे शुभगः सुखी पटुमतिर्ज्येष्ठे बलिष्ठो बुधः ।
आषाढेऽपि महाविपक्षविजयी ख्यातो महापण्डितः ।

**अथ ऋतवः** । वसंतग्रीष्मशरदृतवो वर्णानुपूर्वेणेति ।

तथा गार्ग्योऽपि—

विप्रं वसन्ते क्षितिपन्निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् । इति ।
भृगोर्द्विराशिद्वयभानुभोगात् षडर्तवः स्युः शिशिरो वसन्तः ।
ग्रीष्मश्च वर्षा च शरच्च तद्वद्धेमन्तनामा कथितश्च षष्ठः । इति ।

मृगो मकरः । प्रकारान्तरस्तु—

मीने मेषे रविर्यावद्वसन्तस्तावदिष्यते । इति ।

वृद्धगार्ग्यः—

ज्येष्ठे मासि विशेषेण सर्वं ज्यैष्ठस्य चैव हि ।
उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव च । इति ।

**अथायननिर्णयः—**

विप्रस्य क्षत्रियस्यापि मौञ्जीस्यादुत्तरायणे । इति ।
दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे ।
अनध्याये तु कुर्वीत यस्तु नैमित्तिको भवेत् ।

तदाह वत्सः—

पूर्वाह्णं पूर्वपक्षश्च उत्तरायणमेव च ।
देवानामप्यहश्चेति दिवसो निर्मलस्तथा ।
ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः ।
सामवेदाधिपः सौम्यः सौरीत्याथर्वणः स्मृतः । इति ।

**तथा निषिद्धसमयः—**

नानध्याये न भूकम्पे निर्घाते न गलग्रहे ।

अपरार्केऽपि उक्तम्—

नष्टे चन्द्रेऽष्टमे शुक्रे निरंशे[1] चैव भास्करे ।
कर्त्तव्यं नोपनयनं न निशायां गलग्रहे ।
राहोः प्रथमभागस्थो निरंशः सूर्य उच्यते ।
चतुर्थी सप्तमी चैत्र त्रयोदश्यो गलग्रहाः ।

तथा ज्योतिः पारिजाते—

उपनयनं गोदानं पाणिग्रहणं गृहप्रवेशं च ।
अस्तमितेषु न कुर्यात् सुरगुरुभृगुपुत्रचन्द्रेषु ।

गर्भाष्टमप्राप्तौ तु ग्रहपूजां विधाय उपनयनं कर्त्तव्यम् । कालस्य कर्माङ्गत्वे तस्य प्रयोगवाक्ये श्रुतस्य अन्यवाक्यानुरोधिना संकोचनीयत्वात्कालानि निशानां मपरित्याज्यत्वाच्च । ततश्चन्द्रबलं लग्नबलञ्च विचार्यानुष्ठेयम् । ततश्चन्द्रलग्ने शरीरप्राणभूते तस्मिंश्च द्वितीयैकादशसप्तमनवमपञ्चमराशिषु वागीशे स्थिते सति कार्यं नैवपूजाम् ।

तथा च नारदः—

जन्ममातृचतुर्थ्यादि मृत्युकर्मं व्यये गुरौ ।
मृत्युपातकरोगाश्च रिपुशस्त्रमतिभृतिः ।
सुरारित्वञ्च विज्ञेयं क्रमादेव बलं शिशोः ।

---

१. राहोः प्रथमभागस्थः सूर्यः ।

तथा च श्रीपतिः—

स्वोच्चे स्वमित्रे स्वगृहेऽथ कोणे जीवे शुभे पत्युपनीतकाले ।

तस्माद् गर्भाष्टमे वर्षे प्राप्ते ग्रहदोषशान्तिं कृत्वा मौञ्जीबन्धनं कार्यं गुरुगतेरागन्तुकतया वक्ष्यमाणत्वात् ।

अत्र विशेषः कश्चित्—

मत्तोन्मत्तेषु मूढेषु शयनस्थे निरिन्द्रिये ।
ध्वस्तपुंस्त्वेषु चैतेषु संस्कारा स्युर्यथोचितम् ।
मत्तोन्मत्तौ न संस्कार्याविति केचित् प्रचक्षते ।
कर्मस्वनधिकाराच्च पातित्यं नास्ति वेतयोः ।
तदपत्यश्च संस्कार्यमपरे त्वाहुरन्यथा ।
संस्कारान् मन्त्रहोमादीन् करोत्वाचार्य एव तु ।
उपनेयांश्च विधिवदाचार्यस्य समीपतः ।
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ।

एवं विधे पूर्वोक्तविशिष्टकाले माणवकं पूर्वं भोजयित्वाचार्यः कर्म समारभत् ।

तत्र शौनकः—

अलंकृतं कुमारं कुशलीकृतशिरसमहतेन वाससा संवीतमिति । उपनयेदिति विशेषः । कुशलीकृतशिरसं कृतशिरोवपनम् ।

गोभिलः—यदहरुपेष्यन् माणवको भवति प्रगेवैवं तदहर्भोजयन्तीति । प्रगेव प्रातः, पूर्वमिति यावत् । तत्र पूर्वं स्वस्वगृह्य स्मृत्युक्तास्ते ते विशेषा ज्ञेयाः । वस्त्रविशेषो वशिष्ठोक्तः—शुक्लमहतं वासो ब्राह्मणस्य मांजिष्ठं, क्षौमं च क्षत्रियस्य । पीतकौशेयं वैश्यस्येति ।

तथा गौतमः—वासांसि शाणक्षौमचीरकुतपाः सर्वेषां कार्पासं वाविकृतमिति । अविकृतं रञ्जकद्रव्यासंस्कृतम् । यद्वा कुशादिनिष्पन्नं चीरम् । वस्त्रखण्डश्चीरभभिधीयते । तथा मनुः—

वासांस्यानुपूर्व्येण शाणक्षौमाविकानि चेति ।

आनुपूर्व्येण वर्णानुपूर्व्येण काषायमप्येके । ब्राह्मणस्य कषायं वृक्षकषाय रक्तमित्यर्थः । माञ्जिष्ठहारिद्रे इतरयोः राजवैश्ययोः ।

शङ्खः—क्षौमदुकूलसौत्राणि वासांसि त्रयाणां वर्णानाम् ।

यमः—

क्षौमकार्पासकुतुपश्चर्मवल्कलकम्बलाः ।
सर्वन्तु धारयेच्छुक्लं वासस्तत् पारिधानिकम् ।

कुतुपः पर्वतीयछागरोमनिर्मितः । परिधानप्रयोजनकं पारिधानिकम् ।

मनुः—

कार्ष्णं रौरववस्त्राणि चर्माणि ब्रह्मचारिणः ।
वासांस्यत्रानुपूर्वेण शाणक्षौमाविकानि च । इति ।

कार्ष्णं कृष्णमृगचर्म । ब्रहुशाखश्रृङ्गो मृगः तत्सम्बन्धि चर्म । बस्तः रुरुः छागः आविकम् । अवेरिदमू अविर्मेषः मेषरोमनिर्मितमिति । शणमयं शागम् ।

आपस्तम्बः—हारिणमैणेयं वा कृष्णं ब्राह्मणस्य । रौरवं राजन्यस्या, वस्ताजिनं वैश्यस्येति । सार्ववर्णिकमाविकम् । वस्त्राजिने काम्ये । ब्रह्मवृद्धिमिच्छन् अजिनानि वसीत्, क्षत्रवृद्धिमिच्छन् वस्त्राणि, उभयवृद्धिमिच्छन् उभयमिति । एणीसमुद्भवमैणेयं एणी गौरमृगी । हारिणं कृष्णचर्म ।

## अथोपवीतलक्षणम्

अथोपवीतादीनि तत्रोपवीतं तावत् । तत्र मनुः—

कार्पासमुपवीतं स्यात् विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञा वैश्यस्याविकसूत्रकम् ।

ऊर्णासूत्रनिर्मितम् ।

ऊर्ध्ववृतलक्षणं संग्रहे उक्तम्—

करेण दक्षिणेनोर्ध्वंगतेन त्रिगुणीकृतम् ।
वलितं यो नवं सूत्रं शास्त्र ऊर्ध्ववृतं स्मृतम् ।

अयमर्थः—ऊर्ध्वंगतेन ऊर्ध्वस्थितेन दक्षिणकरेण यद्वलितं तदूर्ध्ववृतमिति । तथा छन्दोगपरिशिष्टे कात्यायनः—

त्रिवृदूर्ध्वं कृतकार्यन्तन्तुत्रयमधोवृतम् ।
त्रिवृतं चोपवीतं स्यात् तस्यैको ग्रन्थिरिष्यते ।

वामाद्वृत्तं त्रिवृत्तं कृत्वा प्रदक्षिणमावर्त्तयन् नवगुणं कुर्यात् । तदेव च त्रिसरं कार्यमित्येतदुक्तं त्रिवृत्तञ्चोपवीतमित्यन्तेन ।

यज्ञोपवीतप्रमाणमाह तथा—

पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् ।
तत्कार्यमुपवीतं स्यात् नातिलम्बं नवोच्छ्रितम् ।

वामस्कन्दे धृतं नाभिपृष्ठवंशेन वा धृतं यथा कटिपर्यन्तं प्राप्नोति तथा कर्त्तव्यमित्यर्थः । देवलः--

स्तनादूर्ध्वमधो नाभेः न कर्त्तव्यं कथंचन ।

अथ तन्तुदेवता उच्यते । तथाहि—

ॐकारः प्रथमस्तन्तुं द्वितीयोऽग्निस्तथैव च ।
तृतीयो भगदैवत्यश्चतुर्थः सोमदैवतः ।
पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः ।
सप्तमो वसुदैवत्यः धर्मश्चाष्टम एव च ।
नवमः सर्वदैवत्य इत्येताः नवदेवताः ।

देवलः--

ग्रामान्निःक्रम्य संख्या च षण्णवत्यङ्गुलीषु तत् ।
तावत्त्रिगुणितं सूत्रं प्रक्षाल्याब्लिंगकैस्त्रिभिः ।
देवागारे तथा गोष्ठे नद्यां वान्यत्र वा शुचौ ।
सावित्र्या त्रिवृतं कुर्यात् नवसूत्रन्तु तद्भवेत् ।
बिल्वाश्वत्थादियज्ञीय काष्ठस्यान्यतमस्य तु ।
बध्नीयात्तत्सजीवन्तु पितृभ्यो नम इत्यथ ।
वामनाभेक्षितव्यं स्यात्पितॄणां तृप्तिदं हि तत् ।
सव्ये मृदं गृहीत्वाऽस्मिन् स्थापयेद्भूरिति ब्रुवन् ।
पत्रं पुष्पं फलं वापि व्याहृतीभिः प्रतिक्षिपेत् ।
अभिमन्त्र्याथ भूरग्निश्चात्र वृत्तत्रयं त्रिभिः ।
हरिब्रह्मेश्वरेभ्यश्च प्राणानायम्य धारयेत् ।

यज्ञोपवीतमिति धारणमन्त्रः ।

**अथोपवीतसंख्या—**

उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते ।
एकमेव यतीनां स्यादिति शास्त्रीयनिश्चयः ।

इदञ्च नित्योपवीतधारणम् । काम्ये विशेषः । तदाह देवलः—बहूनि चायुःकामस्य । विष्णुः—बहूनि ब्रह्मवर्चस्कामस्य इति । इदञ्च सदा धार्यम् । तदाह भृगुः—

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत् करोति न तत्कृतम् । इति ।

उक्तोपवीताभावे देवलः—

कार्पासिक्षौमगोबालशणवल्कतृणोद्भवम् ।
सदा सम्भवतो धार्यमुपवीतं द्विजातिभिः ।

यमः—अतसीवल्वतरुत्वक् सम्भवतः सार्वविभक्तिकस्तसिल् । मुख्यासम्भव इदं ग्राह्यम् ।

## दण्डः

उपनयने मनूक्तो दण्डः—

ब्राह्मणो बैल्वपालाशौ, क्षत्रियो वटखादिरौ ।
पैल्वोदुम्बरौ वैश्यो तृतीयोऽश्वत्थजस्तथा ।

अत्र प्रमाणं मनुनोक्तम्—

केशान्तिकं ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसंमितो राज्ञः स्यात्तु नाशान्तिको विशः ।
ऋजवस्ते तु सर्वे स्युरव्रणा सौम्यदर्शनाः ।
अनुद्वेगकरो नृणां सत्वचोऽनग्निदूषिताः ।

## अजिनम्

अथजिनान्याह—

कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः । इति ।

## मौञ्जी

अथ मौञ्जीलक्षणं मनूक्तम् ।

मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ।
मुञ्जाभावे तु कर्त्तव्याः कुशाश्मन्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव च ।
मौर्वीमुर्वी तेजनस्य तन्मूर्वी ज्या धर्नुगुणः ।

अत्र तु त्रिवृत्वं नास्ति ज्यात्वविनाशप्रशक्तेः । मुञ्जाद्यभावप्रसक्ते वर्णक्रमेण कुशाः ग्राह्याः । अश्मन्तकाख्यं तृणं ततो यथासम्भवं सावित्र्या उपदेशः कर्त्तव्यः । तदाह-यथासम्भवं गायत्रीमुपदिशेत् । तां च प्रणवव्याहृतिपूर्विकापस्थार्धर्चः सर्वामिति गायत्रीछन्दस्कां वेदमातरं सूर्यादेवत्यां महाव्याहृतिपूर्विकां ब्राह्मणायोपदिशेत् । त्रिष्टुप्छन्दस्कां बृहस्पतिदृष्टां सवितृदेवतां

वाजपेये विनियुक्तां देवसवितर्देवसदनमित्यादिकां क्षत्रियायोपदिशेत्। जगतीति दृष्टां सवितृदेवतां शक्तापापविमोचने तु स्वासंभरणे विनियुक्तां विश्वारूपाणि प्रतिमुञ्चन्तु त इत्येतामृचं वैश्यो ब्रूयात्।

अथवा सर्वेषां ब्रह्मक्षत्रियविशां गायत्रीमेवोपदिशेत्। तत्र गायत्रीछन्दस्कां उक्तलक्षणां सावित्रीमाह—शातातपः—तत्सवितुर्वरेण्यमिति सावित्री ब्राह्मणस्य, देवसवितृराजन्यस्य, विश्वारूपाणीति वैश्यस्येति। तथा कात्यायनोऽपि वदति। सावित्र्या ब्राह्मणमुपनयेत्। त्रिष्टुभा राजन्यं, जगत्या वैश्यं सर्वेषां वा सावित्रीमिति। तथोक्तं लौगाक्षिणा ॐभूर्भुवः स्वरित्युक्तास्तत्सवितुरिति सावित्रीं त्रिरन्वाह पर्न्धवशः सर्वमेतद् इति।

## समिदाधानम्

**अथ उपनयनाङ्गभूतं समिदाधानं स्वस्वशाखोक्तविधिनावधेयम्।** प्रत्यहमेवम्। तदाह—संवर्त्तः।

अग्निकार्यञ्च कुर्वीत मेधावी तदनन्तरमिति।

तदनन्तरं सन्ध्योपासनानन्तरम्।

तदाह मनुः—

दूरादाहृत्यसमिधः सन्निदध्याद्विहायसि।
सायं प्रातश्च जुहुयात् ताभिरग्निमतन्द्रितः। इति।

दूरादन्यापरिगृहीतदेशात्। विहायसि मण्डपादौ।

तथा योगी—

आग्निकार्यं ततः कुर्यात् सन्ध्ययोरुभयोरपि। इति।

केचिदिच्छन्ति सायं एवाग्निमिन्धन्ति इत्येके इति लौकाक्षिस्मरणात्। समिधः पालाशखदिरशमीरोहिताश्वतयार्कजाङ्गुष्ठपरिमिताः कृमिकीटाद्यदूषिताः, सत्वचोऽव्रणाः प्रादेशमिताः ग्राह्याः।

ततः पितृमुख्यान् नमस्येत्। असौ नामाहमस्मि अभिवादये इत्युच्चार्य अभिवादनं कार्यम्।

स्कान्दे—

आत्मपादौ तथा भूमिं सन्ध्याकालेऽभिवादयेत्।

ब्रह्मपुराणे—

उत्थाय मातापि तस्मै पूर्वमभिवादयेत्।
आचार्यंश्च ततो नित्यमभिवाद्यो विजानता।

मनुः—

लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत्।

अभिवादनकालेन स्वनामकीर्त्तनं कार्यम्। अभिवादात्परं विप्रो ज्यायांसमभिवादयेत्।

असौ नामाहमस्मीति स्वनामपरिकीर्त्तयन्। इति।

भोशब्दं कीर्त्तयेदन्ते स्वं स्वं नाम्नोभिवादनमपि। अभिवादये इति शब्दमुच्चार्य पश्चादेनमहं भोइति शब्दमुच्चारयेदिति भावः। तत्र एवं नमस्कार-प्रकारः दक्षिणं बाहूँ श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयेत। अंससमं राजन्यः मध्यसमं वैश्यः। नीचः शूद्रः प्राञ्जलिरिति।

एकहस्तं नमस्कारं विष्णुर्निषेधति—

जन्मप्रभृति यत्किञ्चित् चेतसा धर्ममाचरेत्।
सर्वं तन्निष्फलं याति एकहस्ताभिवादनात्।

इति एतच्च प्रत्युत्थाय कर्त्तव्यम्। तदाहापस्तम्बः—

ऊर्द्ध्वं प्राणाः ह्युत्क्रामंति यूनःस्थविर आगते।
प्रत्युस्थानाभिवादाभ्यां पुनस्ताम्प्रतिपद्यते। इति।

## गुरुलक्षणम्

गुरुलक्षणमाह—

निषेकादीनि कार्याणि यःकरोति यथाविधि।
ज्ञानेन सम्भावयति स विप्रो गुरुरुच्यते। इति।

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरुं विद्यात् श्रुतो यः क्रियते तथा। इति व्यासः।

प्रातःपितरमुख्याय पूर्वमेवाभिवादयेत्।
आचार्यमथवान्यांश्च दीर्घमायुस्स विन्दति। इति।

पितरं तावदाचार्यमुपाध्यायं गुरोर्गुरुम्।
गुरुभूतांस्तथान्यांश्च विदुषोऽप्यभिवादयेत्।
गुरुवत् प्रतिपूज्याश्च सवर्णा गुरुयोषितः।

मनुः—लौकिकवैदिकाध्यात्मिकजान् प्रपूज्य इति। असौ नामाहमस्मीति पूर्वं नामकीर्त्तनम्। अमुकनामाहमभिवादये इत्यर्थः। भो भो इति स्वरूपनाम्नां स्वरूपम्। ततः नमस्कारान्ते आयुष्मान् भव सौम्येति अस्याभिवादकस्य नाम वाच्यम्। विष्णुशर्मात्रेति। तस्यान्ते आकारो वाच्यः। तस्य वाकारस्य पूर्वाक्षरं प्लुतम्। ततश्च ब्राह्मणस्य शर्मन्निति क्षत्रियवैश्ययोस्तु वर्मगुप्तशब्द-प्रयोगः। शूद्रे तु दास इति।

तदुक्तं पारिजाते—शर्मवर्मगुप्तदास इति वर्णेषु व्यवहार इति।

आत्मनाम गुरोर्नाम नामातिकृपणस्य च।
आयुष्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः।

इति निषेधोभिवादनव्यतिरिक्तविषयः।

यमः—

अभिवादे तु यः पूर्वमाशिषं न प्रयच्छति।
यद् दुष्कृतं भवेत्तस्य तस्माद्भागं प्रपद्यते।

आशिषः उक्ताः—

स्वस्तीति ब्राह्मणो ब्रूयात् आयुष्मान् इति भूमिपः।
वर्धतामिति वैश्यस्तु शूद्रस्तु स्वागतं वदेत्।
यत्सुखं त्रिषु लोकेषु व्याधिव्यसनवर्जितम्।
यस्मिन् सर्वे स्थिताः कामाः सा स्वस्तीत्यभिसञ्ज्ञिता। इति।

गुरुविषये विशेषो मनूक्तः—

विन्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।
सव्येन सव्यं स्पृष्टव्यो दक्षिणेन तु दक्षिणः। इति।

विन्यस्तं स्वस्तिकम् उपसंग्रहणं पादस्पर्शनं गुरोः, पितुः, आचार्यस्य ज्येष्ठस्य चेति केचित्। केचित्तु पितामहमातामहमातुलादीनां नान्येषामि-त्याहुः। ततः—

स्वस्तीति ब्राह्मणो ब्रूयात् आयुष्मन्तमिति वर्धतामिति। स्वागतेऽभिवादो-द्विहस्तः।

अजाकर्णेन विदुषां मूर्खाणामेकपाणिनेत्युक्तेः। यथाजाकर्णौ सम्पुटितौ तथा सम्पुटितकरद्वयेनेत्यर्थः। यो नमस्कारमाशिषं वा न वेत्ति नासौ नमस्कार्यः।

शातातपः—पाखण्डपतितव्रात्यमहापातकिशवसोपानकृतघ्नधावत्प्रमत्त-भुञ्जाननास्तिकजृम्भमाणं दन्तधावनकर्तृ अभ्युक्तमस्तकश्रान्तं उदक्या-सूतिकादींश्च नैव नमस्कुर्यात्। असवर्णोऽनल्पगुणोऽपि न नमस्कार्यः। स्वल्पेनापि वयसा एकदिनपूर्वत्वेनापि ज्येष्ठत्वमेकैकदिनजातत्वेन संख्या। मनुः—

ब्राह्मणं दशवर्षञ्च शतवर्षञ्च भूमिपम्।
विप्राणां ज्ञानतो ज्येष्ठं क्षत्रियाणां तु वीर्यतः।

वैश्यानां धान्यधनतः शूद्राणाञ्चैव जन्मना।
वित्तं बन्धु वयः कर्म विद्या भवति पञ्चमी।

एतानि मानस्थानानि गरीयो यद्यदुत्तरः।
उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः।

मातुलश्वसुरस्त्राता मातामहपितामहौ।
वर्णज्येष्ठः पितृव्यश्च पञ्चैते गुरवः स्मृताः।

उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता।
सहस्रन्तु पितुर्माता गौरवेणातिरिष्यते।

व्यासः—

मासान् दशोदरस्थं या धृत्वा शूलैः समाकुला।
वेदिनाविविधैर्दुःखै प्रासूयत विमूर्छिता।

प्राणैरपि प्रियान् पुत्रान् मन्यन्ते सुतवल्लभा।
कस्तस्मान्निःकृतिं कर्त्तुं शक्तो वर्षशतैरपि।

अभ्यञ्जनं स्नापनं च गात्रोद्वर्त्तनमेव च।
गुरूण्यल्पानि कार्याणि केशानाञ्च प्रसाधनम्।

यस्य देशं न जानाति स्थानं त्रिपुरुषं कुलम्।
कन्यादानं नमस्कारं श्राद्धे तस्य विवर्जयेत्।

विवेकादीनि कर्माणि सः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते। इति।

**अथ उपनयनानुष्ठानप्रकाराः कथ्यन्ते—**

अष्टमादौ वर्षे उपनयनकर्ताचार्यः पूर्वोक्तवस्त्राजिनादि सम्पाद्य स्वस्ति-वाचननान्दीश्राद्धञ्च स्वगृह्योक्तमार्गेण विधायोत्तरेद्युः कृतमङ्गलस्नानं कुमारं

सम्यगलङ्कृत्वाशिषो वाचयित्वा तिथ्यादिसंकीर्त्य द्विजत्वसिध्यर्थं मम कुमारमुपनेष्ये इति संकल्प्य सुमूहूर्त्ते स्वसमीपमानीय तन्मुखमवलोक्य स्वगृह्योक्तविधिना उपलेपनाद्यानि प्रतिष्ठान्तं कर्म कृत्वा चिकीर्षितोपनयनकर्मणि द्रव्यदेवतापरिग्रहार्थमन्वाधानं करिष्ये इति संकल्प्यास्मिन्नन्वाहितेऽग्नौ सद्यो यक्ष्ये इति संकल्प्य परिसमूहनाद्याज्यसंस्कारपर्यन्तं पूर्ववत् कृत्वाचार्य उत्थायाग्नेः पश्चादवस्थाय कुमारं प्राङ्मुखमवस्थाप्य कार्पाससूत्रमाबध्य यज्ञोपवीतं धृत्वा कुमारमाज्यादियज्ञाङ्गादुत्तरः प्राङ्मुख उदङ्मुखोपविश्य बर्हिष्याज्यासादनान्तं कर्म विधायाज्यभागवर्जमाघारान्तं कृत्वा अतनआयूंषीत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्र आज्याहुतीर्हुत्वाचार्य गुरुमध्ये कुमारं स्थापयित्वा तत्सवितुरिति आदि मन्त्रेण देवस्य त्वेति तद्धस्तं गृह्णन् अमुकशर्मन्निति दक्षिणकरेण कुमाराङ्गुष्ठदक्षिणं पाणिं गृहीत्वा पूर्ववदुदकमापूर्य ब्रह्मचारिणे सूर्यं दर्शयित्वा तत उत्तरतोग्नेरन्योन्याभिमुखावुपविश्य कस्य ब्रह्मचार्यसि इति मन्त्रेण वटुं प्राङ्मुखमुपवेश्य कुमारः परिसमूहनादि कृत्वा प्रजापतये स्वाहेति मनसोच्चार्य प्रादेशसंमितां समिधमादाय अग्नये समिधमिति मन्त्रेण अग्नय इदं न ममेत्युद्देशत्यागौ कृत्वा स ततोऽग्निं पाणिना स्पृष्ट्वा प्रक्षाल्य तत उद्दित्यमञ्जलिं विधाय हृदयं निमृज्य पाणिं प्रक्षाल्य पुनः अग्निं स्पृष्ट्वा श्रीयन्त्रोपनीय मम व्रतन्ते हृदयन्ते दधामीत्यादिमन्त्रेण स्वपाणिं मूर्धाञ्जलिं कुमारहृदये निधाय मेखलामादाय यदुरुक्तेतिमन्त्रेण मेखलां बध्वा अदान्तदण्डयित्वेति दण्डं दत्वा ततो ब्रह्मचार्यसि अपोशान, कर्म कुरु, दिवा मा स्वाप्सीरित्याचार्याधीनो वेदमधीष्वेति प्रेषार्थं ज्ञापयन् ब्रह्मचर्यं द्वादशवर्षाणि वेदग्रहणान्तं ब्रह्मचर्यमात्रम् सायंप्रातर्भिक्षामट, तत्रैव समिधमाहरेति आचार्योपदेशानन्तरं पुनरादितः उपस्थायाग्निं प्रदक्षिणं कृत्वा आचार्यः स्विष्टकृदादिहोमशेषं समाप्य वटुर्भिक्षापात्रमादाय प्रथमं मातरं पितरं भगिनीं वा भवति भिक्षां भवतु ददात्विति वा आप्त व्याख्यायिनोऽन्यानपि वा भिक्षां याचयित्वा अनुप्रवचनीयहोमब्राह्मणभोजनपर्याप्तं याचितं व्रीह्यादि द्रव्यं गुरवे निवेद्य मध्याह्नसन्ध्यामुपास्य गुरुसन्निधावहःशेषं परिकल्पं सायं सन्ध्योपासनं विधायाग्निसन्निधौ आगत्योपविश्य प्राणायामं कृत्वा सायं समिदाधानं करिष्य इति संकल्प्य तत्र पूर्ववत्समिधमाधाय त्रिःमुखमव-

मृज्य मानस्तोकेतिमन्त्रेण विभूतिं धृत्वा पुनः परिसमूहनादि कृत्वाग्निं सम्प्रार्थ्य आचार्यः प्राणानायम्य उपनयनाङ्गभूतमनुप्रवचनीयहोमं करिष्य इति संकल्प्य स्थण्डिलोपलेपनादि अग्निप्रतिष्ठान्तं विधायानुष्ठेयेऽनुप्रवचनीयहोमे अन्वाधानं विधायान्वाहितानौ अग्निप्रजापतिमित्यभिधाय परिसमूहनादि प्रणीतामोक्षान्तं कृत्वा चरुं अवदानधर्मेण सदसस्पतिरित्यादित्रिभिर्मन्त्रैर्हुत्वा स्विष्टकृदादिहोमशेषं समाप्यावशिष्टान्नेन त्र्यवरान् द्विजानाचार्यञ्च भोजयित्वा प्रतिवेदसमाप्तिरस्त्विति वाचयित्वा, बन्धून् भोजयित्वा, स्वयमक्षारलवणं भुक्त्वा ब्रह्मचारी द्वादशरात्रं त्रिरात्रं वाधःशायी, गुरुं प्रसाधयीतेति ।

उपनयने आश्वलायनमतमिति ।

## अथ प्रथमशाखिनामभिमत-प्रकारोऽभिधीयते

गर्भाष्टमेऽष्टमे वा पञ्चमे नवमे वा नित्ये काम्ये वा काले उपनयनं चिकीर्षुराचार्यः पूर्वेद्युर्दण्डाजिनादिसामग्रीं सम्पाद्य पुण्याहवाचनाभ्युदयिकं कृत्वा मातृपूजनपूर्वमपरेद्युर्ब्राह्मण्यसिध्यर्थं पञ्चवर्षमष्टवर्षं माणवकमुपनेष्ये इति संकल्प्य ब्राह्मणान् भोजयित्वा पर्युप्तशिरसं कुमारमलङ्कृत्य पश्चादग्नेः कुमारमुपस्थाप्य ब्रह्मचार्यमागामिति ब्रूहीत्येवं वाचयित्वा ब्रह्मचार्यसीति चाथैनं वासः परिधाप्य येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतं ते म नत्वा परिदग्धामीत्यनेन मन्त्रेणायं दुरुक्तात्परिबाधमान इति मन्त्रेण युवा सुवास इति मन्त्रेण वा तूष्णीं वा मेखलाबन्धं विधाय प्रसिद्धिमात्रेण यज्ञोपवीतं परमं पवित्रमिति मन्त्रेण यज्ञोपवीतं धृत्वा मित्रस्य चक्षुरिति अजिनं यो मे दण्डमिति दण्डमाचार्येण दत्त्वा वटुना च प्रतिगृह्यास्याञ्जलिं जलेनापूर्य आपो हिष्ठेति तिसृभिस्तच्चक्षुरिति मन्त्रेण सूर्यमुदीक्षस्व आचार्यप्रेरणया सूर्यमवलोक्य कस्य ब्रह्मचार्यसीति आचार्योक्तौ भवत इत्युक्त्वा अस्मात्युक्ताद् ब्रह्मचार्यसि इत्याचार्यः। तवाहमाचार्यस्तवह सावित्यथैनां भूते परिददामीति आचार्योक्तौ अस्मिन्नित्युक्त्वा जायत् ये त्वा परिददासीति मन्त्रेणभूतेभ्यः परिदत्वा प्रदक्षिणमग्निमुपविश्य अन्वारब्ध आज्याहुतीर्हुत्वा आचार्य आसीदित्यादिवाक्ये आचार्योक्तौ भवामीति वटूक्तौ आपोशान कर्म कुरु मा दिवास्वाप्सीः वाचं यक्ष समिधमाधेहीत्यादि आचार्योक्तौ आश्रमिककरवाणि मा स्वपामि यच्छामि आदधामीत्याद्युक्तौ आग्नेरुत्तरतः पादोपसंग्रहणपूर्वं उपविष्टाय प्रत्यङ्मुखाय वा आचार्यः सावित्रीमुपदिशेत् ।

अथवा दक्षिणतः तिष्ठत आसीनायैव गायत्र्युपदेश इत्युपरि वदन्ति। सा च सद्य एव ब्राह्मणाद्योपादस्य इतरेषामिच्छयेति। तत्र संवत्सरे षण्मासे चतुर्विंशत्यहे द्वादशाहे षड्हे वा एवमुपनयनोत्तरकालमग्निकार्यं ततो नमस्कार इति **याज्ञवल्कीयाभिमतः प्रकारः**। आपस्तम्बानान्तु-स्वरीत्या।

**इति श्रीमहालक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डल-मण्डन समस्तयवनाधीश्वरश्रीनिजामशाहसमस्त साम्राज्यधुरन्धरश्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते संस्कारसारे उपनयनप्रकरणम्।**



## नमस्कारविधिः

एवमुपनयने वृत्ते नमस्कारः कार्यः । तदुक्तं स्कान्दे ।

आत्मपादौ तथाभूमिं सन्ध्याकालेऽभिवादयेदिति ।

अयं हि नमस्कारः सन्ध्योपासनान्ते अग्निहोत्रहोमोत्तरश्च कार्यः ।

## भोजनविधिः

अथ भोजनप्रकारोऽभिधीयते—तच्च पूर्वममृतोपस्तरणमसीत्यादि अपोशानकर्म निर्वर्त्य भोजनं कुर्यात् ।

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।
अपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ।

इति योगीस्मरणात् । तद्भोजनं सायंप्रातः सायंप्रातरितिस्मरणात् । अत्र वशिष्ठः संख्यामाह केषांचित्—

अष्टौ ग्रासा मुनेर्भैक्षं वानप्रस्थस्य षोडश ।
द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ।
कालेनाद्यं लघुक्षिप्रमल्पमद्याद् द्रवोत्तरम् । इति ।

मनुश्च—

नचैवात्यशनं कुर्यात् नचोच्छिष्टः क्वचिद् व्रजेत् ।
अनारोग्यमनायुष्यमस्वर्ग्यश्चातिभोजनमिति ।

पात्रनियमे हारीतः—लौहे मृन्मये वा पात्रे भुञ्जीतेति तत् स्वयमेव प्रक्षालनीयम् । तदाहापस्तम्बः—भुक्त्वास्वयं पात्रं प्रक्षालयेदिति ।

दिङ्नियमे मनुः—

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतुमिष्टमुदङ्मुखः । इति ।

आयुषे हितत ममायुष्यम् ।

**इति श्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्री नृसिंहप्रसादे संस्कारसारे ब्रह्मादि अग्निशुश्रूषा नमस्कारविधिः भोजनविधिः ॥**



# अथ ब्रह्मचारिधर्माः

अथ तद्धर्माः। सन्ध्योपसनाग्निकार्याध्ययनगुरुमुखावलोकनं भिक्षाचरणं अङ्गनैर्मल्यरहितनित्यस्नानदेवर्षिपितृतर्पणदेवतार्चनगुरुनिवेदितान्नभक्षणाधःशयन-गुरुहितमेखलाजिनदण्डोपवीतधारणकौपीनकटिसूत्रकमण्डलुब्रह्मचर्यधारणोदकुम्भस-मित्कुशपुष्पमूलफलाद्याहरणसम्मार्जनोपलेपनाङ्गशुश्रूषास्तत्पूजनप्रभृतयः।

तत्र संवर्त्त आह—

सन्ध्यां प्रातः सनक्षत्रामुपासीत यथाविधि।
सादित्यां पश्चिमां सन्ध्यां जपं कुर्यादतन्द्रितः।
अग्निकार्यञ्च कुर्वीत मेधावी तदनन्तरं।
ततोधीयीत वेदञ्च वीक्ष्यमाणो गुरोर्मुखम्।
सायं प्रातश्च भिक्षेत ब्रह्मचारी सदा व्रती।
निवेद्य गुरवे श्नीयात् प्राङ्मुखो वाग्यतः शुचिः। इति।

तथा—

मेखलामजिनं दण्डमुपवीतञ्च नित्यशः।
कौपीनं कीटसूत्रञ्च ब्रह्मचारी तु धारयेदिति।

यमः—

दण्डं कमण्डलुं वेदं[1] मौञ्जीमिति।

मनुः—

अग्नीन्धनं भैक्ष्यचर्यमधः शय्यां गुरोर्हितम्।
आसमावर्तनात्कुर्यात्कृतोपनयनो द्विजः।
नित्यंस्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम्।
देवानामर्चनञ्चैव सन्ध्योपासनमेव चेति।

व्यासः—

जघन्यशायी पूर्वं स उत्थाय गुरुवेश्मनि।
यच्च शिष्येण कर्त्तव्यं कार्यं दासेन वा पुनः।
कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत् तु पार्श्वतः।
किङ्करः सर्वकारी च सर्वकर्मसु कोविदः। इति।

---

१. वेदो दर्भमुष्टिः

तथा—

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ।

सद्दोषख्यापनं परीवादः । असद्दोषाभिधानं निन्दा । गुरुव्यतिरिक्तोच्छिष्टं न भोक्तव्यम् । उच्छिष्टमगुरोरभोज्यमिति वशिष्टस्मरणात् । अगुरोरभोज्यमित्यनेन गुरोर्भोज्यमिति प्रतीयते । योगी—

मधुमांसाञ्जनोच्छिष्टं शुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाऽश्लीलपरीवादाँश्च वर्जयेदिति ।

मांसवर्जनं व्याधिराहित्ये ज्ञेयम् स चेद् व्याधीयीत् कामम् गुरोरुच्छिष्टशेषमौषधार्थं सर्वं प्राश्नीयादिति वशिष्ठस्मरणात् । व्याधीयीत व्याधिमत्तामनुभवेदिति । अञ्जनं शरीरस्य तैलादिना । नेत्रयोः कज्जलेन औषधादन्यत्रनिषेधः ।

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ।

इति स्मरणात् । शुक्तं परुषं वचः, पर्युषितान्नं वा । स्त्रीशब्दस्तद्दिशि प्रेक्षणालम्भनलक्षणः । आदित्यावलोकनमपि न कार्यम् ।

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं न नभोगतम् ।

इति स्मरणात् ।

अश्लीलं सभायोग्यं वचः । परिवादसदसद्रूपपरदोषख्यापनम् । आदिशब्देन गन्धमाल्यादीनि निषेध्यन्ते । मनुः—

मुण्डोऽथ जटिलो वा स्यादथवा स्यात् शिखी जटीति ।

शिखाविहीनो मुण्डः मुण्डी शिखी चेति गौतमस्मरणात् । तथा कात्यायनः—

सशिखं वपनं कार्यमास्नानाद् ब्रह्मचारिणः ।
आशरीरविमोक्षात्तु ब्रह्मचर्यन्नचेद्भवेदिति ।

इदं हि छन्दोगविषयम्—तथा च विष्णुपुराणे भरतवचः—

एते लूनशिखास्तस्य दशनैरचिरोद्गतैः ।
कुशकाशा विराजन्ते वटवः सामगा इव । इति ।

तथा कामक्रोधलोभगन्धमाल्यनृत्यगीतवादनद्यूतजनवादपरिवादानृतानि वर्जयेदिति विष्णुः । मनुः—

एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित् ।
कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ।

इति ब्रह्मचर्यव्रतम् । तथा रसादयोऽपि वर्ज्याः । रसगन्धांश्च बर्जयेदिति स्मरणात् । स्वप्ने रेतः सेकेप्रायश्चित्तमात्रमेव ।

## अथ वेदाध्ययनम्

अथाध्ययनं वेदस्य—तत्र मन्त्रः—

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यञ्च सर्वं वेदात् प्रसिध्यति ।

योगी—

यज्ञानां तपसाञ्चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः । इति ।

मनुः—

वेदमेव सदाभ्यस्येत् तपस्तप्येत् द्विजोत्तमैः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ।
आ हैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यऽपि द्विजो धीते स्वाध्यायं शक्तितोन्वहम् ।

वृत्तितोऽन्वहमिति । स्रग्वी धृतमाल्यां नियमविहीनोपीत्यर्थः । व्यासः—

नान्यतो ज्ञायते धर्मो वेदादेवैष निर्बभौ ।
तस्मात्सर्वप्रयत्नेन यज्ञार्थी वेदमाश्रयेत् । इति ।

तथा—

योऽनधीत्य द्विजो वेदमिति ।

स च वेदार्थ पर्यवसायी—

न वेदपाठमात्रेण सन्तोषं कारयेद् गुरुः ।
पाठमात्रावसायी तु पङ्के गौरिव सीदति ।

इति लधुव्यासस्मरणात् ।

वृद्धव्यासोऽपि स्मरति—

वेदस्याध्ययनं पूर्वं धर्मशास्त्रस्य वापि यत् ।
अजानतोऽर्थं तत्सर्वन्तुषाणां कण्डनं यथेति ।

तथा यास्कोपि—

स्थाणुरयं भारहारः किलाऽभूदिति ।

तथा—

योऽधीत्य विधिवद्विप्रो वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यत । इति ।

पाठमात्ररतान् नित्यं द्विजांश्चार्थविवर्जितान् ।
पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्चयेत् । इति

अतो विचारपर्यन्तमध्ययनम्—

वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।

इति दक्षस्मरणात् । लघुव्यासः—

श्रुतहीनमधीयन्तं यन्नेह नामुत्र तद्भवेत् ।
श्रुतन्तु केवलमपि समुद्धाराय कल्पते । इति ।

अतोर्थज्ञानपर्यन्तमध्येतव्यो वेदः । तत्र मनुः—

तपोविशेषैर्विविधैः व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना । इति ।

उपनिषद्रहस्यम् । अधिगन्तव्योऽध्येतव्यः ।

अध्येष्यमाणं च गुरुः नित्यकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयात् विरामोस्त्विति वा वदेत् ।

ॐकारपूर्विकास्तिस्रो महाव्याहृतयोप्यथ ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखमिति ।

ॐभूर्भुवः स्वरिह महाव्याहृतयस्तिस्रः तत्सवितुरिति सावित्री ब्रह्मणो वेदस्य मुखम् । आरम्भ इतियावत् । गौतमः—पञ्चव्याहृतयः प्रयोज्या इत्याह । ॐ पूर्वा व्याहृतयः पञ्च सत्यन्ता इति प्रत्यहमेव ज्ञेयम् ।

प्रणवं प्राक्प्रयुञ्जीत् व्याहृतीस्तदनन्तरम् ।
सावित्र्याश्चानुवचनं ततो वृत्तान्तमारमेत् ।

इति संवर्त्तस्मरणात्। वृत्तान्तं यन्न स्थितमित्यर्थः। प्रणवोच्चारणं प्राणायामत्रयोत्तरकालं कर्त्तव्यम्।

[१]प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः।
प्राणायामैस्त्रिभिः पूतः तत ॐकारमर्हति।

इति मनुस्मरणात्। प्राणायाम आह्निकसारे सापेक्ष्यते।

योगी—

गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः। इति।

मनुः—

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः।
प्राञ्जलिः प्रकृतोध्याप्यो लघुवासा जितेन्द्रियः।
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा।
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।
सव्येन सव्यः स्पृष्टव्यो दक्षिणेन तु दक्षिणः।
ब्राह्मणः प्रणवं कुर्यादावन्ते च सर्वदा।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विसीर्यते।

अथ दिङ्नियमस्तत्र मनुः—

अध्येष्माणस्त्वाचान्त इति। तथा गौतमोऽपि—प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वापीति।

मनुः—

नोदित्वा गुरुणा नित्यमप्रमाणादिरेव वा।
कुर्यादध्ययने योगमाचार्यस्य हितेषु चेति।
नित्यमुद्धतपाणिस्यात्स्वाध्यायार्थं समाहितः।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः।
हीनान्नवस्त्रवेषःस्यात्सर्वदा गुरुसन्निधौ।
उत्तिष्ठेत्प्रथमं वास्य चरमं चैव संविशेत्।

गुर्वपेक्षया हीनान्नवस्त्रवेषत्वं।

संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिरिति संवर्त्तः।
ततोधीत्याह वेदन्तु वीक्ष्यमाणो गुरोर्मुखम्।
हस्तौ तु संहतौ कार्यौ जानुभ्यामुपरिस्थितौ।

---

१. प्रागग्रानित्यर्थः।

इति अध्याप्या वशिष्ठोक्ताः।

विद्या ह वै ब्राह्मणमाजगाम गोपायमा शेवधिष्टेहमस्मि।

असूयकायानृजवे जडाय न मा ब्रूया वीर्यवती तथास्यामिति।

शिष्यस्तु वेणुरज्जुभ्यामेव ताड्यो न पाणिभ्याम् न शिरसि।

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याद् घोरकिल्बिषम्। इति।

मनुस्मरणात्। विद्याफलमुक्तं देवलेन—

विद्यावित्तं तपश्चेति त्रीणि तेजांसि देहिनः।
इह चामुत्र च श्रेयस्तदेतै साध्यते स्त्रिभिः। इति।
तपोविद्याथ विप्रस्य निःश्रेयसकरं परम्।
तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते। इति।

**इति श्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते-**
**नृसिंहप्रसादे संस्कारसारे-**
**अध्ययनविधिः।**



# अथोपाकर्म-प्रकरणम्

तत उत्सर्जनं कर्म तु तेन कर्मण: कालः निर्णयसारेऽनध्यायावपि। तत्र ब्रह्मचारी द्विविधः उपकुर्वाणो नैष्ठिकश्च। उपकुर्वाणोक्तविधिना आत्मानं निष्ठा-मुत्क्रान्तिकालं गमयतीति नैष्ठिक उच्यते। स आचार्यसन्निधावेव तिष्ठेन्न तु समावर्त्तनं कुर्यात्। तदभावे तत्पुत्रादौ—

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते।
गुरुदारे सपिण्डे वा गुरुवद् वृत्तिमाचरेत्। इति।

योगी—

नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा। इति।

गुरुः—

उपकुर्वाणस्य तत् सर्वं समादिष्टं मया व्रतम्।
अधुना सम्प्रवक्ष्यामि नैष्ठिकस्य समासतः।
योग्निकार्यं स्वाध्यायं भैक्ष्याधःशयनं दयाम्।
आसृत्यनैष्ठिकं कुर्वन् ब्रह्मलोकमवाप्नुयात्। इति।

देवलः—ब्रह्मसूत्राक्षमालादण्डकाष्ठकुण्डिकामौञ्जीमेखलाधारणं सकृद्भो-जनमसकृदवगाहनत्रिषवणस्नानमुभयकालाग्निहोत्रं सन्ध्योपासनं वाहनलंघनप्लवन-लोमकेशनखत्वग्गन्धमाल्यस्नेहाभ्यञ्जनांजनवेषालङ्कारवृत्तोपाधिवनचिकित्साज्यो-तिषलक्षणवारतुविद्यामङ्गलशान्तिकपौष्टिककर्मगान्धर्वसंवसमयबन्धनशिल्पलेखनका-रुकर्मवेश्मक्षेत्रद्रव्यधनधान्यपरिच्छदशस्त्रव्यवहारज्ञभावलीलापरिहासप्रणयकुहक-विस्मापनविडम्बनविवादोत्सेकपरिवेदनरोदनपादोद्वर्त्तनवर्जमिति।

वशिष्ठः—संयतवाक्चतुर्थषष्ठाष्टमकालभोजी भैक्षाशीगुर्वधीनो जटिलः-शिखी जटी वा गुरुं गच्छन्तमनुगच्छेत्, आसीने चोत्तिष्ठेत् शयानं चेदासीनः, हुताग्न्यायी सर्वस्वनिवेदी तदनुज्ञया भुञ्जीतेति खट्वाशयनदन्तप्रक्षालना-भ्यञ्जनानि वर्जयेत्।

अग्निसेवाप्रकारो हारीतोक्तः—यज्ञियाः समिध आहृत्य संमार्जनोपलेपनोद्बोधनावगूहनसमिन्धनपर्यग्निकरणपरिक्रमोपस्थानहोमस्तोत्रनमस्कारादिभिरग्निं परिचरेदिति व्रतस्य फलमुक्तं योगिना ।

अनेन विधिना देहं साधयित्वा जितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति, न देही जायते पुनः ।
एतद्व्रतं कुशादीनामभिहितं विष्णुना ।
कुब्जवामनजात्यन्धक्लीवपंग्वार्त्तरोगिणाम् ।
ब्रह्मचर्याभवेत्तेषां यावज्जीवमनंशतः । इति ।

अनंशतः अंगाभावात् इति यावत् । पश्वादीनामेवाधिकारोक्तौ इतरेषां पाक्षिकनैष्ठिकत्वाभिधायकं मनुवचनं विरुध्यते ।

यदि त्वात्यंन्तिको वा संरोचयेत गुरोःकुले ।
युक्तः परिचरेदेनमाशरीरविमोक्षणात् ।

अतः पंग्वादीनां नित्योऽधिकारः ।

पङ्ग्वादीनामनंशत्वादसामर्थ्याच्च शास्त्रतः ।
नियतं नैष्ठिकत्वं स्यात्कर्मस्वनधिकारतः ।

इति संग्रहकारवचनात् पंग्वादीनाम् । इतरेषां पाक्षिकः इति सिद्धम् ।

अत्र ब्रह्मचारिद्वैविध्येऽपि चत्वार आश्रमा इति विरुद्धमिति वाच्यम् । नित्यकाम्याग्निहोत्रवत्संकल्पभेदमात्रेण भेदोपपत्तेः ।

द्वितीयो नैष्ठिकश्चैव तस्मिन्नेवाश्रमे स्थितः ।

इति दत्तस्मरणात् । तस्मिन्नाश्रमेस्थित इति वदनात् धर्मातिदेशविधानात् ।

**इति श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे नैष्टिकब्रह्मचारिधर्मप्रकरणम् ।**



## अथ समावर्तनम्

अथ समावर्तनप्रकरणमत्राभिधीयते ।

तत्र दक्षः—

स्वीकरोति यदा वेदं चरेद्वेदव्रतानि च ।
ब्रह्मचारी चरेत्तावदूर्ध्वं स्नानाद्भवेद् गृही । इति ।

व्रतशब्दो ब्रह्मचर्यपरः । वेदपदं वेदार्थमुपलक्षयति । तथा च स्मृत्यन्तरं वेदमधीत्य छन्दोविषयानर्थान् बुद्ध्वा स्नायादिति ।

तत्र योगी—

गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव च ।

लघुव्यासः—

ऋक्पादमप्यधीत्यातो न्यायतस्तु तदर्थवित् ।
सम्यग्व्रतानि संशेव्य समावर्तनमर्हति । इति ।
योधीत्य विधिवद् विप्रो वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ।
अधीत्य किञ्चिदपि वेदार्थाधिगमे रतः ।
स्वर्गलोकमवाप्नोति धर्मानुष्ठानवान् द्विजः ।

सम्यग्व्रतानि संशेव्य समावर्त्तनमर्हतीति । स्नातको हि त्रिविधः । विद्यास्नातको, व्रतस्नातको, विद्याव्रतस्नातकश्च । वेदं समाप्य व्रतानि समापवर्त्तते स विद्यास्नातकः, यस्तु व्रतानि समाप्य वेदे समवर्त्तत स व्रतस्नातकः, यश्चोभयत्र समाप्य समावर्त्तते स विद्याव्रतस्नातकः ।

तथा च हारीतः—त्रयः स्नातकाः भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्चेति । अत्र पक्षे वेदाध्ययनसमाप्तावेव गुरवे दक्षिणा देया ।

## गुरुदक्षिणा

सा च दक्षिणा गौरेव ।

गुरुशुश्रूषया विद्यां सम्प्राप्य विधिवद् द्विजः ।
स्नायीत गुर्वनुज्ञातो दत्वास्मै दक्षिणां हि गाम् ।

इति व्यासस्मरणात् । यद्वा तदपि प्रीतिसाधनद्रव्योपलक्षणार्थं गोग्रहणमिति मनुः ।

धान्यं वासांसि शाकं वा गुरवे प्रीतिमाहरेत् ।
क्षेत्रं हिरण्यं गामश्वं छत्रोपाहनमन्ततः ।

ततश्च प्रीतिकरं देयम् । लघुहारीतः—

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा त्वनृणी भवेत् ।

इदञ्च दक्षिणादानं आश्रमान्तरप्रवेशेऽपि ज्ञेयम् ।

गुरवे दक्षिणां दत्वा स यमिच्छेत्तमाविशेत् ।

यो हि दक्षिणादानासमर्थः । स च तदनुज्ञातः स्नायात् । विद्यान्ते गुर्वनुज्ञातः स्नायादिति गौतमस्मरणात् । विद्यादानात्पूर्वं किमपि न देयम् ।

न पूर्वं गुरवे किञ्चित् उपकुर्वीत धर्मवित् ।
स्नातस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ।

इति मनुवचनात् । न च स्नानकर्मनियतं विरक्तस्य विवाहरागाभावात् ।

गुरवे दक्षिणां दत्वा स यमिच्छेत्तमाविशेत् ।
विरक्तः प्रव्रजेद्विद्वान् सरागस्तु गृहे वसेत् । इति ।

नृसिंहपुराणवचनात् ।

## ग्रहसंस्थानम्

एतच्च समावर्त्तनमुक्तदिवस एव कर्त्तव्यम् ।

भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते ।
ताराचन्द्रविशुद्धौ स्यात् समावर्त्तनिका क्रिया ।

इति सुरेश्वरवचनात् ।

## स्नातकव्रतम्

अथ स्नातकव्रतान्यभिधीयन्ते—

तथानाक्रमणीयानि मनुः—

देवतानां गुरोः राज्ञः स्नातकाचार्ययोस्तथा ।
नाक्रमेत् कामतः छायां बभ्रुणो दीक्षितस्य च ।

बभ्रुः कपिल इत्यर्थः ।

मध्यन्दिनेऽर्धरात्रे च श्राद्धं भुक्त्वा च सामिषम् ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुःपथम् ।
उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च ।
श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः ।
वैरिणं नैव सेवते सहायं नैव वैरिणः ।
अधार्मिकं तस्करं च परस्यैव च योषितम् । इति ।

उद्वर्तनं कृतं मलापकर्षणं कुङ्कुमादि । अपस्नानं स्नाने उपयुक्तं जलम् । निष्ठ्यूतं उद्गीर्णं ताम्बूलादि ।

योगी—

देवर्त्विक्स्नातकाचार्यराजच्छायां परस्त्रियः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनानि च । इति ।

हारीतः—

आचमनावमार्जनापस्नानतुषभस्मास्थिकपालसञ्चयं नाधितिष्ठेदिति । अवमार्जनं मार्जनोपयुक्तकुशादि । कपालं खर्परः ।

विष्णुः—न चतुष्पथमधितिष्ठेत न रात्रौ वृक्षमूलं शून्यालयमिति । न तृणं न बन्धनागारमिति ।

## स्नातकनियमाः

पारस्करः-स्नातकस्य नियमान्वक्ष्यामः—

कामादितरो नृत्यगीतवादित्राणि न कुर्यात् । न गच्छेत् कामं तु गीतं गायन्तीति । क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न धावेदिति ।

अयमर्थः—ब्रह्मचर्यात्समावृत्तस्य नियमान् व्रतान् वक्ष्यामः। कामादिच्छया नृत्यगीतादिद्रष्टुं न गच्छेदिति। इतरो ब्रह्मचारी सोऽपि न कुर्यात्। क्षेमे सति नक्तं ग्रामान्तरं न गच्छेत्, आपदभावे सति च न धावेत्। तथा कूपावेक्षण-वृक्षारोहणादि न कुर्यादिति। न ह वै स्नात्वा भिक्षेत। वर्षासु प्रावृतो गच्छेत्। अयमेव वज्र इत्यनेन मन्त्रेण गच्छेत्। अश्वमुखं नावेक्षेत। गुरुः—

सख्यं समधिकैः कुर्यात् उपेयादीश्वरं सदा।
वैरं निर्हेतुकं वादं न कुर्यात् केनचित्सदा। इति संवर्त्तः।
कुर्याद् गृह्याणि कर्माणि स्वभार्यापोषणं परम्।
ऋतुकालाभिगामी स्यात् प्राप्नोति परमां गतिम्।
शेषान्नं ऋतुगामित्वं पञ्चयज्ञाः स्वकर्म च।
तुल्यैश्च सह सम्बन्धो गृहस्थस्य विधीयते।

गृहस्थस्यापि स्नातकत्वमस्तीति गृहस्थस्य साधारणधर्मोक्तिः।

मनुः—भद्रं भद्रमिति ब्रूयात् भद्रमित्येव वा वदेत्।
शुष्कवादं विवादञ्च न कुर्यात् केनचित्सह।

वशिष्ठ :—

आहारनिर्हारविहारयोगा सुसंवृता धर्मविदा तु कार्याः।
वाग्गुप्तिकार्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्ये। इति।

निर्हारः—मूत्रपुरीषोत्सर्गः। विहारः—स्त्रीसेवा, योगःसमाधिः। वाग्गुप्तिरालापादिपरिवर्जनेन, बुद्धिगुप्तिः अशुभसंकल्पादि परिवर्जनेन।

विष्णुपुराणे—

विरोधं नोत्तमैर्गच्छेत् नाधमैश्च सदा बुधः।
विवाहश्च विवादश्च तुल्यरूपैर्नृपेष्यते।
नारभेत कलिं प्राज्ञः शुष्कं वैरञ्च वर्जयेत्।
अत्यल्पहानिः सोढव्या वैरेणार्थागमं त्यजेत्। इति।

पैठीनसी—मत्तप्रमत्तोन्मत्तैःसह सम्भाषणं न कुर्वीत। न परस्त्रियं रहसि सम्भाषेत्।

सांख्यायनगृह्ये—सूतिकोदक्याभ्यां न सम्भाषेत्। न म्लेक्षाशुच्यधार्मिकैः सह सम्भाषेत। सम्भाष्य पुण्यकृतो मनसा ध्यायेत्। ब्राह्मणेन सह सम्भाषेतेति।

मार्कण्डेयपुराणे—

वेददेवद्विजातीनां साधुसत्यतपस्विनाम् ।
परिवादं न कुर्वीत परिहासोऽपि पुत्रक ॥
ब्रुवतामविनीतानां श्रोतव्यं न कथञ्चन । इति ।

पैठीनसिः—

अनिन्द्याः ब्राह्मणा गावः कांचनं सलिलं स्त्रियः ।
पृथिवी च षडेतानि यो निन्दति स निन्दितः ।

महाभारते—

सम्पन्नं भोजने ब्रूयात् पानीये तर्पणन्तथा ।
सुश्रुतं पायसे ब्रूयात् यवाग्वां कृशरे तथा ।
महात्मनां च गुह्यानि न वक्तव्यानि कर्हिचित् ।
त्वङ्कारं नामधेयञ्च ज्येष्ठानां परिवर्जयेत् ।
अधमानां समानानामुभयेषां न दुष्यति ।

हारीतः—

विवादं वर्जयेद्विप्रे सर्वेषाञ्चैव सूचनम् ।
परिभोगं यथोक्तेषु मत्सरं पुत्रशिष्ययोः ।

तस्मान्नैव परिवदेदिति मनुः ।

ऋत्विक्पुरोहिताचार्यमातुलातिथिसंश्रितैः ।
वृद्धबालातुरैर्वैद्यैः ज्ञातिसम्बन्धबान्धवैः ।
मातापितृभ्यां जामाता पुत्रेण सह भार्यया ।
दुहिताया स्वधर्मेण विवादं न समाचरेत् । इति ।
नच दुष्टां वदेत् वाचं न दीनां नच कर्कशाम् । इति ।

अश्लीलं च न ब्रूयात् । तद्विविधं लज्जाकरं, दुःखकरममङ्गलकरं वेति ।

विष्णुपुराणे—

पूज्यदेवधनज्योतिच्छायां नातिक्रमेद् बुधः ।
नचैव गोप्रसूतायां विश्वसेत् स्त्रीजनस्य च ।
न मुखेन धमेदग्निं, न खड्गं लंघयेत्तथा ।

योगी—

नेक्षेतार्कं न नग्नां स्त्रीं नच संसक्तमैथुनाम् ।
नच मूत्रपुरीषञ्च नाशुची राहुतारकाः ।

देवतापितृसच्छास्त्रयज्ञसत्यादिनिन्दकैः ।
कृत्वा तु स्पर्शमालापं शुध्येतार्कविलोकनात् ।
अवलोक्य तथोदक्यामन्त्यजं पतितं शठम् ।
विधर्माशुचिपाखण्डं विवस्त्रान्त्यावसायिनः ।
मृतनिर्यातिकांश्चैव परदाररतांस्तथा ।
एतदेव हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः ।

तथा विष्णुः—

न क्रुद्धस्य गुरोर्मुखमवलोकयेत इति ।

## अकुलकरणानि

तत्र यमशातातपव्यासाः—

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण वा ।
गोभिरश्वैश्च यानैश्च कृष्णराजोपसेवया ।
अयाज्ययाजने चैव नाह्निके न च कर्मणा ।
कुलान्यकुलतां यांति यानि हीनानि मन्त्रतः ।

वशिष्ठः—

नाग्निब्राह्मणान्तरे व्ययेयात् । नाग्योर्न ब्राह्मणयोः न गुरुशिष्ययोरन्तराले गच्छेदित्यलम् ॥

**इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्गप्रवर्त्तक सकलभूमण्डलमण्डन समस्तयवनाधीश्वर श्रीनिजामसाह-समस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराज श्रीदलपतिराजविचिरते नृसिंहप्रसादे संस्कारसारे समावर्तनं सम्पूर्णम् ।**



# अथ विवाह

## अथ विवाहोऽभिधीयते

तत्र याज्ञवल्क्यः—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्।

तथा मनुरपि—

गुरुणानुमतः स्नात्वा समावृत्य यथाविधि॥
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्। इति।

तथा ब्रह्मचारिधर्मानभिधायि संवर्त्तः—

एवं धर्मः समाख्यातः प्रथमाश्रमिणां द्विज।
अतः परं समावृत्तः कुर्याद्दारपरिग्रहम्।

समावृत्तः गुरुकुलादागत्य कृतस्नानाख्यसंस्कारः।

तथा च मनुः—

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्।

वेदान् वेदादिकः। पुरुषशक्त्यपेक्षया विकल्पो यथाक्रमम्। यथाविहिताध्ययनेतिकर्तव्यतया।

तथा च यमः—

वेदो वेदं वेदान्वा ततोधीत्य यथाविधि।
अविशीर्णब्रह्मचर्यो—दारान् कुर्वीत धर्मवित्।

एवञ्च विशीर्णब्रह्मचर्यस्य कृतप्रायश्चित्तस्य उत्तराश्रमेष्वनधिकारः सूचितः स्यात्।

तथा वृद्धयोगी—

गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्।

लक्षणान्वितां शुभसूचकचिह्नयुक्ताम्।

गुरुवासमनुज्ञां यः प्रदाय गुरुदक्षिणाम्।

सदृशानावहेद्दारान् मातापितृमते स्थितः ।

वा शब्दो नैष्ठिकापेक्षया समनुज्ञायेति समनुज्ञाप्येत्यर्थः ।

ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परिग्रहे ।
सजातिः श्रेयसी भार्या सजातिश्च पतिःस्त्रियाः ।

इति सजातिः समानजातिःश्रेयसी श्रेष्ठा ।

तथा बृहस्पतिः—

समानामुद्वहेत् पत्नीं कुलशीलवयो गुणैः ।
तया सह चरेद्धर्मं श्रौतं स्मार्त्तं यथाविधि ।

समानान्तदनुरूपाम् । तच्चानुरूप्यं चतुर्भिप्रकारैः । कुलेन शीलेन वयसा गुणैश्च । तच्च वयसा आनुरूप्यं सामान्यं तुल्यतारूपञ्चेदंगीक्रियेत तदा षोडशवार्षिकवरस्य षोडशवार्षिकी कर्त्तव्या भवेत् । चतुर्विंशतिवार्षिकस्य चतुर्विंशतिवार्षिकीति । तच्च लोकविरुद्धमतः ।

वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणं स्वयम् इत्याद्युक्तं साम्यम् द्रष्टव्यम् । तथा चाह कश्यपः —

दाराधीनाः क्रियाः सर्वाः ब्राह्मणानां विशेषतः ।
दारान् सर्वप्रयत्नेन विशुद्धामुद्वहेत्ततः ।
देवतानां नमस्कारा पितृणां चोदकक्रियाः ।
दारतः सम्प्रवर्त्तन्ते दाराः स्वर्गस्य संक्रमः ।
इत्येतत्कश्यपसम्मतं ब्रह्मणश्चानुशासनम् ।

विशुद्धान् कुलतः स्वरूपतश्च ।

तथा च हारीतः—गुरुणानुज्ञातोऽलङ्कारादीन् गृह्णीयात् यथार्हं ततः बिभृयात् आमन्त्र्य गृहान्येत्य विधिवद्दारानाहृत्याग्निं निधाय उञ्छशिलाभ्यामयाचितोपपन्नं साधुभ्यो याजनात् देवऋषिमनुष्यार्थे धृत्वाऽदानं कुर्वीत । आत्मार्थे-लङ्कारादीन् स्वगृह्योक्तकुण्डलप्रभृतीन् आदिशब्देन स्रग्दण्डादीन् गृह्ये दर्शितान् तेषां समावर्त्तनकाल एव ग्रहणं नित्यम् ।

समावर्त्तनकाले नियमः वृद्धविष्णुनाऽभिहितः । एवं द्वित्रान् वेदानधीत्य गुरून् परितोष्यानुज्ञातो मुञ्जाद्यपनयनं कृत्वा सवर्णां परिणीय ब्राह्मादिना विवाहेन ऋतुकालाभिगामी पुत्रानुत्पाद्यावसथ्याधानं कृत्वाऽतिथीन् पूजयेदिति वृद्धयाज्ञवल्क्यः ।

## कन्यालक्षणानि

विष्णुः—

वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा।
समावर्त्तनपूर्वन्तु लक्षण्यां स्त्रियमुद्वहेत्।
अरोगणीं भ्रातृमतीं असमानार्षगोत्रजाम्।

लक्षण्यां बाह्याभ्यन्तरलक्षणयुक्ताम् लक्षणानि मनूक्तानि—

अव्यङ्गांङ्गीं सौम्यनाम्नीं हंसवारणगामिनीं।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्।

अपरिवेषया तु पतिर्नैवोक्ताः।

नोद्वहेत्कपिलां कन्यां नाधिकाङ्गी न रोगिणीम्।
नालोमिकां नातिलोमां नवाचाटां न पिङ्गलाम्।
नच वृक्षनदीनाम्नीं नच पर्वतनामिकाम्।
न तस्य प्रेष्य नाम्नीश्च नच भीषणनामिकाम्।

कपिलारक्ततण्डुलवर्णा, पिङ्गलामग्निवर्णाम्।

अन्त्येक्षिमक्षणानाम्नी विष्णुपुराणे—

न श्मश्रुव्यञ्जनवतीं नचैव पुरुषाकृतिम्।
न घर्घरस्वरां क्षामां तथा काकस्वरां नच।
न निबन्धेक्षणां तद्वद् वृत्ताक्षीं नोद्वहेदतः।
यस्याश्च रोमशे जंघे गुल्फस्तस्यास्तनोन्नतौ।
गण्डयोः कूपको यस्याः हसन्त्यान्तां च नोद्वहेत्।
न वामनां नातिदीर्घां नोद्वहेत्संगतभ्रुवम्।
नचातिच्छिद्रदशनां न करालमुखीं नरः। इति।

व्यासः—

प्रतिष्ठिततलासम्यग्रक्तांभोजसमन्विताम्।
तादृशाश्चरणा धन्या योषितां भोगवर्धनाः।

तथा

करालैरतिनिर्मांसैरूक्षैरथशिरातलैः।
दारिद्र्यं दुर्भगत्वं च प्राप्नुवन्ति न शंसयः।

अङ्गुल्यः संहता वृत्ताः रूक्षसूक्ष्मनखास्तथा ।
कुर्वन्त्यनन्तमैश्वर्यं राजभोगश्च योषिताम् ।
दारिद्र्यं मूलभुग्नासु प्रेष्यत्वं पृथुलासु च ।

तथा

परस्परसमारूढैरतनुल्हिरुपपर्वभिः ।
बहूनपि पतीन् हत्वा दासी भवति चेद् द्विजः ।
अङ्गुष्ठोन्नतपर्वाणस्तुगायाकोमलान्विताः ।
रथकाञ्चनलाभाय विपरीता विपत्तये ।
सुभगत्वं नखैःस्निग्धैराताम्रैश्च धनाप्यता ।
पुत्रास्यूरुन्नतैरेभिः सुसूक्ष्मैश्चापराजिताः ।
पाण्डुरैस्फटिकैरूक्षैः नीलैर्धूम्रैस्तथा खरैः ।
तिस्रता भवति स्त्रीणां पीतैश्चाभक्ष्यभक्षगम् ।
शुक्लास्निग्धाश्चवृत्ताश्च समारूढशिरास्तथा ।
यदि स्युर्न पुरन्दध्युर्वान्धिबाद्यैः समाप्नुयुः ।
जङ्घाः कुर्वन्तु सौभाग्यं यानञ्च गजवाजिभिः ।
श्रियमाद्यंशभाग्यत्वं प्राप्नुवन्ति सुतांस्तथा ।
घंटाभैरवदन्ता वा निर्मांसैः कुलटास्त्रियः ।
सिगलैरपि सिंहा स्युः विशिष्टैधर्मवर्जिता ।
अतान्तैः कुञ्चितैः सूक्ष्मैः स्फुटिताग्रैर्गुडप्रभैः ।
अनेकजैस्तथा रोमैः केशैश्चापि तथाविधैः ।
अत्यन्तपिङ्गला नारी विषकन्येति निश्चिता ।
सप्ताहाभ्यन्तरे जाया पतिं हन्यान्न संशयः ।
हस्तिहस्तनिभैर्वृत्तैः रम्भाभैः करभोपमैः ।
प्राप्नुवन्त्यूरुभिः शश्वत् स्त्रियः सुखमनङ्गजे ।
दौर्भाग्यं चलमांसाभिर्बन्धनं रोमसोरुभिः ।
तनुभिर्बन्धमित्याहुर्मध्यच्छिद्रेष्वनीशताम् ।
सत्यावर्त्तसमं वोरू सूक्ष्मरोमचितं पृथक् ।
जघनं शस्यते स्त्रीभिरतिसौख्यकरं द्विज ।
ऊर्ध्वरोम भवेद् यस्याः समं सश्लिष्टसंस्थितम् ।
अपि नीचकुलोत्पन्ना राजपत्नी भवत्यसौ ।
अश्वत्थपत्रसदृशकूर्मपृष्ठोच्चचूलिकः ।

शशिबिम्बनिभश्चापि तथा च शकटाकृतिः ।
भगः शस्ततमः स्त्रीणां रतिसौभाग्यवर्धनः ।
तिलपुष्पनिभो यश्च यस्याश्च खरसन्निभः ।
द्वावप्येतौ परप्रेष्यं कुर्वन्ति च दरिद्रताम् ।
उलूखलनिभैः शोकं मरणं विकृताननैः ।
विरूपपूतिनिर्मांसैः गजाश्वसमरोमभिः ।
दौःशील्यं दुर्भगत्वञ्च दारिद्र्यमधिगच्छति ।
कपित्थफलसंकाशः पीतो वलिविवर्जितः ।
स्फिकः प्रशस्तो नारीणां निन्दितो स्त्यन्यथा द्विज ।
पयोधरतरोनम्रः प्रवालत्रिवलीगुरुः ।
मध्यःशुभावहस्त्रीणां रोमराजिविभूषितः ।
पणवाभैर्मृदङ्गाभैस्तथामध्यैर्यवोपमैः ।
प्राप्नुवन्ति भयावासं दौःशील्यमपि चेदृशैः ।
अचक्रानुलत्रणं पृष्ठमरोमस्तु समाहितः ।
नानाप्रस्तरपर्यङ्कं रतिसौभाग्यकं परम् ।
कुङ्कुमद्रोणिकं पृष्ठं रोमसं यदि योषितः ।
स्वप्रान्ते च सुखं तस्य नास्ति हन्यात्पतिं च सा ।
विपुलैः सुकुमारैश्च कुक्षिभिस्तु वहुप्रजाः ।
मण्डूककुक्षिर्या नारी राजानं सा प्रसूयते ।
उन्नतैर्वलिभिर्वन्ध्या संवर्ते कुलटास्त्रियः ।
परकर्मरता सा स्यान्न प्रभुत्वमवाप्नुयात् ।
उन्नतायजाति अर्द्धविषमैर्विषमाशयाः ।
आहुरैश्वर्यसम्पन्ना वनिताहृदयैः समैः ।
सुवृत्तमुन्नतं पीनं मृदुलोन्नतमायतम् ।
स्तनयुग्मं सदा सम्रमतोन्यदसुखावहः ।
उन्नतिः प्रथमे गर्भे द्वयोरप्येकभूयसी ।
वामे तु जायते कन्या दक्षिणे तु भवेत्सुतः ।
दीर्घे तु चूचुके यस्या सा स्त्री धूर्त्ता रतिप्रिया ।
प्रविष्ठे तु पुर्नयस्या द्वेष्टि सा पुरुषं सदा ।
स्तनैः सर्पस्फुटैस्तुल्यैर्भवतीह तथा द्विजाः ।
सुसमं मांसलं चारु शिरारोमविवर्जितः ।

वक्षो यस्याभवेन्नार्या भोगान् भुङ्क्ते यथेप्सितान् ।
हिंस्रा भवति चक्रेण दौःशील्यं वा समं न तु ।
वैधव्यश्चैवमवाप्नुयात् विस्तीर्णे कलहप्रिया ।
चतस्रो रक्तगम्भीरा रेखास्निधा करे स्त्रियः ।
यदि स्युः सुखमाप्नोति विछिन्नाभिरनीशता ।
रेखाकनिष्ठिकामूलात् यस्याःप्राप्ता प्रदेशिनीम् ।
शतमायुर्भवेत्तस्या जनीयान् न्यूनता क्रमात् ।
सवृत्ताः समपर्वाणस्तीक्ष्णाग्राकोमलत्वचः ।
समा ह्यंगुलयो यस्याः सा नारी भोगवर्धनी ।
बन्धुजीवारुणैस्तुल्यैः नखैरैश्वर्यमाप्नुयात् ।
खरोष्ट्रत्रिविवर्णाभैः श्वेतपीतेरनीशता ।
रक्तैर्मृदुभिरैश्वर्यं विच्छिनांगुलिभिर्द्विजाः ।
स्फुटैरविरतिरुक्षैः दलैशैः पाणितलैः खरैः ।
समरेखाथवा जाता अङ्गुष्ठाङ्गुलिपर्वसु ।
तासां हि विपुलं सौख्यं धनधान्यं तथाक्षयम् ।
मणिबन्धो व्यवच्छिन्नो रेखात्रयविभूषितः ।
तथा ते न चिरादेव मणिकाञ्चनमञ्जुलम् ।
श्रीवत्सपद्मसंख्यांख्यगजवाजिनिवेसनैः ।
चक्रवस्त्रिकवक्षांसि पूर्णकुम्भैरिवाङ्कुशैः ।

## पूनर्भूवरणनिषेधः

तथा च विष्णुः—

अनन्यपूर्विकामसमानगोत्रामसमानप्रवरां कान्तां यवीयसीमुद्वहेत ।

अयमर्थः—अन्यपूर्व उपभोक्ता दाता वा यस्या सा अन्यपूर्वा न अन्यपूर्वा अनन्यपूर्वा तामिति । उपभोगावदानाभ्यां पुरुषान्तरापरिगृहीतां कान्तां कमनीयां रमणीयान्तां परिणेतुर्मनोनयनानन्ददायिनीमित्यर्थः ।

अनेन पुनर्भूवरणं न्यवारि । तथा च बौधायनः—

वाग्दत्ता च मनोदत्ता अग्निपरिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति ।

कश्यपोऽपि सप्त पौर्नभवा कन्या वर्जनीया कुलाधामा ।

वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ।
उदकस्पर्शिता या च या च पाणिगृहीतका ।
अग्नि परिगता या च पुनर्भू प्रसवाय च ।
इत्येताः कश्यपेनोक्ता दहन्ति कुलमग्निवत् ।

तथा च योगी—

अक्षता च क्षता चैव पुनर्भू संस्कृता पुनः । इति ।

तथा च नारदोऽपि—

कन्यैवाक्षतयोनिर्या पाणिग्रहणपूर्विका ।
पुनर्भू प्रतिमा ज्ञेया पुनः संस्कारकर्मणि । इति ।

सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजा न धर्मं विन्देतेति ।

तथा आपस्तम्बोऽपि—यस्यां मनश्चक्षुषोनिर्बन्धस्तस्यामृद्धिरिति ।

## असपिण्डलक्षणम्

असपिण्डामिति । समान एक पिण्डो यस्या सा सपिण्डा न सपिण्डा असपिण्डा तामसपिण्डाम् । सपिण्डता च सप्तपुरुषपर्यवसायिनी । तत्रैकः पिण्डदाता, त्रयः पिण्डभाजः पितृपितामहप्रपितामहाः, त्रयो लेपभाजो वृद्धप्रपितामहादयः । तथा च मत्स्यपुराणे—

लेपभाजः चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् । इति ।

अर्थस्तु—लेपभाजश्चतुर्थाद्याः प्रपितामहपिता चतुर्थस्तदाद्यः प्रतिलोमक्रमेण पिण्डदानं कृतवतः आत्मवंशजातस्य हस्तलेपं कुशेषु दत्तं भजन्त इति पित्राद्याः पिण्डभागिनः पिण्डदाने देवता । पिण्डदः सप्तमस्तेषाम् । पिण्डदाता सप्तमः सापिंड्यं साप्तपौरुषं स्यात् । सप्तपुरुषात्सापिण्डं अवाप्नोतीति ।

तथा मार्कण्डेयः—

पिता पितामहश्चैव तथैव प्रपितामहः ।
इत्येष मुनिभिः प्रोक्तः सम्बन्धः साप्तपौरुषः । इति ।

अयंभावोऽस्य वाक्यस्य—सप्तानां पुरुषाणामेकपिण्डक्रियानुप्रवेशः सापिण्ड्य-कारणम्। यथा च देवदत्तस्य स्वकीयैः पित्रादिभिः षड्भिः सह सापिण्ड्यं तथा पुत्रादिभिः षड्भिः सह सापिण्ड्यमिति।

नन्वेवं सति भ्रातृपितृव्यादिभिः सापिण्ड्यं न स्यात् परिगणितेष्वनन्त-र्भावादुच्यते उद्देश्यदेवतैक्येन लिङ्गैक्यमत्र विवक्षितम्। देवदत्तकर्तृकक्रियायां देवतात्वेनैषामनुप्रवेशस्तेषां मध्ये यस्य कस्यापि भ्रातृपितृव्यकर्मकक्रियाया-मनुप्रवेश इत्यस्ति तैः समानपिण्डता।

एवञ्च भार्याणामपि भर्तृकर्तृकपिण्डदानक्रियायाः सह भर्तृसापिण्ड्यमिति।

तदिदं निर्वाप्य सापिण्ड्यमुक्तमन्ये अवयवसापिण्ड्यं वदन्ति। तथाहि-समानएकः पिण्डो देहावयवो येषान्ते सपिण्डाः। तत्र पुत्रस्य साक्षात् पितृदेहावयव-त्वेन पित्रा सह सापिण्डता, तथा पितामहप्रपितामहादिभिरपि पितृप्रणालिकया तच्छरीरावयवान्वयः। सपिण्डतेति। अनयैव दिशा साक्षान्मातृशरीरावयवत्वेन मातामह्यादिभिरपि मातृद्वारेण तच्छरीरान्वयात्। तथा भातृस्वसृमातुलादिभि-रपि मातामहदेहावयवान्वयात्। तथा पितृव्यस्वस्रादिभिरपि पितामहदेहा-वयवान्वयात्।

एवं सह भार्यया एकशरीरारम्भकतया एवञ्च भ्रातुर्भार्याणामपि एकशरी-रावयवस्थपतिना सहैकशरीरारम्भकत्वेन। एवञ्च साक्षात्परम्परया वा एकशरीरा-वयवान्वयेन सापिण्ड्ययोजनाऽनुकर्त्तव्या। इदमुभयविधं सापिण्ड्यं यत्र नास्ति तत्र विवाहं कुर्यात्।

नचैवमत्र भ्रमितव्यम्। एवमङ्गीक्रियमाणे न क्वापि उद्वाह इति। यतोहि सापिण्ड्यं सर्वत्रापि कथञ्चिद् योजयितुं शक्यत एव। द्विधाःशरीरानुवृत्तेः दुःपरिह-रत्वात्। अमुमर्थं स्मृतिरूपोद्बलयति। बहुत्वाथायेति।

अत्रोच्यते। भवेदियं कुतोद्य शंका यदि विशेषणप्रवृत्तस्य वाक्यान्तरेण तस्य नियतविषयस्य स्थापनात्। अन्यथा सामान्यविशेषणस्य उपसंहारसङ्कोच-शास्त्रं निरङ्कुशः स्यात् निरङ्कुशंस्यैव प्रतिहता प्रवृत्तिर्भवेत्।

तदाह गौतमः—पिण्डनिवृत्तिः सप्तमे पञ्चमे वेति। तथा याज्ञवल्क्येनाप्य-भिहितम्।

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा। इति।

व्याख्यातञ्चैतट् टीकाकृता मातृसन्ताने पञ्चमादूर्ध्वं पितृसन्ताने सप्तमादूर्ध्वं सापिण्ड्यं निवर्त्तत इति। व्याख्यातश्च षट्पित्रादयः सपिण्डा सप्तमश्चात्मा। सन्तानभेदेऽपि यतः सन्तानभेदस्तमङ्गीकृत्य गणनां कुर्यात् यावत्सप्तम इति सर्वत्र योजना कर्त्तव्या। ततश्च मातृपक्षे पञ्चमात् पितृपक्षे सप्तमात् पुरुषादूर्ध्वं सपिण्ड्यनिवृत्तिर्द्रष्टव्या। तदुक्तं मत्स्यपुराणे—

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।

एकपिण्डदानक्रियानुप्रवेशिनः सपिण्डतः भार्यायाश्च सहकर्तृत्वात्सापिण्ड्यम्। एवं सर्वत्र सपिण्डचमतिवृत्यनुवृती ज्ञेये। सापिण्ड्यस्य सप्तमात् पञ्चमादूर्ध्वं षष्ठाष्टमयोर्निवृत्तत्वात्। यदि पञ्चमात्सप्तमादूर्ध्वं सापिण्ड्यनिवृत्तिर्न स्वीक्रियेत् किन्तु सप्तमे पञ्चमे वा निवृत्तिस्तदा मरीचिवचनं विरुद्धं स्यात् तथाहि—

पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया।
क्रियापरा अपि हि ते सर्वे ते शूद्रतां गताः। इति।

तथा च पैठीनसिः—कल्पद्वयमाह—पञ्चमातृतः सप्तपितृतः, पञ्चपितृतः त्रीणि मातृत इति चेति। इति द्वितीयकल्पः समानजातीयविषयः।

यद्येकजात्या बहवः पृथक्क्षेत्राः पृथग्जनाः।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु।

इति शङ्खस्मरणात्।

नन्वेवं सति पितृपक्षेपि त्रिभिः पुरुषैः सापिण्ड्यनिवृत्तेः पञ्च पितृतो वेति वचनं विरुद्धचेत। तत्र शातातपः—

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने।

मातुरसपिण्डा मातुलदुहितादिभ्योऽन्यत्र वा मातुरसपिण्डा, असगोत्रा च पितुः। असगोत्रा चकारादसपिण्डा सापिण्डचमप्युभयसाध्ये दारकर्मणि द्विजातीनां प्रशस्ता परिणेयेत्यर्थः। तथाचाह—पैठीनसिः....

असमानामेषां कन्यां वरयेत्पञ्चमातृतः। परिहरेत्सप्त पितृतः पञ्च पितृत इति वा। व्यवस्थितो विकल्पः पूर्ववत्।

तथा गौतमः—असमानप्रवरैर्विवाहः ऊर्ध्वं सप्तमात्पितृबन्धुभ्यः बीजिनश्च मातृबन्धुभ्यः पञ्चमात्। समानप्रवरत्वञ्च संख्यासंज्ञयोः साम्ये भवति।

पितृबान्धवास्तु—

पितुः पितृष्वसुः पुत्राः पितृमातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ।
मातुः पितृष्वसुः पुत्रा मातुः मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ।

इति उक्ता द्रष्टव्या। ततः पितृमातुलपितृमातृस्वसुःपुत्रादयः पितृबान्धवाः, मातृमातुलमातृपितृष्वसृमातृबान्धवाः। एवं यः पञ्चमोऽत ऊर्ध्वं विवाहः।

तथा सुमन्तुः—पितृष्वसृसुतां मातृष्वसृसुतां मातृसगोत्रां समानप्रवरां च विवाह्य चान्द्रायणं चरेदिति। तथा गान्धर्वादिविवाहेषु कन्याप्रदानाभावेन पितृगोत्रसापिण्ड्यं न निवर्त्तते। तदुक्तं मार्कण्डेयपुराणे—

ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्।
भर्तृगोत्रेण कर्त्तव्यास्तस्याः पिण्डोदकक्रियाः।
गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित्।

तथात्र मातुलसुताविवाहविवादः परास्त इत्यवगम्यते।

## मातुलसुतापरिणयविचारः

ननु मातुलसुतापरिणयननिषेधकानि बहूनि वाक्यानि श्रूयन्ते। सत्यन्तदनुग्राहकाणि श्रुतिस्मृतिसदाचारप्रतिपादकानि बहूनि दृश्यन्ते तानि वक्ष्यामः। तत्र निषेधवाक्यानि तावदुदाह्रियन्ते। सामान्यरूपाणामपि विशेषनिष्ठता सांप्रदायिकवचनादवगम्यते।

तत्र मनुः—

पितृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च।
मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत्। इति।
एतास्तिस्रस्तु भार्यार्थे नोपगच्छेत्तु बुद्धिमान्। इति।

भगिनीपदं पितृष्वस्रादेर्विशेषणम्। आप्तस्येति मातृभ्रातृविशेषणम्। अत्र चाध्याहारः सुतमित्येतस्य। आप्तस्य सन्निकृष्टस्य सपिण्डस्य गान्धर्वादिना ऊढाया-मातुर्भर्तुरित्यर्थः। पैतृष्वसेयीमित्यत्र अनिवृत्तसापिण्डा गान्धर्वादिनौढापि पितृष्वसुर्विवक्षाभिमता। तथासति दुहितृभगिनीति विशेषणमर्थवत्, ब्राह्मादिषु विवाहेषु सापिण्ड्यनिवृत्तेर्भगिनीपदस्यान्वयो न स्यात्। अनेनैव न्यायेन मातृष्वस्रीयायां व्यवस्था। तस्माद्भगिन्याप्तपदोपेतमनुवचनबलेनायं सामान्यनिषेधस्यापि विशेषविषय एवोपसंहार इति।

तथा पैठीनसिः—पितृमातृष्वसृदुहितरो मातुलसुता धर्मतस्तु ताः भगिन्यस्ता वर्जयेदिति विज्ञायते ।

तथा शातातपः—

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत् इति ।

तथा च व्यासः—

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि । इति ।

तथा शातातपः—

उद्वहेत सगोत्रां यस्तनयां मातुलस्य च ।
ऋषिभिश्चैव तुल्यां च स तु चान्द्रायणं चरेत् । इति ।

तथा च व्यासः—

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
शुल्केनैवोद्वहिष्यन्ति विप्राः पापविमोहिताः ।

शुल्कं मूल्यं मातृतो मातृपक्षे तृतीयां मातुलसुतां पितृपक्षे तृतीयां पैतृष्वसेयीमित्यर्थः । तथा पुराणे—

यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
पापा मातुलसम्बधात् प्रजा वै ते भविष्यति ।

तथा सुमन्तुरप्याह—पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुला तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि अन्यथा सङ्करकारकाणि स्युरिति । अतोऽस्मान्निषेधकदम्बात् मातुलसुतायाः पितृष्वस्रीयायाश्च परिणयनमतिनिन्द्यमित्यवसीयते ।

अत्राभिधीयते—सत्यं भवन्तीमे निषेधाः । तथापि ब्राह्मादिविवाहोढायास्तु पित्रादिसापिण्ड्यनिवृत्तेः तत्पुत्रस्य मातुलसुतापरिणेयेति गम्यते । आसुरादिविवाहेन पित्रादिभिरभिनिर्वृत्तसपिण्डभावायाः पुत्रस्य मातुलसुतापरिणेतुः मातुश्च सपिण्डेति तावदविवाह्या । तथा एवंविधायाः पितृष्वसुर्दुहितृपरिणेतुः पितुश्च सपिण्डसगोत्रा इति सापि न परिणेया । तथा मातृष्वस्रेय्यपि ।

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ।

इतिमनुस्मरणात् ।

अयमाशयः—या मातृतः पितृतो वा सपिण्डा सगोत्रा वा सैव त्याज्या नान्येति । अतएव शातातपो मातुलसुतापरिणयनं निषेधति ।

मातुलस्य सुतामुद्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् । इति ।

नचात्र मातुलसुताग्रहणं न कर्त्तव्यं सगोत्रामित्यनेनैव सपिण्डमातृदुहितृ-निषेधसिद्धत्वादथ यदि पदद्वयेनोभयविधमातुलस्य सुता निषेधोऽभिमतः तर्हि मातुल सुतग्रहणमेवास्तु, न मातृसगोत्राग्रहणं कर्त्तव्यमिति चेन् मैवम्; मन्वादि-भिरुभयनिषेधात् । अतो मन्वादिवचनैर्या मातृसपिण्डा मातुलसुता या पैतृष्वसेयी पितृसपिण्डा सैवोद्वाहकर्मणि परित्याज्या नान्येति सिद्धम् ।

अतएव चतुर्विंशतिमते—

तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरायमः । इति ।

उभयोर्मातापित्रोः ।

ननु यदि मातुरसपिण्डतया मातुलसुता परिणीयते तर्हि तथा-विधमातृष्वसृदुहिता किमिति न परिणीयते सत्यम्, परिणेयैव न शास्त्रतो निषेधं पश्यामः किन्तु लोकविद्वेषमात्रेणापरिणेयत्वमस्वर्ग्यं लोकविद्विष्टमित्युक्ते-स्तस्मात्स्मृतित एवावगम्यते परिणेया मातुलसुता पैतृष्वसेयीति सिद्धम् । तथा-मुमेवार्थं श्रुतिरपि दर्शयति । तृतीये पुरुषे संगच्छावहे चतुर्थे संगच्छावह इति । संगच्छावहे विवहामह इत्यर्थः ।

नन्वयमर्थवादः, सच श्रुत्यूहनपर इति न स्वार्थे प्रमाणभावं भजते । उच्यते, यद्यपि भवत्वयमर्थवादः स्वार्थे नच प्रमाणभावं भजत इत्यादि तथापि तृतीये संगच्छावह इति अनुवादान्यथानुपपत्या विधिं कल्पयति । तं विना विधि-त्वायोगात् , तयोः परस्परमविनाभावाच्च । तथाह गुरुः—

अनुष्ठितन्तु यद्देवैर्मुनिभिर्यदनुष्ठितम् ।
नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत् । इति ।

तस्माच्छ्रुतिस्मृतिभ्यामनुष्ठेयत्वं मातुलसम्बन्धस्य मातुलसुतापरिणयने श्रुतिस्मृतिसदाचाराः प्रमाणभावं भजन्ते । तत्र मन्त्रस्तावत—

आयाहीन्द्र पथिभिरीडितेभिर्यज्ञमिमन्नो भागधेयं जुषस्व ।
तृप्तां जुहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव । इति ।

अयमर्थः—हे इन्द्र पथिभिर्मार्गैः ईळितेभिः प्रशस्तैः न इत्यस्माकं इमं यज्ञमायाहि आगच्छ आगत्य अस्माभिर्दीयमानं भागधेयं भागं जुषस्वासेवयेति। एते यजमानाः तृप्तां आज्यादिना संस्कृतां वापामवदानाख्यां त्वामुद्दिश्य जहुः त्यागं कृतवन्तः। अत्र दृष्टान्तद्वयम्। यथा मातुलस्य योषा दुहिता दौहित्रस्य भागः भजनीया परिणेतुं योग्या यथा च पैतृष्वसेयी पौत्रस्य भागः परिणीयतार्हेति। तस्माद्दौहित्रस्य मातुलसुतापरिणयनं, पौत्रस्य च पैतृष्वस्रेयी पितुर्भगिनीसुतापरिणयनं शास्त्रबोधितत्वात् अतीव युक्ततममिति।

तथापि शिष्टाचारोऽपि प्रमाणम्। सच दक्षिणात्यानामविगीतः प्रत्यक्षः सर्वेषाम्।

अन्ये तु आसुरादिविवाहेष्वपि देशविशेषेण मातुलसुताविवाहो धर्म्म इति मन्यन्ते।

तत्र बोधायनः—पञ्चधा विप्रतिपत्तिः दक्षिणतः—अनुपनीतेन भार्यया च सह भोजनं, पर्युषितभोजनं, मातुलसुतापरिणयनं, पितृष्वसृदुहितृपरिणयनञ्चेति। तथोत्तरतः ऊर्णाविक्रयः, आयुधीयकम्, सिन्धुयानं, उभयतोऽपि दद्भिर्व्यवहारः, इत्यादि इतरदितरत्र कुर्वन् दुष्यति देशप्रामाण्यात्। तथा च देवलः।

यस्मिन् देशे य आचारो न्यायदृष्टस्तु कल्पितः।
स तस्मिन्नेव कर्त्तव्यो देशाचारः स्मृतो भृगो। इति।

ननु शिष्टाचारप्रामाण्ये स्वदुहितृविवाहोऽपि प्रसज्यते, ब्रह्मणानुष्ठितत्वात्। 'प्रजापतिः स्वां दुहितरमपध्यायन्निति' श्रुतेः। तत्र 'न देवचरितं चरेदि'ति उक्तेः। ततश्च श्रुतिस्मृतिसदाचारेभ्यो मातुलसुता परिणेयेति सिद्धम्।

अरोगिणीं दीर्घरोगां। यवीयसीं जन्मतः प्रमाणतश्च। भ्रातृमतीं। पुत्रिकाकरणभयात्। तदाह मनुः—

यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता।
नोपगच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया। इति।

अनेन वरसम्प्रतिपत्तिं विनापि पुत्रिकाकरणमस्तीति सूचितम्।

## पुत्रिकाकरणम्

पुत्रिकाकरणप्रकारो मनुना दर्शितः ।

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्याः तन्मम स्यात् स्वधाकरम् । इति ।

तथा वसिष्ठः—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति । इति ।

अथवा इयमेव पुत्र इति पुत्रिकाकरणम् । तथा च श्रुतिः । शासद्वह्निर्दुहितुर्नप्त्यङ्गादिति ।

तथा च यास्कः—प्रशास्ति वोऽस्ति वोढा सन्तानकर्मणे दुहितुःपुत्राभाव इति । तथाह लौगाक्षिः—

मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः ।

एवमासुरादिविवाहेष्वनिवृत्तिः सापिण्डचस्य द्रष्टव्या तत्रापि प्रदानाभावात् । तदाह मार्कण्डेय;—ब्राह्मादिष्विति । मातुःपितृगोत्रेणेत्यर्थः । एवञ्च पुत्रिकाकरणादौ मातुःस्वस्रादिभिः सापिण्डचसद्भावात्सूक्तम् अपिण्डा च या मातुरिति ।

ननु पुत्रो हि मातृसपिण्डः या हि मातुः सपिण्डा सा पुत्रस्यापि कथमतः पृथगुक्तिः । सत्यं, यदा तु पुत्रिकासुतस्यैव मातृमातामहाभ्यां परित्यागः तदा तत्सापिण्ड्यनिवृत्या तत्सपिण्डाया विवाहप्राप्तौ तन्माभूदिति मातृग्रहणं कृतम् । तत्र देवदत्तपुत्रादेस्त्यागेनैव पितृगोत्रनिवृत्या तत्सगोत्रस्यापि विवाहप्राप्तौ तन्मा भूदिति पितृग्रहणं तत्रेति । असमानार्षगोत्रजां आर्षं च गोत्रं च आर्षगोत्रेऽसमाने आर्षगोत्रे तज्जातश्च वंशपरम्पराप्रसिद्धं गोत्रं आर्षं ऋषेरिदमार्षं प्रवरः । गोत्रप्रवर्त्तकस्य मुनेर्व्यावर्त्तको मुनिगणः । तथाहि—गोत्रप्रवर्त्तकस्य भरद्वाजस्याङ्गिरो बृहस्पतिर्व्यावर्त्तकौ अतश्चाङ्गिरसोबार्हस्पत्यभारद्वाजगोत्रसमेति प्रयुञ्जते । अनयैव दिशाऽन्यत्राप्यूह्यम् ।

## सगोत्रविवाहनिषेधः

ततश्चायं निश्चयः यस्य वरस्य यया वध्वा सह न गोत्रैक्यं नापि प्रवरैक्यं तत्रोद्वाह इति । क्वचिद् गोत्रभेदेऽपि प्रवरैक्यं दृश्यते । यथा याज्ञवल्क्यवाधूलमौन-

मौकानां भिन्नगोत्राणां भार्गववीतहव्यसावतसेति अभिन्नाः प्रवराः। क्वचित् प्रवरभेदेऽपि गोत्रैक्यं दृश्यते। यथा आङ्गिरसांवरीषयौवनाश्वेत्यत्राङ्गिरसमांन्धातृप्रवरभेदेपि गोत्रैक्यम्। अतः गोत्रैक्ये प्रवरभेदेऽपि प्रवरैक्ये गोत्रभेदेऽपि न विवाह इति असमानार्षगोत्रजामित्युक्तम्।

गोत्रप्रवर्त्तकाश्चाष्टा मुनयः प्राधान्येन प्रतीयन्ते। ते चागस्त्याष्टमा सप्तर्षय एव। ते च—

कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः।
जमदग्निर्वशिष्ठश्च सप्तैते ऋषयः स्मृताः।

अगस्त्याष्टमानां सप्तर्षीणां यदपत्यं तद् गोत्रमित्युच्यते।

तदाह स्मृत्यन्तरे—

जमदग्निर्भरद्वाजविश्वामित्रोऽथ गौतमः।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः। इति।
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते। इति।

एतेषां गोत्राणामवान्तप्रकाराः सहस्रशो गणनार्हाः। तेषां गणस्तु एकोनपञ्चाशत्। तथा च बोधायनः—

गोत्राणां च सहस्राणि अयुतान्यर्बुदानि च।
ऊनपञ्चाशदेतेषां प्रवरा ऋषिदर्शनात्।

नच गोत्रप्रवरयोः मिलितयोः पर्युदासनिमित्तता। यतो हि प्रत्येकमभिधाय ते दोषाः।

तदुक्तं शातातपेन—

परिणीय सगोत्रान्तु समानप्रवरान्तथा।
कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रं विशोधनम्। इति।

आपस्तम्बोऽपि—

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च।
तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते। इति।

असौ हि गोत्रप्रवरनिर्णयो यद्यपि बौधायनकात्यायनविश्वमित्रगर्गप्रणीतेषु ग्रन्थेषु सामान्यतश्च विशेषतश्च कृतस्तथाप्यत्र निष्कर्षः क्रियते।

याज्ञवल्क्यः—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजामिति ।

बौधायनः—

एक एव ऋषिर्यत्र प्रवरेष्वनुवर्त्तते ।
तावत्समानगोत्रत्वं ऋते भृग्वङ्गिरोगणात् । इति ।

चन्द्रिकायाः—

परिणीय सगोत्रान्तु समानप्रवरां तथा ।
कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रं विशोधनम् । इति ॥

आपस्तम्बः—

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य सन्तानं ब्राह्मण्यादेव हीयते । इति ॥

अथ प्रवराः—

सुधानिधौ—

एते ह्यष्टादशगणा मुनिभिः परिकीर्त्तिताः ।
जामदग्न्यो वीतहव्यो तथा गार्त्समदः स्मृता ।
वाजन्याश्चैव वैजाख्या गौतमास्तदनन्तरम् ।
भरद्वाजकश्यपहारीताः कुत्साश्च कण्वसंज्ञकाः ।
विरूपामुद्गला विष्णुवृद्धोवैन्य एव च ।
विश्वामित्रः कश्यपश्च वशिष्ठश्चाप्यगस्तयः ।
एक एव ऋषिर्यस्य प्रवेरष्वनुवर्तते ।
तावत्समानगोत्रत्वमन्यत्राङ्गिरसो भृगोः ।
जामदग्न्या वीतहव्या तथा गार्त्समदा अपि ।
वाजन्याश्च वैजाख्या भृगोःपञ्चगणाः स्मृताः ।
गौतमश्च भरद्वाजः कश्यपो हरितस्तथा ।
कण्वविरपामौद्गस्या विष्णुवृद्धोवमोंगिरा ।
अत्रिजागाविकाश्चैव काश्यपाश्च तथैव च ।
वशिष्ठागस्तयश्चैव अष्टादशगणाःस्मृता ।

भृगवो जामदग्न्याश्च वत्साः श्रीवत्ससंज्ञकाः ।
भार्गवाश्च्यवनास्तद्वदाप्नवानास्तथोर्वजा ।
सावर्णयश्च जीवन्ति सञ्ज्ञायावाजयस्तथा । इति ॥
ऐतिकायननामान्ये वैरोहिंसास्ततः परम् ।
अवटोमण्डलश्चैव ततःप्राचीनयोग्यजाः ।
आर्ष्टषेणास्तथारूपा एतेष्टा……यर्जाः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।
माण्डव्यो वैरिसंज्ञैश्चीरैतरादैस्तथैव च ।
…जामदग्न्याद्या न विवाह्या प्रकीर्तिता ।

इति प्रथमो भृगुगणः ।

अथ द्वितीयः—

भृगवो वीतहव्याश्च वावाधूलसञ्ज्ञकाः ।
भौमाश्च मौवासादेवेदश्चेत्येव संसदा ।
मिथः विवाहं नार्हन्ति समानप्रवरा यतः ।
एते रजतवाहैश्च न विवाह्या कदाचन । इति ॥

द्वितीयो भृगुगणः ।

भृगवो गृत्समदजा शौनकाश्च त्रयोप्यमी ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।

तृतीयो भृगुगणः ।

भृगवश्चैव वाध्मश्च तथा मित्रयुषास्त्रयः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।
एते रजतवाहैश्च न विवाह्या कदाचन । इति ॥

चतुर्थो भृगुगणः ।

भृगवो वैन्यसंज्ञाश्च पार्थिवाश्च त्रयोप्यमी ।
मिथो विवाहं र्नाहन्ति समानप्रवरा यतः ।

पञ्चमो भृगुगणः ।

मिथो विवाह्या पञ्चगणास्तेषामाद्यं भृगु विना ।

इति भृगुगणसंग्रहः ।

अथाङ्गिरसाः—

आङ्गिरसा अवास्या आत्तिथ्या औसिजस्तथा ।
कांक्षीवता वामदेवा बृहदुक्थाश्च सप्तमे ।
एते गौतमसञ्ज्ञास्तु: भिन्नप्रवरजा अपि ।
समानप्रवरत्वे च व्यवहारार्थतां गताः ।
मिथो विवाहं र्नाहन्ति समानप्रवरा यतः ।
आङ्गिरसान्तु भृगोः परेषामवामदेवानां मिथो विवाहः ।

इति प्रथम आङ्गिरसो गणः ।

आङ्गिरसबार्हस्पत्या भारद्वाजास्तथैव च ।
कुकवश्चाग्निवेश्याश्च तथोर्जायतसञ्ज्ञकाः ।
सर्वस्य वास्तवं शस्ता शृङ्गाश्च कतयस्तथा ।
ततः शैशिरयो क्षीरा अजावासितसञ्ज्ञका ।
तथैव मानव च सह स्वतन्त्राकपयोऽपि च ।
गार्ग्याश्च कपयः सैन्या एते एकोनविंशतिः ।
भरद्वाजाभिधानाः स्युस्तत्सम्बन्धित्वसम्भवात् ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।
एतेषान्तु विवाहो यन्भावहार्यभिधानकैः ।
अरुक्षेयैश्च कपिभिः विवाहस्त्रिभिरिष्यते ।
सरस्वतिततश्चैव दुरालयसंञ्जलीभूयः ।
सिद्द्राणकैश्चैव जाभांद्यै इति चाष्टध्मादयः ।
कपिः पुत्राः समादिष्टास्तेषां कपिवदिष्यते ।
नातःपरेषां हरितादधस्तान्मिथो विवाहस्तु कुलस्य चाहुः ।

इति द्वितीयोऽङ्गिरसो गणः ।

अंगिरसाश्च हारीताः आम्वरीषास्ततः परम् ।
यौवनाश्वाश्च मांधात्राः कौत्साःपैङ्गास्त्वनन्तरम् ।
शङ्खादर्भाश्वमताध्मा एते च दशगोत्रजाः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।
प्रज्ञाजमीढात्तु सिनाधरेखामङ्गिरसानां न मिथो विवाहः ।

इति तृतीय आङ्गिरसो गणः ।

अंगिरसा आजमीढा काण्वाश्चैव त्रयोऽप्यमी ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।

इति चतुर्थ आंगिरसो गणः ।

आंगिरसा विरूपाश्च तथा शर्यातया अपि ।
एकदश्वा अश्वदंष्ट्रा एते पञ्च सगोत्रजाः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।

इति पञ्चम आंगिरसोगणः ।

अंगिराश्च भार्गवश्च मौद्गल्यास्तक्षवस्तथा ।
चत्वार एते विख्याता भृगुगोत्रप्रर्वत्तकाः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।

इति षष्ठ आंगिरसो गणः ।

आंगिरसाविष्णुवृद्धाश्च पौरुकुत्सास्तथैव च ।
वारासदास्यां जटमाणाः भद्गणामद्गणास्तथा ।
बादरायणनामानस्तथाभर्मिति सञ्ज्ञकाः ।
तथोदगवयख्याता पृथग्गोत्रप्रर्वत्तकाः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।

इति सप्तम आंगिरसो गणः ।

काल्यः शम्भूशमीवत्सोच्यवनार्यस्तथैव च ।
वश्यासायंनिकालंवायनोतश्च तथाप्यमी ।
विष्णुवृद्धसमुद्भूता सप्तगोत्रप्रर्वतकाः ।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः ।
आजमीढा विश्वरूपाश्च मुद्गलाविष्णुवृद्धजाः ।
एते चतुर्गणाः प्रोक्ता विवाह्याः स्युः परस्परम् ।

मिथोऽपि कौत्सापरतश्चतुर्णां विवाहमिच्छन्ति कर्पदशिष्याः ।

अतो विवाह्या अष्टगुणा आद्यमांगिरसं विना ।

इत्यंगिरसाष्टकगणसंग्रहः ।

अथात्रिगणाः—

अत्रिजास्त्वथ वक्ष्यन्ते आत्रेयार्चानानसा।
तथा वश्यावाश्चसंज्ञश्च गविष्ठिरसमुद्गलाः।
धनञ्जया अतिथयोर्वारिथ्यासुमङ्गलाः।
बीजावापिन इत्येते नवैवात्रिगणा स्मृताः।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः।

इत्यत्रिगणः।

विश्वामित्रदेवराताचिकितामनवस्तथा।
तन्तवश्चाप्यौलकयो वालक्याख्याः ततः स्मृताः।
यान्यवल्क्यास्तलोलूकास्तथैव बृहदग्नयः।
हतशालविभृशशालावत्समुद्गलाः।
शालंकायननामानस्तथा कालनवा अपि।
अराश्च भ्रमताश्चैव कामकायनसंज्ञकाः।
देवश्रवसगोत्राश्च देदैवतरसा अपि।
आज्यमाधुः छन्दसाश्चाधानं यज्ञास्तथाष्टकाः।
लौहितपुराणपरिधामाश्चाक्रवणीयनाः।
सूतकाकोतशीकाश्च कताश्चापि ससूतयः (पतसास्तथा)।
धूम्राश्च जवरास्तद्वत् पापघ्ना एकहव्यजाः।
यतयः क्षीरसञ्ज्ञाश्च वाप्यग्निदेव्याभिधानकाः।
तत्रौवोर्मभिरिणश्चैव संसिक्यश्चांगकायणाः।
तथा वाराकिताश्चापि कुरवश्चेति कीर्तिताः।
चतुश्चत्वारिंशदिमे विश्वामित्राश्मरथादयः। इति।।
मिथो विवाहन्नार्हन्ति समानप्रवरा यतः।

इति विश्वामित्रगणाः।

कश्यपाश्चैव अद्रवत्सारा नैध्रुवारेभसञ्ज्ञकाः।
रेभशाण्डिलशाण्डिल्यौ देवलाअसितास्तथा।
नव चैते समासेन काश्यपा इति कीर्त्तिताः।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः।

इति काश्यपगणः।

वशिष्ठेन्द्रप्रमदा भरद्वसव एव च।
पराशराःशक्त्यवश्च ह्युपमन्यव एव च।
ततश्च मैत्रावरुणः कौण्डिन्यापूतिमाषजाः।
तथा संकृतयो गौरी वीताश्चैकादशः स्मृताः।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः।

एवमष्टादशगणा प्रतिषिद्धवर्जं मिथो विवार्हाहाः।

संकृतयोगौरी वीताश्चैकादशस्मृताः।
मिथो विवाहं नार्हन्ति समानप्रवरा यतः।

एवमेकादशगणाः प्रतिषिद्धवर्जं मिथो विवाहार्हाः।

एवं सामान्यतः प्राप्तौ विवाहस्त्वभिधीयते।
वैश्वामित्रा जामदग्न्या विवाह्या स्युः परस्परम्।
पूतिमाषान् शैशिरांश्च वर्जयित्वेति सम्मतम्।
पूतिमाषाः संकृतयो विवाहार्हा न संमताः।
कश्यपाश्च वशिष्ठाश्च वर्जयित्वा ततोऽन्यतः।
कश्यपाश्च वशिष्ठाश्च विवाह्या स्युः (सर्वत्रेति) च सम्मता
भारद्वाजा जामदग्न्यान् वर्जयित्वा ततोऽन्यतः।
युंगाः कता शैषिराश्च विवाहार्हाः समन्ततः।
विश्वामित्रान् भरद्वाजान् वर्जयित्वेति ते स्मृताः।
धनञ्जयानां सर्वत्र विवाहः प्रोच्यते बुधैः।
विश्वामित्रस्तथाचात्रीन् वर्जयित्वा ततोऽन्यतः।
प्रनष्टयोराकुल्यग्नीतयोराजवाचयः १ ।
वैराश्च भैरवाश्चैव वारयंस्तदनन्तरम्।
तथा च मुखः प्रोक्ता सैरन्ध्रयो राजसेवकाः।
बाहुलिङ्गाभिनामानस्तथैव शरदम्बकाः।
एते त्रयोदशप्रार्तवशिष्ठा निशि कश्यपा।
गायत्रीयोनिसम्बन्धावङ्गीकृत्य प्रवर्त्तते।
अहर्वशिष्टतां रात्रौ कश्यपत्वमपि स्वयम्।
तेषां गोत्रद्वयमुक्तं वशिष्टं कश्यपं तथा।
सर्वत्रापि विवाहःस्यादिति वेदविदो विदुः। इति।

स्मृत्यर्थसारे—

जमदग्निभरद्वाजविश्वामित्रात्रिगौतमाः ।
वशिष्ठाः कश्यपा वत्स्या मुनयो गोत्रकारिणः ।
एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते ।
म्रियमाणतया वापि सत्तया वानुवर्त्तनम् ।
एकस्य दृश्यते यत्र गोत्रं तस्य च कथ्यते ।
समानमुनिभूयस्त्वमेकप्रवरतामपि ।
समानप्रवरत्वञ्च द्वेधा बोधायनोऽब्रवीत् ।
मुनिप्रणीतप्रवरैरूनपञ्चशतावयम् ।
अनन्तान्यपि गोत्राणि वर्गीकृत्याभिदध्महे ।
जामदग्न्या वत्सविदार्ष्टिषेणाः परस्परम् ।
नान्वयुः प्रवरैक्येन सगोत्रत्वेन तावुभौ ।
विश्वामित्रादयोन्येषु[१] शुनका प्रवरैक्यतः ।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ।
उक्ता सप्त भृगोर्वंशा वक्ष्यतेंगिरसो गणाः ।
गौतमाश्च सहागस्त्याशरद्वन्तस्तथापरे ।
कोमण्डा दीर्घतमसस्ततः कारेणुपालयः ।
वामदेवा उशनसो गोत्रैक्यान्नान्वयुर्मिथः ।
भरद्वाजाश्च कपयो गर्गा रौक्षायणा इति ।
चत्वारोऽपि भरद्वाजा गोत्रैक्यानान्वयुर्मिथः ।
केवलाङ्गिरसश्चैके विष्णुवृद्धाःसकण्वजाः ।
रथीतराश्च हरीता मुद्गला प्रवरैक्यतः ।
स्वं स्वं हित्वा गणं सर्वे विवाहेयुः परावरैः ।
षोडशाङ्गिरसास्त्रेधा प्रोक्ता संकृतयस्तथा ।
संकृतीनां द्विवंश्यत्वात् वशिष्ठैश्च चतुर्विधः ।
स्ववर्गीयैश्च गोत्रत्वात्प्रवरैक्याच्च नान्वयुः ।
चत्वारोऽत्रय आद्यात्रि प्रादुर्भूतगविष्ठिराः ।
मुद्गलाश्चेति गोत्रैक्यात्प्रवरैक्याच्च नान्वयुः ।
त्रयश्च कश्यपगणाः निध्रुवारेभशाण्डिलाः ।
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ।

---

१. यास्का मित्रवयो वैन्याः इति पाठः ।

वशिष्ठैः काश्यपैर्नित्यं लौगाक्षीणामनन्वयः ।
अहर्वशिष्ठतोक्तिस्तु प्रयाजाप्त्यादिगोचराः ।
वशिष्ठाकुण्डिनाश्चैवमुपमन्युपराशराः ।
वशिष्ठा इति चत्वारो गोत्रैक्यानान्वयुर्मिथः ।
कुशिका रोहितगणा रौक्षकाकामकायनाः ।
कता धनञ्जया आजा अघमर्षणपूरणाः ।
इन्द्रकौशिकजाश्चेति विश्वामित्रगणा दश ।
नोद्वहेयुः सगोत्रत्वात् क्वचिच्च प्रवरैक्यतः ।
अगस्तयः शौमवाहाः सोमवाहा इति त्रयः ।
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ।
वर्गा एकोनपञ्चाशत् प्रसिद्धाः मुनिभिः स्मृताः ।
अप्रसिद्धा परे वंश्या अन्तर्भूता इहैव ते ।
विश्वामित्रोत्रिगोत्रेण नोद्वहेयुर्धनञ्जयाः ।
अत्रयस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा ।
तथैव जातुकर्ण्याश्च वशिष्ठैरत्रिभिः सह ।

भारद्वाजेन शुङ्गेन विश्वामित्रस्य शैशिरे क्षेत्रे जातो द्विगोत्रर्षिः प्रोच्यते । शौङ्गशैशिरिः ।

विश्वामित्रभरद्वाजैस्तज्जानान्तेन नान्वयः ।
कपिलानां भरद्वाजैः विश्वामित्रैश्च नान्वयः ।
गुरोः सगोत्रप्रवरा नोद्वाह्याः क्षत्रवैश्ययोः ।
स्वस्वगोत्रानभिज्ञैश्च विप्रैराचार्यगोत्रजाः ।
गायत्री यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।
तद्गोत्रे तत्कुले वापि विवाह नापि कारयेत् ।
स्वगोत्राज्ञानविषयैः विप्रैराचार्यगोत्रजाः ।
दानादिनान्यगोत्रास्युरज्ञातागुरुगोत्रिणः ।
समानप्रवरोद्वाहनिषेधःक्षत्रवैश्ययोः ।
प्रवरा न नवेत्यस्मात् प्रवराच्चान्यगोत्रजाः ।
इत्थं सगोत्रसम्बन्धविवाहविषये स्थिता ।
यदि कश्चिद् ज्ञानतः तां कन्यां मूर्खोऽधिगच्छति ।

गुरुतल्पव्रताच्छुध्येद् गर्भस्तज्जोन्त्यतां व्रजेत ।
भोगतस्तां परित्यज्य पालयेज्जननीमिव । इति ।

## अथ सुखप्रतिपत्तये गोत्रप्रवरनिर्णयः क्रियते संक्षेपेण

तत्र गोत्रमुख्याः सप्त भृग्वंगिराकश्यपात्रिविश्वामित्रवशिष्ठागस्त्याख्याः । तद्वंश्याः अनेके । तत्र भृगोरष्टौ गणाः—जामदग्न्य वत्स जामदग्न्यार्ष्टिषेणकाविदयस्तु स्येतामित्रयुक्तशौनका इति । अंगिरसस्तु नव मुख्याः । गौतमभरद्वाजपृषदश्वमुद्गलविष्णुवृद्धहारीतकण्वसंकृतिकपिरूपाः । काश्यपास्तु चत्वारः । नैध्रु वारेभशाण्डिलकश्यपा इति मुख्याः । अत्रिगणाश्चत्वारो मुख्याः । अत्रेयगार्ष्टिरब्राह्यतकसुमङ्गलाख्याः । विश्वामित्रस्याष्टौ गणाः । विश्वामित्रामतधनञ्जयाऽजयरोहिणकताघमर्षणरेक्षुवेणुशालकायनमुख्याः वशिष्टस्य चत्वारो मुख्या गणाः । अगस्त्यश्चैक एव गणः ।

तत्रैतेषु क्रमेण विवाह्यत्वाविवाह्यत्वनिश्चयाय प्रवरनिर्णयः क्रियते—

जामदग्न्यवत्सश्रीवत्सवैशम्पायनवैरोहित्यमाण्डव्यमांण्डुकसाकेयमार्कण्डेयपाणिनि वाल्मीकिप्रभृतीनां पञ्चप्रवराः । भार्गव च्यवन और्व आप्नवान् जामदग्न्या इति । शुद्धजामदग्न्यादीनां त्रिप्रवराः । भार्गवच्यावन आप्नवानिति । ऋष्टिषेणादीनां भार्गवच्यावन आप्नवानार्ष्टिषेण इति पञ्चप्रवराः । विदवटप्राचीनयोग्यादीनां भार्गवच्यावन आप्नवान और्वविदा इति पञ्च प्रवराः । यस्तु बौधालि । मौंगः । मौन । शार्कर । सार्ष्ठि । सावर्णि सालंकायन । जैमिनि । त्यैवंत्यायनि । जाबालि । प्रभृतयः त्रिःप्रवराः । भार्गववैन्यपार्थसावेधत इति । शोतादीय । भार्गव । वैन्य । पार्थ इति त्रिप्रवराः । अत्र युजादत्रत्वाव्यश्च इत्येकप्रवराः, शुनकादय गार्त्समदादय इत्येकप्रवराः । केषाञ्चिन्मते भार्गवसौमहोत्रगार्त्समदा इति । विप्रवदनेति । तत्र निर्णयः प्रथमचतुर्दश अवरपुरुषसहिताः पौनरुक्त्यम्परिहृत्या-जामदग्न्यवत्सश्रीवत्सऐतिकायन-वैरोहित्य - माण्डव्य - माण्डुक-माण्डुकेय-मार्कण्डेय-पाणिनि-बाल्मीकि-भार्गव - च्यावन-आप्नवान - और्व - जामदग्न्यार्ष्टिषेण-आनूप - विदवट-प्राचीनयोग्य-वैदादयःपरस्परं न विवाह्याः । विश्वामित्रदत्तकपुत्राणां देवरातानां मातामहैः शुद्धजामदग्न्यैर्न विवाहः । पञ्चमवर्गस्य यस्तु वंश्यानां भृगुगणस्थानां सप्रवराणां मिथो न विवाह इति ।

ततश्चायं शास्त्रार्थः—भार्गवाष्टगणेषु प्रथमचत्वारः प्रवरपुरुषसहिताः परस्परमविवाह्याः । उत्तरे चत्वारः स्वीयस्वीयप्रवरपुरुषसंहिताः स्वस्वगणपरि-

हारेण परस्परं विवाह्याः। पूर्वचतुर्गणैरपि अष्टगणस्थाः सर्वेऽपि भार्गवगोत्रीयैः सह अविवाह्याः, सर्वत्र भार्गवानुवृत्तेः सत्त्वात्।

तदुक्तम्—तेष्वप्यादौ भृगोर्वंश्या विवाहे नान्वयुर्मिथः।
स्वगणस्थैर्यथान्ये तु चत्वारो यैस्तु मुख्यकाः।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः।

तथा परिशिष्टेऽपि—
भृगूणां न विवाहोऽस्ति चतुर्णामादितो मिथः।
श्येनादयस्त्रयस्तेषां विवाहो मिथ इष्यते।

यस्तु तेषां मिथः दृष्टो विवाह सर्वैरन्यैर्जामदग्न्यादिभिश्चेति।
इति भार्गवगणः।

अथांगिरसगणः कथ्यते—तत्रांगिरसगौतमाधिकार उच्यते। तत्र गौतमादयो नव। वशिष्ठदत्तपुत्रा संकृतयो द्विगोत्रा। तत्र गौतमस्याष्टौ गणा मुख्याः। गौतमौतथ्यराहूगणसोमराजवामदेवबृहदुक्थकक्षीवान्शरद्वतस इति। तत्र-गौतमादयः। अङ्गिरस आयास्य गौतमा इति त्रिप्रवरा इति। शरद्वतादयः अङ्गिरस औतथ्य गौतमेति त्रिप्रवराः। राहूगणमण्डलादयः आंगिरसराहूगणगौतमा इति त्रिप्रवराः। सोमराजकरेगुलौगाक्षादयः आंगिरससोमराजगौतमा इति त्रिप्रवराः। वामदेवादयः आंगिरस वामदेव्य गौतमा इति त्रिप्रवराः। बृहदुक्थोसावादिमः आंगिरसबृहदुक्थ गौतमा इति त्रिप्रवराः। कक्षीवदादय. आंगिरस औतथ्य गौतम औदबिन्दु कक्षीवन्त इति पञ्चप्रवराः। दीर्घतमसादयः आंगिरसऔचथ्य दीर्घतमसादयः, आंगिरसऔतथ्यदीर्घतमा इति त्रिप्रवरा इति।

आंगिरसगौतमाष्टगणेषु प्रवरपुरुषेषु शास्त्रार्थः। पौनरुक्त्यपरिहृत्यैतन्नामका गौतमाङ्गिरस आयास्यगौतम औचथ्यशरद्वत उचथ्यराहुगण कौमण्डल्य राहुगण्य सोमराज। करेगुपाल। लौगाक्षिवामदेव। सोमराज बृहदुक्थकौशनस-बार्हदुक्थ प्रभृतयः परस्परमविवाह्याः। यतो हि अंगिरसगौतमवंश्याः द्वित्रिऋष्यनुवृत्या समानप्रवरगोत्रा इति।

षण्णां च गौतमादीनां विवाहो नेष्यते मिथः।

दीर्घतमाऔतथ्यकक्षीवन्तस्त्वेकगोत्रजा इति परिशिष्टेऽभिधानात्।
इत्यांगिरसगौतमाधिकारः।

अथांगिरसभारद्वाजाधिकारोऽभिधीयते—भारद्वाजाआग्निवेश्या गर्गा रौक्षायणा इति चत्वारो गणाः। तत्र भारद्वाजः कुशादयः। आंगिरसबार्हस्पत्य-भारद्वाजा इति त्रिप्रवराः। आग्निवेश्य और्जायन सर्वस्तम्बस्तम्भशब्दश्शृङ्गादीनां उक्तत्रिप्रवराः। अत्र एषां भरद्वाजप्रवरैक्येऽपि अवान्तरभेदे हेतुरिति तत्त्वम्।

अग्निवेश्यगणस्थानीया शौंगशैशिर्यादयो विप्रवचनाः उक्तत्रिप्रवरोपेत-कात्यअक्षिता पञ्चप्रवरा रूक्षरौक्षायणादयः, उक्तत्रिप्रवरोपेतवान्दवनमातवच स इति पञ्चप्रवराः। गर्गकपिलकपिऋक्षीर्यादयः उक्तत्र्युपेतसैन्यगार्ग्या पञ्चप्रवराः। यद्वा आंगिरससैन्यगार्ग्य इति त्रिप्रवराः।

अयमत्र शास्त्रार्थः। भरद्वाजचतुर्गणस्था ऋषयो भरद्वाज कुत्स आंगिरसबार्हस्पत्य भरद्वाज अग्निवेश्यऔजायणसर्वस्तम्बस्तम्भशब्दशुङ्ग-शौङ्गशैशिररूक्षरौक्षायणवान्दवनामातवचसगर्गकपिलकक्षीश्येन्यगार्ग्यादयः भर-द्वाजवंश्याः। स्वतन्त्र्याश्चान्ये कपयः पञ्चप्रवराः। तथाङ्गिरसवंश्याः स्वतन्त्राश्चान्ये कपयःत्रिप्रवराः। त एते त्र प्रवराः निर्णीताः, परस्परमविवाह्याः। अङ्गिरसबार्हस्पत्य भारद्वाजेति ऋषित्रयानुवृत्तेः सत्त्वात्। अत्र भरद्वाजकुले अग्नि-वेश्यस्तोमीयश्शृङ्गस्यौरसोविश्वामित्रवंश्यकतस्तोमीयशिशिरक्षेत्रजा यमेताभ्यां जातो विप्रवाचनो शौङ्गाशैशिरितद्गौत्रियाणां विश्वामित्रभरद्वाजैः न विवाह इति। कपिलाः पुनःगर्गवंश्या विश्वामित्रमातामहपक्षिणः सर्वैर्भरद्वाजैर्मुख्यविश्वा-मित्रैर्न विवाहमृच्छन्ति। कपिलानां भरद्वाजैः विश्वामित्रेण नान्वय इत्युक्तेः। इत्यांगिरसभारद्वाजाधिकारः परिपूर्णः।

अथाङ्गिरसपृषदश्वाधिकारोभिधीयते—पृषदश्वअङ्गिरसतमरथीतरः अंगु-ष्ठादय आंगिरसः पार्श्वदश्वः वैरूप्य इति त्रिप्रवराः। यद्वाष्टपदं स्वपा-र्षद वैश्वरूपेति एतेष्टपदस्वाङ्गिरससामरथीतरअंगुष्ठआङ्गिरसपार्षदश्व वैरूप्य अष्टदंष्ट्रादयः समानप्रवरतया गोत्रतया च परस्परं न विवाहमृच्छन्ति।

इति पृषदश्वाधिकारः परिपूर्णः।

अथांगिरसमुद्गलाधिकारोऽभिधीयते—मुद्गलात्रिवेदादयः आङ्गिरस-भाम्याश्वमौद्गल्येति त्रिप्रवराः। अथवा तार्क्ष्यभाम्याश्वमौङ्गल्येति त्रिप्रवराः। एतेषां मुद्गलत्रिवेद अंङ्गिरसाभार्म्यभार्म्याश्वमौद्गल्यतार्क्ष्यादीनां परस्परम-विवाहः। (इति मुद्गलाधिकारः परिपूर्णः)

अथांगिरसविष्णुवृद्धाधिकारोऽभिधीयते—विष्णुवृद्धशव। राव। सव। सय। सण। दभ्रण। दग्यण। भद्रण (मद्रणाऽ) मद्रणावाट। रावण। औपवीति।

औपगवि । शायिकि । नितुन्वि । श्यामा । आरुपवादयः आंगिरसवत्स-कुत्सयत्रासदस्यव इति त्रिप्रवराः । एते विष्णुवृद्धादयः सप्रवराः परस्परम-विवाह्याः । एतेषु आश्वलायनप्रवरोक्ताः । एके विष्णुवृद्धाः तत्प्रवरपुरुषाभ्यां आंगिरसपौरुकुत्स्यासदस्यवाश्च । अपरे ये विष्णुवृद्धा गणमध्ये पठिता आपस्तम्ब-प्रवरमहाप्रवरस्मृतिषु राजज्योतिःशास्त्रादिपरिगणिता अनयैव दिशा सर्व-प्रकरणेषु ज्ञेया पूर्ववत् । इति विष्णुवृद्धाधिकारः परिपूर्णः ।

अथ कण्वाधिकारोऽभिधीयते—आंगिरसकण्वादयः आंगिरस आजमीढ़काण्वाः इति त्रिप्रवराः । यद्वा एते त्रयः आंगिरसघोरकाण्वा इति पञ्चप्रवरा । एते समान-प्रवराः कण्वादयः परस्परमविवाह्याः । इति कण्वाधिकारः ।

अथ आंगिरसहारीताधिकारोऽभिधीयते—हरितकुत्सपिशङ्गदर्भाभामगव-कौमारादयाः आंगिरसः आंगिरस यौवनाश्वा इति त्रिप्रवराः । यद्वा मान्धातृआम्ब-रीष बौधनाश्व इति त्रिप्रवराः । एते हारीतादयः सप्रवराः परस्परमविवाह्याः इति हरीताधिकारः ।

अथांगिरससांकृत्यधिकारोऽभिधीयते—संकृतिपूतिमाषतंडशंवुक्षैवमव वैयाघ्र-पादादयः आंगिरसगौरिवात संकृत्या इति त्रिप्रवराः । यद्वा सक्थिगौरिवीत सांकृत्येति एतेषां संकृत्यादीनामेकादशानां वैकल्पिकप्रवरपुरुषद्वययुक्तत्वेऽपि चतुर्विंवशिष्टैःसह परस्परञ्च पूर्वजांगिरोव्यतिरेकेण न विवाह । इति संकृत्या-धिकारः ।

अथांगिरसकण्वाधिकारोऽभिधीयते—अंगिरस आमहीयवरौक्ष्य इति त्रिप्र-वराः । एते कण्वादयःसप्रवराः परस्परं न विवाह्याः । गर्गकुलेऽपि कपीनां सत्वेपि प्रवरभेदेन भेदः । इति कण्याधिकारः पूर्णः ।

अयमत्र शास्त्रार्थः । द्वयार्षेयाणां त्र्यार्षेयसन्निपाते विवाह्यता नास्ति । त्र्यार्षेयाणां पञ्चार्षेयसन्निपाते विवाह्यता नास्तीति । यतश्च त्रिप्रवरपुरुषेषु त्रयाणामनुवृत्तिरिति तत्राऽविवाह इति भृग्वंगिरोगणेस्वयं नियमः अन्यत्रत्वेकमपि वर्जयेदिति ।

एक एव ऋषिर्यत्र प्रवरेष्वनुवर्त्तते ।
तावत्समानगोत्रत्वमृते भृग्वंगिरोगणात् । इति वचनात् ।

इत्यांगिरसाधिकारः परिपूर्णः ।

अथ कश्यपाधिकारोऽभिधीयते--तत्र शुद्धकश्यपाश्चत्वारः--नैध्रुवा रेतभा शाण्डिला कश्यपाश्चेति। तत्र शुद्धकश्यपाः कश्यप आवत्सार असित इति त्रिप्रवराः। नैध्रुव वैशम्पायन भूतांशु सुमेधसप्रभृतयः काश्यपा वत्सारनैध्रुवा इति त्रिप्रवराः।

सुमेधास्तु अत्यन्तविरक्ततया न गोत्रप्रवर्त्तकः। रेभादयः काश्यपावत्साररैभ्या इति त्रिप्रवराः। शाण्डिलसौजामिभागुरिधन्वन्तरिप्रभृतयः। शाण्डिलअसित देवल इति त्रिप्रवराः। यद्वा काश्यपावत्सारशाण्डिल इति त्रिप्रवराः।

इदानीं कश्यपचतुर्गणस्थाः मुनयः कश्यपाः काश्यपाः नैध्रुव असित वैशम्पायनभूतांशुसुमेधसः नैध्रुवा रेभ रैभ्यशाण्डिलसौजामिभागुरिधन्वन्तरिशाण्डिलदेवप्रभृतीनां लौगाक्षादीनां परस्परमविवाहः। एते लौगाक्षिव्यतिरेकेण चतुर्गणस्था काश्यपाःपरस्परं समानप्रवरगोत्राः। यतः लौगाक्षिगोगिवक्ष्यमाण वशिष्ठप्रकरणान्ते अहर्वशिष्ठनक्तं कश्यपानां त्रयोदशानां मानष्ट्यादीनां सप्तपश्चानां वक्षामाणाः उपलक्षणार्थं एते वशिष्ठैरविवाह्याः। इति कश्यपाधिकारः परिपूर्णः।

अथात्रिगणाधिकारः--तत्र चत्वार आत्रेयगणाः। अथवा गविस्थिरावाह्लूतक सुमङ्गला इति अत्रिप्रथमात्रेयस्यात्रेयकृस्थात्रेय-चन्द्रात्रेयवामरथ्यादयः आत्रेयगाविष्ठिरपौर्वातिथ्या इति त्रिप्रवराः। वाह्लूतकादयः आत्रेयवाह्युतकःस्थावास्येति त्रिप्रवराः। अत्र अत्रिगणस्य च यद्यपि प्रवरैक्यं तथापि अवान्तरभेदासत्वात् गणभेद इति। सुमङ्गलनीजावादयः अत्रेयसौमङ्गल्यस्यावास्येति त्रिप्रवराः।

अत्रायं शास्त्रार्थः। परं निष्कर्षः। अत्र चतुर्गणस्था ऋषयः सप्रवराः अत्रिप्रथकमात्रेय स्वस्यात्रेय कृष्णात्रेयचन्द्रात्रेय वामरथ्यात्रेयाचनानशस्यावास्यगविष्ठिरपौर्वातिथ्यबाहुतकसुमङ्गल्य प्रभृतयो त्रिवंश्याः न परस्परं विवाह्याः इत्यत्रिगणाधिकारः।

अथ विश्वामित्राधिकारोऽभिधीयते--तत्र गणधौरेयाः विश्वामित्र आमृतधनञ्जयाजरौहिणअष्टकापूरणकताघमर्षणरेणुवेणुशालंकायनगोत्रवंशसमुद्भवाः द्वादशगणाः।

तत्र विश्वामित्रदेवरातचिकितगालवमन्दुतन्तुकुशिककौशिकऔलकितवालखिल्य याज्ञवल्क्य उलूखलबृहदग्निवभृशालविशालभवादयः वैश्वामित्र-

देवरातऔदल इति त्रिप्रवराः। आमतकादयः वैश्वामित्र दैवस्रवसदेवतरसत्रिप्रवरः धनञ्जया इति त्रिप्रवराः। अजप्रभृतयः वैश्वामित्रमाधुछन्दस आजेति त्रिप्रवराः। रौहिणप्रभृतयः वैश्वामित्रमाधुछन्दसरौहिणेति त्रिप्रवराः। अष्टकादयः वैश्वामित्रमाधुछन्दस अष्टकेति त्रिप्रवराः। कटारौक्षप्रभृतयः वैश्वामित्रकात्यप्रक्षीलेति त्रिप्रवराः। अघमर्षण शुनःपुच्छधूम्रजठर एकहव्य अग्निदैव्यप्रभृतयः विश्वामित्र अघमर्षणकौशिकेति त्रिप्रवराः। करेण्वादयः विश्वामित्रगाथिकरेणवेति त्रिप्रवराः। वेण्वादयः विश्वामित्र गाथिन वेणवेति त्रिप्रवराः। शालंकायन शालक्षलोहिताक्षलोहित इन्द्रकौशिकधृतकौशिकप्रभृतयः विश्वामित्रशालंकायन कौशिकेति त्रिप्रवराः।

यद्यपि शालंकायनाः यस्कवंशेऽपि वर्त्तते तथापि प्रवरेण निर्णयः कर्त्तव्यः। ततश्चायं शास्त्रार्थः। विश्वामित्रद्वादशस्थाऋषयः सप्रवरा विश्वामित्रचिकितगालवकालववमनकुशिककौशिकऔलकितवालखिल्ययाज्ञवल्क्य उलूखलबृहदग्निवक्रशालानविशाल आवहकाल भव वैश्वामित्र देवरातऔदलऔमतकामकायन देवस्रवसदेवतरस धनञ्जयमाधुतं दशधानञ्जय आजआच्यरोहिणरौहिण अष्टकआष्टकहरण वारिधायन्त पौरणक कतरौक्ष्यककात्य अक्षीलअघमर्षण सूच्यपवासुधूम्रणठरवज्ञ ऐकहव्य अग्निदेव अघमर्षण रेगुगाधिन् बन्धुलिशातातपवेगु वैणवशालंकायनशालाक्षलोहिताक्षलोहितजह्नुइन्द्रकौशिकशालङ्कायन प्रभृतयः परस्परं न विवाह्याः। सर्वत्र विश्वामित्रगणानुवृत्तेः सत्त्वादिति।

यावत्समानगोत्रत्वं विश्वामित्रोनुवर्त्तते।
तावद्वशिष्ठश्चात्रिश्च कश्यपश्च पृथक् पृथक्।

इत्याश्वलायनसूत्र अभिधानात्। इति विश्वामित्राधिकारः।

अथ वशिष्ठाधिकारोऽभिधीयते—वशिष्ठाश्चतुर्गणा अपि वशिष्ठमैत्रावरुण कौण्डिन्येति त्रिप्रवराः। ब्रह्मपुत्रशुम्नु वशिष्ठास्तु वशिष्ठैकप्रवराः। उपमन्यु औपमन्युउपोपमन्युप्रभृतयः वशिष्ठभरद्वसु ऐन्द्रप्रमदेति त्रिप्रवराः। पराशरव्यासादिगोत्रा पराशर्येति त्रिप्रवराः। कुण्डिनवशिष्ठगुत्यजातूकर्ण्यसांख्यायन प्रभृतयः वशिष्ठमैत्रावरुण कौण्डिन्येति त्रिप्रवराः। प्रकृतिपूतिमापतंडिशेवुशैवगववैयाघ्रपद्यप्रभृतयः आंगिरसगौरावीत सांकृत्या इति त्रिप्रवराः। अथवा शक्रिगौरिवीतसांकृत्या इति त्रिप्रवराः।

अत्रायं शास्त्रार्थः। वाशिष्ठा गणस्थाः सप्रवराः ऋषयः वशिष्ठवाशिष्ठउपमन्यु उपोपमन्यु आभरद्वसु ऐन्द्रप्रमद प्रमदपराशर व्यासशक्ति पाराशर्यकुण्डिन

गुर जातूकर्ण्य सांख्यासनमैत्रावरुणकौण्डिन्यसंकृतिपूतिमाषतंडिशम्बुशैवगववैयाघ्रपद्यगौरिवीतसांकृत्याः परस्परमविवाह्या। इति वाशिष्ठाधिकारः।

अथागस्त्याधिकारोऽभिधीयते। अगस्त्यप्रभृतयः अगस्त्यदार्ढ्य श्च्युत इध्मवाह इति त्रिप्रवराः। अथवा अगस्त्यदार्ढ्यच्युतकोभवाहेति त्रिप्रवराः। अथवा अगस्त्यदार्ढ्यच्युत सकरवाहा इति त्रिप्रवराः।

अत्रायं शास्त्रार्थः—अगस्त्यदार्ढ्यच्युत। अगस्त्यइध्मवाह सोमवाह भारवाहाः सप्रवराः परस्परमविवाह्याः। इतरैः सर्वैरप्येते विवाह्या इति सकलमकलङ्कम्। इति अगस्त्याधिकारः।

गोत्रैक्यात् प्रवरैक्याच्च नान्वयेयुः परावरम्।
वशिष्ठैर्काश्यपैर्नित्यम् लौगाक्षीणामनन्वयः।
सहवशिष्ठतोक्तस्तु प्रजायाम्न्यादिगोचराः।
वशिष्ठाः कुण्डिनाश्चैवमुपमन्युपराशराः।
वशिष्ठा इति चत्वारो गोत्रैक्यान्नान्वयुर्मिथः।
कुश्किकारोहिशिंकणः शेककाकामगायनाः।
कताधनञ्जया आजा अघमर्षणयोरवा।
इदं कौशिकजाश्चेति विश्वमित्रगणा दश।
नोद्वहेयुः सगोत्रत्वात् क्वचिच्च प्रवरैक्यतः।
अगस्तयः शौलवाहाः सोमवाहा इति त्रयः।
गोत्रैक्यात् प्रवरैक्याच्च नोद्वहेयुः परस्परम्।
वर्गा एकोनपञ्चाशत् प्रसिद्धा मुनिभिः स्मृताः।
अप्रसिद्धा परे वंशे शतभूता इहैव ते।
विश्वामित्रात्रिगोत्रैश्च नोद्वहेयुर्धनञ्जयाः।
अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा।
तथैव जातुकर्णाश्च वशिष्ठैरत्रिभिः सह।

भारद्वाजेन श्योनविश्वामित्रस्य वये क्षेत्रे जातो विप्रऋषिःप्रोच्यते। सौगणैरिति।

विश्वामित्रभरद्वाजस्तज्जनान्तेन नान्वयुः।
कपिलानां भरद्वाजैर्विश्वामित्रैश्च नान्वयुः।
गुरोः सगोत्रप्रवरा नोद्वाह्या क्षत्रवैश्ययोः।
स्वस्वगोत्रानभिज्ञैश्च विप्रैराचार्यगोत्रजाम्।

गायत्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।
तद्गोत्रे तत् कुले चापि विवाहं वापि कारयेत् ।

स्वगोत्राज्ञानविषयमेतन्नास्ति--

नान्यगोत्रा स्युरज्ञाता गुरुगोत्रिणः ।
समानप्रवरोद्वाहः निषेधस्तत्र वैश्ययोः ।
प्रतताभ्यां न वेयस्यात् प्रवरा अन्यान्यगोचराः ।
इयं सगोत्रसम्बन्धविवाहविषयस्थिता ।
यदि कश्चिद् ज्ञानतस्तां कन्यां मूर्खो धगच्छति ।
गुरुतल्पव्रतात् शुध्येत गतस्तत्रान्त्यन्तां व्रजेत् ।
भोगतस्तां परित्यज्य पालयेज्जननीमिव । इति ।

**इतिश्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमर वैदिकमार्गप्रवर्त्तक समस्त भूमण्डलमण्डल समस्तयवनाधीश्वरश्रीनिजामशाह समस्तसाम्राज्य धुरन्धरश्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे विवाहप्रकरणे सप्तमीपञ्चमीगोत्रप्रवरनिर्णयः ॥**



## विवाहे कालशुद्धिः

अत्र विवाहे मासवर्षादि शुद्धिरभिधीयते। गुरुशुद्धिः--विवाह मासवर्षशुद्धिः तत्र मकरस्थ वा सिंहस्थोः गुरुः परिहार्यः, सिंहस्तु मघास्थ एव, अन्यत्र विवाहादेरभ्यनुज्ञानात् । तदुक्तं—

मकरस्थं सिंहस्थं च गुरुं यत्नेन वर्जयेत् ।
सिंहस्थं तु मघासंस्थं गुरुं यत्नेन वर्जयेत् ।
अन्यत्र सिंहभागे तु विवाहादि विधीयते ।

ज्योतिःसागरे विशेषान्तरमुक्तम् ।

नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे ।
गण्डक्याः पश्चिमे पारे मकरस्थो न दोषभाक् ।

गर्ग :—

अतिचारगतो जीवः तां राशिं नैव चेद्यदि ।
लुप्तसंवत्सरो ज्ञेयः सर्वकर्मवहिष्कृतः । इति ।

### अथमासशुद्धिः

माघफाल्गुनवैशाखज्येष्ठाषाढ़मृगाह्वयाः ।

एते ग्राह्या सर्वैरपि । मार्गज्येष्ठयोस्तु ज्येष्ठपुत्रपुत्रिकयोर्न विवाहः ।

ज्येष्ठे मासि तथा मार्गे क्षौरं परिणयव्रतम् ।
ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ।

इति स्मरणात् ।

आषाढादीनत्र मासान् पौषं मीनं धनुं विना ।
नित्यक्रियाह्निपूर्वाह्ने उद्वहेन्निशि सर्वदा । इति केचित् ।

अन्ये तु धनुर्मासमपि न वर्जयन्ति ।

कार्त्तिकाश्वयुजौ मासौ उद्वाहे दक्षिणायने ।
शंशन्ति श्रवणान्येके--इति गार्ग्यः ।

मीने धनुषि सिंहे च सिंहे समतुरङ्गमे।
क्षौरकर्म विवाहश्च न कार्यं गृहकर्म च। इति।

तथा शुक्लपक्षकृष्णपक्षभागत्रयञ्च ग्राह्ये। रिक्तायनसन्धी न ग्राह्ये। तथा अमाभद्राविष्टिसंज्ञे न कार्यः।

अमायाञ्चैव भद्रायां करणे विष्टिसञ्ज्ञके।
यः करोति विवाहं सः शीघ्रं याति यमालयम्। इति वचनात्।

बुधबृहस्पतिशुक्रेषु विवाहेऽति प्रीतिः स्यात्। शनिरविभौमेषु विवाहे अति कलहः स्यात्। सोमवारेसपत्नी लभेत। तथोक्तमतिवृद्धैः--

गुरूशुक्रेन्दुपुत्राभे दिनेषु परिणीयते।
या कन्या सा भवेनित्यं भर्तुश्चित्तानुवर्त्तिनी।
अर्कार्किभौमवाराणां दिनेषु कलहप्रिया।
सापत्न्यं समवाप्नोति तुषारकरवासरे।

अत्र दिनशब्दोपादानाद्रात्रेः प्रशस्तता।

उक्तञ्च--न वारदोषाः प्रभवन्ति रात्रावपि।

## अथ तिथयः

प्रतिपदाद्यः पञ्च तिथयः क्रमेण दुःखप्रीतिसौभाग्यार्थनाशो सुखवित्तविघ्नविद्याशीलसुखवैफल्यशोकभयानन्दसुखसाफल्यं मानपुत्रदोषाप्तिबलप्रदा भवन्ति। तदुक्तम् गर्गप्रभृतिमुनिभिः।

प्रतिपद्दुःखजननी द्वितीया प्रीतिवर्धिनी।
सौभाग्यदा तृतीयास्याच्चतुर्थी चार्थनाशिनी।
पञ्चम्यां सुखवित्तानि षष्ठी विघ्नप्रदा मता।
विद्याशीलसुखाप्तिःस्यात् सप्तम्यामफलाष्टमी।
नवमीशोकभयदा आनन्दो दशमीदिने।
सुखदैकादशी ज्ञेया सफला द्वादशी स्मृता।
मानपुत्रौ त्रयोदश्यां चतुर्दश्यौ तु दोषदे।
बलं बहुविध नित्यं पञ्चदश्यां विशेषतः।

अत्र विशेषो ग्रन्थान्तरे दृश्यते। नेह शुक्ला प्रतिपदुदेतीति निषिध्यते।

अत्रापि कृष्णपक्षस्य दशमीं ह्यविवाहिकाम्।
वदन्त्यन्ये तु दशमीमुभयोश्चाविवाहिकाम्।

## अथ नक्षत्राणि

यावज्जीवं कन्या भर्त्रा सह नियुज्यते ।
दुःखं तस्मादाप्तरोगमश्विन्यां याति पञ्चत्वम् ।
याम्ये षड्भिर्मासैर्वैधव्यमायान्ति निर्धनत्वञ्च ।
कनकभूषणयुता पाणिग्रहणे कृत्तिकायाञ्च ।
आयुज्यते च पश्चात् षष्ठेऽब्दे यान्ति पञ्चत्वम् ।
प्राजापत्ये सुभगा पतिव्रता मानिनी प्रिया भर्तुः ।
.......प्रियंवदा सोमदेवते कन्या ।
आर्द्रायां पाणिग्रहणे वर्षेणैकेन याति पञ्चत्वम् ।
त्रिभिरब्दैरादित्ये कन्यासमुपैति पतिमन्यम् ।
अष्टचतुष्का कन्या कुलविद्वेषिणी पुष्ये ।
आश्लेषास्वपिकन्यापाणि ग्रहणे हन्ति भर्त्तारम् ।
सप्तभिरथहन्यादथ कुलटात्वं सामाप्नोति ।
भवति त्रिवर्गयुक्ता पित्र्ये पाणिग्रहणेऽपि सम्प्राप्ते ।
भाग्ये सुतसौभाग्यं दासीत्वं याति निर्भया कन्या ।
अब्दैकेतिक्रान्ते पतिमरणं प्राप्नुयाच्चैव ।
व्ययगतशोकासुभगाभोगवती सुप्रजा प्रिया भर्त्तुः ।
आर्यम्णे शशियुक्ते कन्या वर्षद्वयेऽतीते ।
हस्ते पाणिग्रहणे समेत्य कन्या पतिव्रता नित्यम् ।
आत्मप्राणवियोगमाप्नुयात् कन्यका चाब्दात् ।
अथवा शीलभ्रंशं त्वाष्ट्रे प्राप्नोति बान्धवकुले कन्या ।
स्वातौ धर्मसमेता पतिदयिता बन्धुवल्लभा साध्वी ।
ऐन्द्राग्न्याख्ये कन्या बुद्धिभ्रष्टा प्रयाति पतिमन्यम् ।
अष्टचतुष्केऽतीते मैत्रे कन्या प्राप्नुयाद्धनं सौख्यम् ।
भर्त्तुरवज्ञां कृत्वा दुःखान्यनुभूय शक्रभे कन्या ।
दशमेऽब्दे वैधव्यं याति यद्यब्दे न मृता ।
मूले सधना साध्वी पत्युरतिप्रियतमा प्रकृष्टा च ।
अशुचिरनाचारा दासरता यान्यमेति भर्त्तारम् ।
अब्दद्वयेन कन्या ज्ञेया पूर्वाषाढासु ।

विदधति वैश्वदेवे भर्तुर्वित्तं गुरुजनानुसरता।
पाणिग्रहणमुपयोगे श्रवणैकत्र सारमते।
विभ्रष्टस्मृतिशौचा मृत्युत्वं याति च वसुदैवे।
ईर्ष्यारोगेण हता यत्र सदनं वारुणे पश्चात्।
अजैकपदे कन्या दुःखशीला दुर्भगा दरिद्रा च।
अहिर्बुध्न्ये कन्या मणिकनकभूषणं प्रभूतमाप्नोति।
प्राप्नोति शीलशौचं पौषे भोगकय्याशनोपकरणानि। इति।

## अथयोगकरणफलम्

व्यतीपाते मरणं विघातो विकलेन्द्रियत्वम्, भद्रायां मरणञ्च। षट्करणे-सौभाग्यं शकुनादिध्रुवकरणे पाणिग्रहणे मृत्युरिति शेषं समीचीनं विशेषः।

शनिश्चरदिने प्राप्ते यदा रिक्ता तिथिर्भवेत्।
तस्मिन्विवाहिता कन्या पतिसन्ततिवर्धिनी।[१]

## अथराशिफलम्

मेषे पुत्रेषु स्नेहयुक्ता द्वितीये गोतत्परास्तृतीये कुलद्वयप्रिया। चतुर्थे कुलटा पञ्चमे पतिव्रता षष्ठे श्वशुरप्रिया। सप्तमेऽभिमानिनी। अष्टमे क्लेशिनी। नवमे कुलटा। दशमैकादशद्वादशेषु अन्यासक्ता भवेदिति। तदाहुः—

मेषे कुमारेष्वनुरक्तचित्ता विहीनवित्तागवि तत्परा च।
कुलद्वयानन्दकरी तृतीये कुलीरलग्ने कुलटा नृशंसा।
हरौ प्रसूता सकृदाश्रितापि पतिप्रिया स्यात् श्वशुरस्य षष्ठे।
रूपाभिनार्थवती तुलाधरे तथालिनि क्रन्दति नित्यमस्थिरा।

धनुषि कुलटा तत्पूर्वार्द्धेत्यपरे जगुः।
मृगघटरूपेष्वन्यासक्ता जारमुपगच्छतीति।

नन्वेवंविधा दोषाः सर्वत्र सन्तीति कथं निर्दोषत्वसम्भवः। सत्यमेवैतत् यत्र नक्षत्रदोषस्तत्र वारदोष पक्षदोषस्तत्र ऋक्षदोषः। यत्र ऋक्षाऽदोष-स्तत्र करणदोष एवं तिथिपक्षमासवर्षायनादिदोषसम्भवान्निर्दोषसमयाऽसम्भवेऽपि पाणिग्रहणे निन्दितदोषपञ्चकं मरणदारिद्रचव्याधिपुंश्चल्यमनपत्यत्वलक्षणं वर्ज्यम्

---

१. 'सर्वसौख्यैः समेधते' इति वीरमित्रोदये पाठः।

पञ्च पाणिग्रहणे दोषाः वर्जनीयाः प्रयत्नतः ।
दारिद्र्यं मरणं व्याधि पुंश्चल्यमनपत्यता । इति स्मरणात् ।

तथान्यो विशेष :—

तथा मलिम्लुचे मासि सुराचार्येतिचारगे ।
वाणीकूपविवाहादि क्रिया प्रागुदितास्त्यजेत् ।
बालशुक्रे वृद्धशुक्रे वृद्धे जीवेष्टे नष्टे जीवे ।
बाले जीवे सिंहादित्ये जीवादित्ये । इति गुरुः ।
प्राक्पश्चादुदितः शुक्रः पञ्च सप्तदिनं शिशुः ।
विपरीतं तु वृद्धत्वं तद्वदेव गुरोरपीति ।

गार्ग्यः—

मीने धनुषि सिंहे च सिंहे सप्त तुरङ्गमे ।
क्षौरमन्त्रं न कुर्वीत विवाहं गृहकर्म चेति ॥

नारदः—

न गुरौ सिंहराशिस्थे सिहांशं च गतेऽपि वा ।
क्षौरं मंत्रं न कुर्वीत विवाहं गृहकर्म चेति ।

गार्ग्य आह विशेषः—

नर्मदोत्तरदेशेषु सिंहस्थे देवमन्त्रिणि निषेधो नास्ति दक्षिणे ॥ इति गुरुः ॥

घटिकाद्वयमृक्षान्ते मासान्ते च दिनत्रयम् ।
वर्षेति वर्जयेत्पक्षं ग्रहणाद्दिनसप्तकम् ।

वर्षमत्र सौरं ग्राह्यम् । तदाह वशिष्ठः—

सौराब्दान्तो त्यजेत्पक्षं चान्द्रे च नवभं त्यजेत् ।
सावनान्तेऽष्टभं त्याज्यं नाक्षत्रे पौष्णभं त्र्यहम् ॥ इति ।

अन्योऽपि विशेषः—

आद्य गर्भस्य ज्येष्ठे मासि नोद्वाहमाचरेत् ।

मिहिरः—

ज्येष्ठस्य ज्येष्ठकन्यायाः विवाहो न प्रशस्यते ।
तयोरन्यतरे ज्येष्ठे ज्येष्ठमासो न शस्यते । इति ।

द्वौ ज्येष्ठौ मध्यमौ प्रोक्तौ ह्येकज्येष्ठे शुभावहम् ।
ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसम्मतम् ।

मिहिरो विशेषान्तरमाह—

एकमृक्षं द्वयोरेकं कन्यायाश्च द्विजन्मनः ।
एवमेव विवाहे तु सा कन्या विधवा भवेत् ।

गर्गः—

न जन्ममासे जन्मर्क्षे न जन्मदिवसे तथा ।

गार्ग्य एव—

रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ ।
ऊढा वैधव्यमाप्नोति शक्रस्य दुहितापि वा ।

तथा—

आरभ्य जन्मदिवसाद्यावत्त्रिंशद्दिनं भवेत् ।
जन्ममासः स विज्ञेयः सर्वकर्मसु गर्हित । इति ।

गर्गो विशेषमाह—

एकोदराणां पुंसां स्यात् विवाहो नैव वत्सरे ।

मिहिरः ।

एकोदरप्रसूतानामेकस्मिन्नेव वत्सरे ।
विवाहो नैव कर्त्तव्यो गार्ग्यस्य वचनं यथेति ।

अथैकोदरप्रसूतानां पुंसामेवेति व्याख्येयम् मिहिरेण ।
एकोदराणां पुसां स्याद्विवाहो नैव वत्सरे । इति विशेषोक्तेः ।
तथा कन्याविषये विशेष उक्तः ।
उद्वाह्यपुत्रीं न पिता विदध्यात् पुत्र्यन्तरस्योद्वहनं कदाचित् ।
यावच्चतुर्थीदिनमङ्गलस्य समापनं तावदसौ विदध्यात् ।

तथा—

एकमातृप्रसूतानां भ्रातॄणां परिवेदने ।
दोषः स्यात्सर्ववर्णेषु दोषो भिन्नमतेषु च ।

तथा गार्ग्यः ।

पुत्रीपरिणयादूर्ध्वं यावाद्दिनचतुष्टयम् ।
पुत्रान्तरस्य कुर्वीत नोद्वाहमिति सूरयः ।

वशिष्ठः—एकलग्ने द्विलग्ने वा द्वे गृहे यत्र शोभने ।
त्रयोरेको विनष्टः स्यात् वर्धतेऽन्य इति स्थितिः ।

तच्चतुर्थदिवसादर्वाग् विषयम् ।

तथा ।

द्विशोभनं चैकगृहेषु नेष्टं शुभन्तु पश्चाद् भवति दिनेषु ।
आवश्यके शोभनयुक्तशुक्रेवाद्दारोथवाचार्यविनोदको वा ।

गर्गः—

पुत्रोपनयनादूर्ध्वं षण्मासाभ्यन्तरेऽपि वा ।
पुत्र्युद्वाहं न कुर्वीत विवाहाद् व्रतबन्धनमिति ।

उपनयनं विवाहस्याप्युपलक्षकम् ।

तदाह--मिहिरः—

न पुंविवाहोक्तमृतुत्रयेण विवाहकार्यं दुहितुः प्रकल्पयेत् ।
न मण्डनाच्चापि हि मुण्डनञ्च स्यान्मुण्डनान्मण्डनमन्वगेति ।

वशिष्ठः—

एकोदरप्रसूतानां न सहोपायनक्रिया ।
अतिक्रमेपि वा कुर्यात्कर्त्तव्ये चापि मानवाः ॥

अत्रिः—

कुले ऋतुत्रयादर्वाक्मण्डनादपि मुण्डनम् ।
प्रवेशो निर्गमश्चैव न कुर्यान्मण्डनत्रयम् ।

वृद्धगौतमः—

पुत्रीपरिणयादूर्ध्वं पुत्रस्योद्वाहनक्रिया ।
न दुष्टास्यान्मातृभेदे पितृभेदेऽपि चैव हि ।

तथा—

भ्रात्रोर्युगे स्वसृयुगे स्वसृभ्रातृस्तयोः युगे ।
विवाहकालादर्वाक् नैकस्मिन्मण्डपे गृहे ।

एकः कर्त्ता नतं कुर्यान् न पुत्र्योःपुत्रयोरपि ।
षण्मासे वा चतुर्मासे पूर्णमासे शुभावहः। इति ।
एकोदरप्रसूतानां नाग्निकार्यत्रयं भवेत् ।
भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीदिति ।

वृद्धवशिष्ठः—

प्रत्युद्वाहो नैव कार्यो एकस्मिन्दुहितुर्द्वयोः ।
न चैकजन्ययोः पुंसः एकजन्येऽपि कन्यके ।
विवाहश्चैकजन्यानां षण्मासाभ्यन्तरे यदि ।
अशंयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ।
पुत्रोद्वाहात्परं पुत्री विवाहश्च ऋतुत्रये ।
न कार्यं व्रतमुद्वाहो मङ्गले नाप्यमङ्गलम् ।
नूनं कदाचिदुद्वाहो नैकदा मण्डनं त्रयम् ।
एकस्मिन्मण्डपे चैव न कुर्यान्मङ्गलद्वयम् ।
स्वसृयुगे भ्रातृयुगे स्वसृभ्रातृयुगे तथा ।
एकोदरप्रसूतानां एकस्मिन्वासरे पुनः ।
विवाहं नैव कुर्वीत मण्डनोपरि मुण्डनम् ।
एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ।
न मुण्डनोपनयनं न मेखलविमोक्षणम् ।
वदन्ति शौनकादयः चौलकर्मैव मुण्डनम् ।

न मुण्डनं स्याद्रशनानिबन्धो न चापि मोक्षो व्रतबन्धनस्य ।
वदन्ति गर्गप्रमुखा मुनीशाः चूडाकृतिः मुण्डनमेवनान्यत् ।

स्त्रीविवाहः कुले कथ्यते निर्गमः ।
पुंविवाहः प्रवेशो मुनीन्द्रैर्यतः ।
निर्गमादादितो न प्रवेशः शुभ-
स्तत्र संवत्सरान्तोऽवधिः कीर्त्तितः ।
एकमातृजयोरेकवत्सरे पुरुषस्त्रियौ ।
विवाहो नैव कर्त्तव्यो नारीवैधव्यशंकया ।
भिन्नोदरप्रसूतानामेकस्मिन्मण्डपेऽहनि ।
विवाहश्चैव कर्त्तव्यः क्रमेण व्युत्क्रमेण वा ।

एकोदरप्रसूतयोः कन्ययोः पुरुषयोः कन्यापुरुषयोर्वा क्रमेणाक्रमेण वा एकस्मिन्मण्डपेऽहनि वत्सरे वा विवाहं न कुर्यात्। 'अशंशयं त्रिभिर्वर्षैस्तत्रैका-विधवा भवेत्' इत्यादि निषेधात्। भिन्नोदरयोः सर्वयोः कुर्यादेवेत्यर्थः।

## अथ प्रसङ्गेन प्रातिकूल्यनिर्णयः।

वध्वा वरार्थं घटिते सुनिश्चिते
वरस्य गेहे त्वथ कन्यकायाः।
मृतिर्यदि स्यान्मनुजस्य कस्यचित्
तदा न कार्यं खलु जातु मङ्गलम्।

मनुः—

वाङ्निश्चये कृते पश्चात् पितरौ निधनं गतौ।
तयोस्तु प्रातिकूल्ये स्यान्नान्येषां मनुरब्रवीत्।

दक्षः—

दम्पत्योः पितरौ भ्राता सोपनीतः सहोदरः।
पितृव्यस्तादृशश्चैव पितामहपितामही ॥
एषामन्यतमे नष्टे नोद्वहेत्तां वधूं नरः।
सर्वेषामेव वर्णानां तथा संकरिणामपि।

व्यासः—

वाचा दत्ता तु या कन्या पितरौ प्रमितौ यदि।
तस्य तस्या वा नेष्टो विवाहो मुनिभिः स्मृतः।

प्रजापतिः—

उपक्रान्ते विवाहे च दम्पत्योः जननी पिता।
मृतौ स्यातां यदा निन्द्यः स्याद्विवाहस्तदा तयोः।

कार्ष्णाजिनिः

पिता वा यदि वा भ्राता ज्येष्ठो वा म्रियते यदा।
अतीतेऽब्देऽपि वाग्दत्तां नोद्वहेद्युवतीं पुमान्।

कुष्माडहोमादिविधानञ्च।

पितुरब्दमशौचं स्यात्तदर्धं मातुरेव च।
मासत्रयञ्च भार्यायास्तस्यार्धं भ्रातृपुत्रयोः।

इत्यादिना प्रतिबद्धशुभाशुभकर्मान्तरप्रतिप्रसवार्थं, न तु प्रातिकूल्योपगमार्थम्। प्रातिकूल्योपगमस्य पूर्वोदाहृतबहुवचनैर्विधानात्।

संवर्त्तः—

उद्वहेद्यदि वाग्दत्तां प्रातिकूल्येऽपि यः पुमान्।
स याति नरकं घोरं कुतो वाप्यशुभं भवेत्।

हारीतः—

स्पर्शिता स्याद्यदा कन्या वाचा वाप्युदकेन वा।
अन्तरा प्रातिकूल्यञ्चेत् पूर्वोढा विधवा भवेत्।
अचिरेणैव कालेन पशुभृत्यधनक्षयः।
ऊढायां प्रतिकूलायां तस्मात्तां परिवर्जयेत्।
वधूपित्रापि पूर्वस्मै प्रतिकूलाय कन्यका।
वरायानुगुणायापि न देया शुभमिच्छता।
कृते वाङ्‌निश्चये पुंसां मरणं यस्य कस्यचित्।
तदोद्वाहं न कुर्वीत नारी वैधव्यमाप्नुयात्।

अन्यच्च—

वधूवरार्थं घटिते सुनिश्चिते वरस्य गेहे त्वथ कन्यकायाः।
मृतिर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु जातु मङ्गलम्।

अत्र मङ्गलशब्देन विवाहः।

स्मृतिचन्द्रिकायाम्—

कृते वाङ्‌निश्चयेऽपि स्यान्मृत्युर्मर्त्यस्य गोत्रिणः।
तदा न मङ्गलं कार्यं नारी वैधव्यमाप्नुयात्।

भृगुसंहितायाम्—

वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः।
तदोद्वाहो न कर्त्तव्यः स्वकुलक्षयकारकः।

शौनकः—

वरवध्वोः पिता माता पितृव्यश्च सहोदरः।
एतेषां प्रतिकूलञ्चेन्महाविघ्नप्रदं भवेत्।

पिता पितामहश्चैव माता चैव पितामही ।
पितृव्यस्त्री सुतो भ्राता भागिनी वा विवाहिता ।
एतैरेव विपत्तिस्तु प्रतिकूलं बुधैः-स्मृतम् ।
अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद् भवेत् ।

माण्डव्यः—

वाग्दानानन्तरं माता पिता भ्राता विपद्यते ।
विवाहो नैव कर्त्तव्यः स्वशाखाहितमिच्छता ।

अथ संवत्सरादूर्ध्वं प्रवृत्तिमाह मेधातिथिः—

वाग्दानानन्तरन्तत्र कुलयोः कस्यचिन्मृतिः ।
तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् ।

स्मृतिरत्नावल्याम्—

पितुरब्दं महाशौचं षण्मासं मातुरेव च ।
मासत्रयन्तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ।
अन्येषान्तु सपिण्डानामाशौचं माससम्मितम् ।
तदा स्वशान्तिकं कुर्यात् ततो लग्नं विधीयते ।
प्रतिकूलं न कर्त्तव्यं लग्नं यावदृतुत्रयम् ।
प्रतिकूलेपि केप्याहुः कर्त्तव्यं बहुविप्लवे ।
प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ।
विवाहस्तु ततः पश्चात्तयोरेव विधीयते ।

ज्योतिः सागरे—

दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये ।
प्रौढायामपि कन्यायां नानुकूल्यं विलोकयेत् ।

ज्योतिः प्रकाशे—

प्रतिकूलेऽपि कर्त्तव्यो विवाहो मासतः परम् ।
शान्ति विधाय गां दत्त्वा वाग्दानादि चरेत्पुनः ।
पुरुषत्रयपर्यन्तं प्रातिकूल्यं सगोत्रिणाम् ।
प्रवेशे निर्गमो तद्वत् तथा मण्डनमुण्डने ।
प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ।
आचतुर्थे ततः पुंसि पञ्चमं तु शुभं भवेत् ।

स्मृत्यर्थसारे—

दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च।
उदासवर्त्तिनश्चैव प्रतिकूलं न विद्यते।
संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना ।
शान्तिरुक्ता गणेशस्य तां कृत्वा शुभमाचरेत् ।
वधूवरान्यतरस्य माता स्याच् चेद्रजस्वला।
तस्या शुद्धेः परं कार्यं माङ्गल्यं गुरुरब्रवीत्।

मनुस्मृतौ—

उद्वाहव्रतचूड़ासु भार्या यस्य रजस्वला।
तदा न मङ्गलं कार्यं शुद्धौ कार्यं भवेच्छुचिः ।

गर्गः—

यस्योद्वाहादिकार्यं स्यान्माता तस्य रजस्वला ।
तदा न तत्प्रकर्त्तव्यं आहुः क्षयकरं यतः।

शान्तिकं कृत्वातिसंकटे कुर्यादिति ।

चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि।
भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ।

विवाहमध्ये पूर्वसञ्जातगर्भदर्शने गर्भजनकस्यैव सा देयेति निरूपितमन्यत्रेति नात्र विस्तर इत्यास्ताम् ।

**इतिश्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्गप्रवर्त्तकसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामशाह समस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे विवाहप्रकरणे पञ्चाङ्गशुद्ध्यादि प्रतिकूल एकोदरप्रसूत विवाहमध्ये ऋतुस्नातस्त्री तस्य निर्णयः ॥**



## अथ कन्यादानकालः—

तत्र यमः—

अष्टवर्षा भवेद् गौरी नव वर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

संवर्त्तः—

अष्टमे तु भवेद् गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषलीयति ॥ इति ॥

वृषली रजस्वला ।

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजाः ।
अपरा वृषली ज्ञेया कुमारी तु रजस्वला ॥

इति देवलवचनात् ।

तथा—

अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ इति ॥

तथा—

प्राप्ते वै दशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्या पिता पिबति शोणितम् ॥ इति ॥

तथापस्तम्बः—

अष्टवर्षा भवेद् गौरी नववर्षा तु कन्यका ।
प्राप्ते द्वादशमे वर्षे रजस्त्रीणां प्रवर्त्तते ॥ इति ॥

अत्र सर्वत्रापि द्वादशे रजस्वलेत्यभिहितम् । तत्सर्वं प्रायिकमिति ज्ञेयम् । कदाचित्कासाञ्चित्तत्रापि रजोदर्शनासम्भवात् । कस्याश्चिदर्वागपि कस्याश्चिदूर्ध्वमपि रजसो दृष्टेः ।

अनेनैवाभिप्रायेणावदन्मनुः—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
द्व्यष्टवर्षोऽष्टवर्षां च धर्मे सीदति सत्वरः ॥ इति ॥

अल्पवयाः सत्वर इत्यर्थः ।

तदाह संवर्त्तः—

रोमकाले तु सम्प्राप्ते सोमो भुञ्जीत कन्यकाम् ।

यम आह—

तावदुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।

तथा—

वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम् ।
त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ॥

तामुद्वहेन्नाधिकां क्वचित् ।

श्रीमहाभारते—

त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षस्तां सप्तवर्षामवाप्नुयात् ॥

अयमत्र तात्पर्यार्थः—

अष्टवर्षा कन्या त्रिगुणवयसैव विवाहिता, तदुपरि द्वादशपर्यन्ता न्यूनत्रिगुणवयसा वा, द्वादशवर्षोपरि षोडशवर्षपर्यन्ता सार्धद्विगुणत्रिगुणकिंचित्त्रिगुणवयसा विवाहिता प्रशस्ततरा जायते । अल्पवयस्त्वमात्रेण विवाहिताऽपि कन्याभवत्येव नतु सम्यग् प्रजार्था भवतीति ततो ऋतुकालात्पूर्वमेव देया ।

अतएव संवर्तः—

रोमकाले तु सम्प्राप्ते सोमो भुङ्क्ते तु कन्यकाम् ।
रजःकाले तु गन्धर्वो वह्निस्तु कुचदर्शने ॥
तस्मादुद्वाहयेत् कन्यां यावन्नर्तुमती भवेत् ।

तथा वशिष्ठेऽपि—

प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥ इति ॥

तथा च संग्रहे—

यावच्चैलं न गृह्णाति यावत्क्रीडति पांशुभिः ।

कन्याशब्देनात्र लज्जाभिज्ञानरहितवयोयुक्ता विवक्षिता ।

तथाचोक्तम्—

यावद्दोषं न जानाति तावत्कन्येति कथ्यते ।

पुराणे--

यावन्न लज्जां जानाति कन्या पुरुषसन्निधौ ।
योन्यादीन्नावगूहेत तावद्भवति कन्यका ॥

वयोविशेषेण दातुः फलविशेषोऽपि दृश्यते ।

तदाह मरीचिः--

गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद् ब्रह्मलोकं रौरवन्तु रजस्वलामिति ।

मुख्यानुकल्पभेदेन दातृविशेषः सञ्जायते ॥

तथोक्तं नारदेन—

पिता दद्यात्स्वयं कन्यां भ्राता वानुमतः पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते ।

तथा च योगी--

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

कात्यायनः—

स्वयमेवौरसीं दद्यात्पिताऽभावे स्वबान्धवः ।
मातामहस्ततोन्या हि माता वा धर्मजां सुताम् ॥

विष्णुः--

पिता पितामहो भ्राता सकुल्यो भ्रातर इति ।
कन्याप्रदः पूर्वभावे प्रकृतिस्थः परः परः ॥ इति ॥

प्रकृतिस्थः पातित्योन्मादादिदोषरहित इति ।

तथा—

दीर्घप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु ।
भ्राता तु समये दद्यादौरसीमपि कन्यकाम् ॥

व्यवहारासमर्थः पौगण्ड इत्यभिधीयते । समये कन्यादानोचिते काले ।

नारदः—

पिता दद्यात्स्वयं कन्यां माता भ्राताथवा पुनः।
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते ॥
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ।

## अथ कन्यास्वयंवरकालः

यदा तु नैव कश्चित्स्यात् कन्या राजानमाव्रजेत् ।
अनुज्ञया तस्य वरं परीक्ष्य वरयेत्तु सः ॥
सवर्णमनुरूपञ्च कुलरूपवयःश्रुतैः ।
सहधर्मं चरेत्तेन पुत्रांश्चोत्पादयेत्पुनः ॥

ततस्तस्माद्वरात् ।

मनुः—

त्रीणि वर्षाण्युपासीत कुमार्यर्तुमती सती ।
ऊर्द्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥
अदीयमानामार्त्तामधिगच्छेत्स्वयन्तथा ।
नैनः किञ्चिदवाप्नोति न क्षयं साधिगच्छति ॥
अलङ्कारं नाददीत पितृदत्तं स्वयंवरा ।
मातृतो भ्रातृदत्तं वा स्तेयं स्यादिति तं हरेत् ॥
पित्रे दद्यान्न शुल्कन्तु कन्यामृतुमतीं हरेत् ।
स हि स्वाम्यादतिक्रामेत् ऋतूनां प्रतिबोधनात् ॥

एनः पापं बंधकीत्वात् याज्ञवल्क्यः ।

गम्यं त्वभावे दातृणां कन्या कुर्यात्स्वयम्वरम् ।

गम्यं कुलशीलादिभिर्गमनार्हम् ।

बौधायनः—

त्रीणि वर्षाण्यृतुमती कांक्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।

विष्णुः—

ऋतुत्रयमपास्यैव कन्या कुर्यात्स्वयम्बरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मने सदा ॥
पितृवेश्मनि या कन्या रजःपश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया हरस्तां च न दुष्यति ॥

यमः—

कन्या द्वादशवर्षाणि याऽप्रदत्ता वसेद् गृहे ।
भ्रूणहत्या पितुस्तस्या सा कन्या वरयेत्स्वयमिति ॥

भ्रूणस्य गर्भस्य हत्या ।

वशिष्ठः—

पितुः प्रमादात्तु यदीह कन्या वयःप्रमाणं समतीत्य तिष्ठेत् ।
सा हन्ति दातारमदीयमाना कालातिरिक्ता गुरुदक्षिणेव ॥

अतिक्रान्तकाला यथा गुरुदक्षिणेत्यर्थः ।

बोधायनः—

दद्याद् गुणवते कन्यां नग्निकां धर्मधारिणीम् ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजःस्वयमिति ॥

कुलशीलरूपवत्वादि गुणरहिताय ।

या हि कन्या पितृगृहे रजस्वला सा वृषली, तत्परिवेत्ता वृषलीपतिः॥

तथा पैठीनसिः—

यदा ऋतुमती भवति तदा दाता प्रतिगृहीता च नरकमाप्नुयादिति ।

यस्तु तां वरयेत्कन्या ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद् वृषलीपतिम् ॥

इति स्मरणाच्च ।

एवं स्वयंवरकालनिरूपणाधिकारिनिरूपणादि च कृतम् ।

## अथ दत्ताया अपि पुनः प्रत्याहरणमभिधीयते

तत्र योगी—

दत्तामपि हरेत्पूर्वं श्रेयांश्चेद्वर आव्रजेत् ॥ इति

यदि पूर्वस्मिन्न दोषवत्ता उत्तरस्मिंश्च गुणवत्तेति ।

इदञ्च सप्तमपदात्प्रागेव द्रष्टव्यम् ॥

तदुक्तं नारदेन—

स्त्रीपुंसयोश्च सम्बन्धाद्वरणं प्राग् विधीयते ।
वरणाद् ग्रहणं पाणेः सम्बन्धोऽयं त्रिलक्षणः ॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् ।
पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ॥
तेषां निष्ठा च विज्ञेया विद्वद्भिः सप्तमे पदे ॥ इति ॥

अथ कश्चिद्विशेषोऽभिधीयते—सप्तमपदात्पूर्वं परिणेतुर्निधनेऽपि न तस्या विधवात्वम् ।

अद्भिर्वाचा वा दत्तायां म्रियेतादौ वरो यदि ।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥

इति वशिष्ठस्मरणात् ।

ततश्च सा पितुरेव न तु प्रतिग्रहीतुः । सान्यस्मै दीयमाना देवराय देया । तस्याभावे तज्ज्येष्ठाय, तस्याप्यभावे तद्वंश्याय, तदभावेऽन्यस्मा इति ।

अपरोऽपि विशेषः—कश्चिदभिधीयते-पित्राद्यनुमत्यभावे या कन्या स्वसामर्थ्येनैवापहृत्य परिणीतान्यस्मै देया ।

बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद् देया यथा कन्या तथैव सा ।

इति यमवशिष्ठयोः स्मरणात् ।

अपरोऽपि विशेषः—एकाचेत्कन्या बहुभ्यो दीयेत वाग्दत्ता क्रमेण तत्र तेषु सर्वेषु समागतेषु वरेषु प्रथम एव दोषरहितो लभेत ।

तदाह कात्यायनः—

अनेकेभ्योपि दत्तायामनूढायान्तु यत्र वै ।
वरागमश्च सर्वेषां लभेतादिवरस्तु ताम् ॥ इति ॥

सर्वेषां वराणामागमे सतीति द्रष्टव्यम् ।

अथापरो विशेषोऽभिधीयते—यदि कश्चिद् वरो विवाहोत्तरकालं देशान्तरं व्रजेत् । तदा ऋतुत्रयं प्रतीक्ष्यान्यं योग्यं वरं वरयेत् ।

प्रतिगृह्य च यां कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून् समतिक्रम्य सा वान्यं वरयेद्वरम् ।

इति नारदस्मरणात् ।

अन्योऽपि विशेषः—शुल्कं मूल्यं दत्वा यदि वरो देशान्तरं व्रजेत्तदा वर्षमात्रं प्रतीक्ष्य पुनरन्यस्मै विधिवद् देया ।

प्रदाय शुल्कं गच्छेद्यः कन्यायास्त्रीधनं तथा ।
धार्या सा वर्षमेकन्तु देयान्यस्मै विधानतः ॥

अत्राप्य रो विशेषोऽभिधीयते—

यदि शुल्कं दत्वा कश्चिन्म्रियेत् तदा वध्वनुमत्या वधूर्देवराय देया, अन्यस्मै वा निर्गुणायापि देया । तदुक्तं मनुना—

कन्यायां शुल्कदत्तायां म्रियेत यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्यानुमन्यते ॥

कुलादिरहितेभ्यो दत्तापि कन्या पुनर्हरणीया इत्यपरो विशेषः ।

तथा वशिष्ठः—

कुलशीलविहीनस्य षण्ढादिपतितस्य च ।
अपस्मारिविधर्मस्य रोगिणां वेषधारिणम् ॥
दत्तामपि हरेत्कन्यां स्वगोत्रोढां तथैव च ।

पूर्वमेवाभ्यधायि ।

अथाऽदुष्टां चेत्प्रतिगृह्य परित्यजेत्तदासौ दण्ड्यः ।

तदाह नारदः—

प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेद्वरः ।
विनेयः सोऽथ दण्डेन कन्यकामेव वा वहेत् ॥

कात्यायनः—

वरदोषाननाख्याय पाणिं गृह्णाति यो वरः ।
वाचनं च प्रकुर्वीत तद्दत्तं नाप्नुयात्तु सः ॥

## अथ विवाहोऽभिधीयते

अथ विवाहभेदोऽभिधीयते । अष्टौ हि विवाहाः—ब्राह्म दैवार्षप्राजापत्यासुर-(मानुष) गान्धर्वराक्षस (क्षात्र) पैशाचाश्च ।

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमस्स्मृतः ॥

इति वचनात् । एतेषां लक्षणानि योगीश्वराभिहितानि ।

## तत्र ब्राह्मः

तथाहि—

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥

उभयतः पित्रादीन् दश, पुत्रादीन् दश, आत्मानं चैकविंशमिति एकविंशतिम् पुनाति ।

यद्वा दश मातृतः पितृतो दश आत्मा चैकविंशतिरिति व्याख्या ।

तथा मनुः—

आच्छाद्य चार्हयित्वा च श्रुतशीलवते स्वयम् ।
आहूय दानं कन्यायाः ब्राह्मो धर्मः प्रकीर्त्तितः ॥

## अथ दैवः

यज्ञे प्रारम्भे कन्यामलङ्कृत्य यदर्त्विजे दीयते स दैवः ।

तथोक्तम्--

यज्ञे तु वितते सम्यग् ऋत्विजे कर्म कुर्वते ।
अलङ्कृत्य सुतादानं दैवं धर्म्यं प्रचक्षते ॥

## अथार्षः

वराद् गोमिथुनं वृषभं गां च गृहीत्वा यथाशक्त्यलङ्कृता यत्र दीयते स आर्षः ।

तदाह मनुः--

एकं गोमिथुनं[1] द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥

दैवार्षयोः फलं योगिनोक्तं चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् । प्रथमजो दैवविवाहजः, उत्तरज आर्षविवाहजः सप्त पूर्वान् सप्त परानिति चतुर्दश । त्रीन् पूर्वान् त्रीन् परानिति षट् । प्रथमजो दैवः, उत्तरज आर्षः ।

## अथ प्राजापत्यः

सह धर्मं चरता इति परिभाषणपूर्वकमलङ्कृत्य यत्र कन्या दीयते स प्राजापत्यः । तदाह–

सहोभौ चरतां धर्ममिति वाचानुभाष्य तु ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिःस्मृतः ॥ इति ॥

तस्यां जातः षट् परान् षड्वरान् आत्मानञ्चेति त्रयोदश पावयेत् ।

## अथासुरः

आत्मार्थं द्रविणमादाय यत्कन्यार्पणं स आसुरः ।

---

१. मिथुनम् = वृषभो धेनुश्च ।

अयमेव मानुषः ।

ज्ञातिभ्यो द्रविणं दत्वा कन्यायाश्च स्वशक्तितः ।
कन्या प्रदानं स्वाच्छंद्यात् आसुरो धर्म उच्यते ॥
तथासुरो द्रविणादानात् गान्धर्वः समगान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥

## अथ गान्धर्वः

कन्यावरयोरन्योन्यानुरागेण यत्त्वं मे भार्या त्वं मे पतिरिति सङ्केतः स गान्धर्वः । समयपूर्वकमुपभोगेऽपि गान्धर्व एव ।

तदाह—

इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स इति ज्ञेयो मैथुन्यः कामसम्भवः ॥

## अथ राक्षसः

युद्धहरणाद्राक्षसः ।

सएव क्षात्रः—

हत्वा छित्वा च भित्वा च क्रोशन्ती रुदतीं गृहात् ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥ इति ॥

## अथ पैशाचः

कन्यकाच्छलात्पैशाचः ।

तदुक्तं—( मनुना )

सुप्तां मत्तां प्रमत्तां वा रहो यत्रावतिष्ठति ।
स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः ॥ इति ॥

एतेऽष्टावपि विवाहाः क्रमिका एव कार्याः । न व्युत्क्रमेण ।

अत्रायं प्रयोगपरमनिष्कर्षः—ब्रह्मचारी गुरोरनुज्ञामाहाय समावर्त्तनाभिध-कर्मविशेषं कृत्वा गृहस्थाश्रममपेक्षमाणः स्नात्वा गुणादिभिः कन्यापरीक्षां कृत्वा वरमपि परीक्ष्य कन्यावरयोः पूर्वप्रतीतजन्मयोगाद्यानुकूल्यं ज्योतिःशास्त्राभिज्ञैः सह पर्यालोच्य तदनुगुणविवाहलग्नं पूर्वोक्तरीत्या सम्यग्विचार्य वरः पञ्चाङ्गशुद्धि-चन्द्रताराबलशुभयुक्तनक्षत्रादौ शुक्लवस्त्रः, भूषणफलताम्बूलपुष्पगन्धाक्षतादि-मङ्गलवाद्यध्वनिभिर्विप्राशीर्वचनैः सह सस्नेहं वधूगृहमागत्य वधूवरणं कृत्वा दाता-चेन्द्राणीं संपूज्य ततो—

देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहभागमारोग्यं पुत्रलाभं च देहि मे ।

इति शचीप्रार्थनान्तरं तुभ्यमिमां दास्यामीति तस्यैतां दत्त्वा तदनुगुणं लग्नादिविचार्य वरः कन्यादानात्पूर्वंदिने स्वस्तिवाचनपूर्वकं नान्दीमुखश्राद्धं कृत्वा परेद्युः कृतमङ्गलस्नानो धृतानुपहताम्बरद्वयः पुष्पाद्यलङ्कृतः स्वाभीष्टदेवं नमस्कृत्य ब्राह्मणभोजनं विधाय स्वयमपि भुक्त्वा कृतभोजनैः ब्राह्मणैः पुण्याहं वाचयित्वा वरवृतोध्वर्युः ब्राह्मणयुक्तः साक्षतकांस्यपात्रेण पिहितमुखं पूर्णकुम्भं निधाय व्याहृत्यादि—तत्तल्लिङ्गादिभिर्मन्त्रैरक्षामक्षतैः कृत्वा वरो दक्षिणादिभिरष्टभिर्मङ्गलद्रव्यैः मङ्गलगीतवादित्रैः लाङ्गलीपरिच्छेदनपत्रैः सह मित्रवान्धवैः सह स्वग्रहान्निर्गत्य कन्यागृहं गच्छेत् ।

ततः कन्याप्रदाता पूर्वेद्युः स्वस्तिवाचनपुरःसरमाभ्युदयिकं स्वगृह्योक्तरीत्या विधाय स्वगृहमध्ये द्वितीयेऽहनि कृतोपवासः ज्योतिर्विदा सह विवाहलग्नपरीक्षां प्रतीक्षमाणः प्रक्षेपपूर्णकुम्भधारिणीभिः सुवासिनीभिः नीराजनं हयादुत्तारणं च विधाय स्वगृहमध्ये प्रविश्य तत्र विधिवत् प्राणानायम्य सम्यक् प्रकारेण देशकालादिसंकीर्त्य स्वगृहागतकन्यापेक्षिवराय कन्यादाननिमित्तमधुपर्कं गृह्योक्तविधिना करिष्ये इति संकल्प्य प्रागुक्तलक्षणं दर्भद्वयं गृहीत्वा विष्टरो विष्टर इति त्रिरुक्त्वा निवेद्य आसनार्थं वराय दत्वा वरोपि तत्र उदगग्रेषु दर्भेषु अहं वर्ष्मंषु जाना इति मन्त्रमुच्चार्य मन्त्रेण पादाभ्यां विष्टरमाक्रम्योपविश्य पाद्यं पाद्यं पाद्यमिति त्रिर्निवेद्य पाद्यं इति त्रिर्निवेदितजलेन क्रमात् प्रक्षालितदक्षिणादक्षिणचरणः लौकिकोदकेनाचम्य पूर्ववत्त्रिर्निवेदितमर्घमञ्जलिना प्रतिगृह्य आचमनं गृहीत्वा अमृतोपस्तरणमसीति त्रिःपीत्वा पुनराचम्य लौकिकोदकेन मध्येमार्गमानीयमानं मधुपर्कं मित्रस्य त्वा चक्षुषेति

मन्त्रेण प्रतीक्ष्येति मन्त्रेणावेक्ष्य मधुपर्को मधुपर्को मधुपर्क इति त्रिर्निवेदितं मधुपर्कं देवस्य त्वेति अञ्जलिना प्रतिगृह्य मधुव्वातेति अवाप्तुषोवीक्ष्य तन्मात्रे सव्यहस्ते गृहीत्वा अंगुष्ठोपकनिष्ठिकाभ्यां मधुपर्कं त्रिःप्रदक्षिणमालोड्य 'वसवरुद्रा गायत्रेणे' त्यादि मन्त्रैर्कर्णादिनिमृज्य मध्यं त्रिरुल्लिख्य मधुपर्कपात्रं भूमौ निक्षिप्य विराजोदोहोसीत्यादिभिः मधुपर्कैकदेशं गृहीत्वा त्रिःप्राश्य आचम्य ततो दाता विवाहगृहे तण्डुलोपरि प्राङ्मुखीं कन्यां समुप्रवेश्य पाणौ पाणिमवस्थाप्य तिरस्करणीमन्तर्धाय तथा वरमप्यवस्थाप्य ततो वरो त्रिषगुदेवशर्मण इत्याद्युक्त्वा एवमेव कन्येत्युक्त्वा-कान्तं वृण इति वदेत् ।

ततो दाता इमां कन्यां कनकसम्पन्नां बृणीष्वेति वदेत् । ततो बधूवरयोरक्षतमस्तक निक्षेपेण दर्शनं, ततो प्राणानायम्य सम्यक् तिथ्यादि स्मृत्वा श्रीपरमेश्वरप्रीत्यर्थं कन्यादानमहं करिष्य इति कृत्वा प्रत्यङ्मुखं तिष्ठत्कन्यां कनकसम्पन्नामित्यादि-मन्त्रानुच्चार्य इमां कन्यां तुभ्यमहं प्रजासहत्वकर्मभ्यः प्रतिपादयामीति सहिरण्योदकधारां देवतीर्थेन वरहस्ते दत्त्वा शिरसि करे वा समर्पयेत् । ततो यथाचारं सर्वं कर्म निर्वर्त्य औपासनाग्निपरिग्रहार्थं पाणिग्रहणं करिष्य इति संकल्प्य स्थण्डिलोपलेपनादि कृत्वा आद्यलाजैः सह पर्यग्नि कृत्वा आघारान्ते अत्र आयूंषि यवस इत्यादिभिस्त्रिभिस्त्वमर्यमा भवसीति अनेन प्राजापतेन त्वां देवामित्यनेन च पञ्चाहुतीर्हुत्वा ततः प्रत्यङ्मुखस्तिष्ठन् प्राङ्मुख्या उपविष्टया वध्वा उत्तानस्य करस्यांगुष्ठादिप्रदेशमवाङ्मुखेन करेण आगृह्णामि इति मन्त्रेण गृहीत्वा तथास्थितया वध्वा करौ प्रक्षाल्याञ्जलिं कारयित्वा श्रुवेणाज्यमादायोपस्तीर्य तत्र भ्रातृस्थानीयेन वा तिष्ठता सूर्यस्यात् द्विरवद्य स्वयं पात्रस्थानभिघार्याञ्जलिस्थानभिघार्यार्यमणन्तु देवमिति मन्त्रं वदन् अविच्छिन्नाङ्गुलिनाञ्जलिना स्रुवेण ता हावयेत् । ततो दृषदुपलं च वर्जयित्वा पूर्णकुम्भसहितमग्निं ममोहमस्मि सात्वमिति मन्त्रेण हावयित्वा स्वयमग्रे गच्छन् वधूं प्रदक्षिणं परिणीयतां प्राङ्मुखीमश्मानमारोहेति मन्त्रेण द्वाभ्यां हस्ताभ्यां दृषदमारोप्य पूर्ववत्तदंजलिमुपस्तीर्य लाजावदानं द्विःकारयित्वा द्विरभिघार्य वरुणं न्विति मन्त्रेण हावयित्वा पुनस्तेनैव मन्त्रेण प्रदक्षिणं परिणीयाः श्मानमारोप्य पुनरुपस्तीर्याभिघार्य पूषणन्तु देवमिति मन्त्रेण सकृत् हावयित्वा पुनः पूर्ववत्परिणीय दृषदमारोप्य स्वयं प्रजापतये स्वाहेति स्मरन् वाशिष्ठान् अञ्जलावात्माभिमुखं सूर्पकोणेनैव निरवशेषं हावयित्वा यदि वध्वाः शिरोदेशधर्मादिना केशपार्श्वयोरूर्णा सूत्रेण बद्धे स्यातान्तदा प्रत्वा मुञ्चामीति दक्षिणशिखां प्रेतो मुञ्चामीत्युत्तरशिखां विमोच्य ततो बन्धुपरिगृह्याग्नेरुदीक्ष्य सप्त तन्दुलराशि-

ष्वपि ईष एकपदी भव सा मामनुव्रता भव । पुत्रान्विन्दावहै बहुस्ते संतु जरदष्टय इति प्रथमं राशिमूर्जं द्विपदीभवेत्यादि रायस्पोषमौडिदमापत्रिपदीभवेत्यादि तृतीये मायोभव्यामचतुष्दीभवेत्यादि चतुर्थं प्रजाभ्यः पञ्चपदीभवेत्यादि पञ्चम षट्पदी-भवेत्यादिना षष्ठं सखा सप्तपदीभवेत्यादिना सर्वं कुर्यात् ।

## अथप्रथमशारिकामभिमतं मतम् ॥

पूर्वोक्तकाले विवाहं कर्तुकामः तोरणाद्यं द्वादशहस्तं मण्डपं कृत्वा तत्र वेदिं चतुःकरां हस्तोच्छ्रितां गृहान्निर्गमदक्षिणभागे निर्माय स्वस्तिवाचनपूर्वकं मण्डपं संस्थाप्य चतुरो ब्राह्मणान् सम्पूज्य दक्षिणादिभिः सन्तोष्य सगणाधिपान्मातृंश्च सम्पूज्य शुद्धपटे विलेख्य अक्षतपुञ्जेषु वा ततो नान्दीश्राद्धत्रयं विधाय कृत-कौतुकमङ्गलं वीरवपुषं श्रुतिघोषेण नानावादित्रघोषैश्च वरं गृहमानीय प्रक्षेपपूर्वं कुम्भधारिणीभिः सुवासिनीभिः गृहद्वारिकामागच्छन्तं वरं गृहान्तः प्रवेश्य ततः प्राणानायम्य सम्यक् तिथ्यादिसङ्कीर्त्य कन्यार्थिने वराय गृहमागताय स्नातकाय-कन्यादाननिमित्तं मधुपर्कं वरस्योत्तारविधिना करिष्य इति संकल्पं कुर्यात् । दृष्ट्यु त्तारणं विधाय आसनं दत्वा पूजां विधातुं अर्घ्यानुकल्प्यौ द्वौ कांस्यसम्पुटौ कृत्वा-विष्टरमाहार्यं पाद्यं पादार्थमुदकमर्घ्यमाचमनीयं मधुपर्कं दधिमधुघृतं सर्वं कांस्ये निधाय विष्टर उपवेशनार्थं दर्भानास्तीर्य विष्टरः पञ्च प्रादेशमात्रं कौश काशं वैल्वं वा निर्माय वैल्वं वा उदग्रं भूमौ निधाय पादार्थंकोष्णमुदकमानीयाचमनीयं चादाय—

तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।
स्रग्विणं तल्प आसीनमर्चयेत् प्रथमं गवा ।

इत्याचार्योपदेशात् । आचार्यो वरायार्चयेत्यभिहितो विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामिति त्रिरुक्त्वा वर्ष्मोसि समानानामुद्यतामिव सूर्यः इतिमन्त्रस्यो-पादानोपवेशनयोरन्तरापतितत्वेऽपि सामर्थ्यां उपवेशनार्थप्रतीतेः । अनेन मन्त्रेण वरमासन उपवेश्य स तूष्णीमेवोपविशेत् । दक्षिणपादः पूर्वंश्च ब्राह्मणातिरिक्तानां चे त्सव्यपादं; पूर्वं पादार्थं पुनर्विष्टरं दत्वा विराजो दोहोसि विराजो दोहमसीयमयि पाद्यायैविराजोदोह इति अर्घ्यं दत्वा प्रतिगृह्यत्वार्घ्येण चार्घ्यं चापस्य युष्माभिः सर्वान्कामानवाप्नुवानीत्यनेन मन्त्रेण सामर्थ्यादुदकशब्दवाच्यं इतरो मूर्धानमभिवन्द्य समुद्रवः प्रहिणोमीत्यनेन मन्त्रेण निनयनमभिमन्त्र्य मन्त्रान्ते आचमय्येति मित्रस्य

त्वेति मधुपर्कं प्रतीक्ष्य कर्ता स्ववामकरे कांश्यपात्रे दधिमधुघृतमादाय दक्षिणाङ्गुष्ठानामिकया निरूक्षणं प्रपवनञ्च प्रतिमन्त्राभ्यासेन विधाय 'यन्मधुनोमधव्यंपरमंमि'त्यनेन मन्त्रेण मधुमतीभिर्वा प्रत्यृचं 'मधुपर्के च सोमे च नोच्छिष्टो भवति द्विज ।'

इतिस्मरणेनोच्छिष्टस्यैव मन्त्रोच्चारणविधेः यावद्द्रव्यञ्च मन्त्रोच्चारणविधेः प्राशनं कृत्वाऽवशिष्टञ्च पुत्रान्तेवासिभ्यो दत्त्वाद्भिराचम्य वाङ्म आस्य इत्येवमादिभिर्मन्त्रैः प्राणम् संमृश्य वराय वाससी दत्त्वा ततो वरेणालौकिकाग्निं संस्थाप्य विवाहवेद्यां मथित्वा वा संस्थाप्य ततो धर्मार्थकाम इमां गौरीं रोहिणी विवाहयिष्य इति संकल्प्य ब्रह्मणवृत्याभ्यासजयाहोमैः सुमुहूर्त्ते पाणिग्रहणार्थं वधूमागत्य सुमुहूर्त्तमवलोक्य पाणौकृत्य जरां गच्छेति मन्त्रेणाहतं वासः कन्यायाः परिधाप्यौत्तरीयकं च दत्त्वा वैवाहिकं विधिं दम्पती सम्बधिमंत्रांश्च वरो जपित्वा यजमानः प्राङ्मुखीं कन्यां प्राङ्मुखाय वराय काँस्यपात्रस्थितोदकधारया स्त्रीदत्तयामुकप्रपौत्रीं अमुकपौत्रीं अमुकपुत्रीम्, अमुकप्रपौत्राय अमुकपौत्राय अमुकपुत्राय अमुकवेदिने अमुकशर्मणे इत्यादि प्रकारेण दत्त्वा श्रीलक्ष्मीपतिः प्रीयतामिति यजमानेनोक्त्वा स्वस्तीति वरेणोक्ते—

'धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयमि'ति यजमानोक्तयनन्तरं वाढं नातिचरामीति वरेणोक्ते वृद्धनारीभिः आम्रसिञ्चनादिकं विधाय ततो वरस्तां वधूं वामकरे धृत्वा बहिरागत्य अनेनानुदन्ती पूर्णकुम्भमानीय अघोरचक्षुरित्यादिभिः मन्त्रैः परस्परं समीक्ष्य दक्षिणचरणेन वेदिकामारुह्य वधूंच दक्षिणभागे उपवेश्य होमं कुर्यात् । तत्र सूत्रमन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वंप्रायश्चितं प्राजापत्याष्टभृतः प्रयास्यतानामिति पूर्वोत्तरावाघारौ द्वावाज्यभागौ एक आग्नेयः, एकः सौम्य इति भूर्भुवःस्व इत्येताः महाव्याहृतयः 'त्वन्नो अग्न' इति सर्वप्रायश्चित्तं 'प्रजापतिर्देवतास्येति' प्रजापत्यो होमः 'अग्नये स्विष्टकृते स्वाहा'इति अयं हि स्विष्टकृत् होमो महाव्याहृतिहोमात् प्रागेवानुष्ठेयः । इन्धन् विवाहे जुहोतीति राष्ट्रभृतः । चित्तञ्च चित्तिश्चेत्यादिप्रजापतिर्जयानिन्द्रायेत्येव मन्त्रा जयाः, तदपरे अभ्याता इति ।

चित्तं चित्तिमपाकूत आकूतन्तदनन्तरम् ।
विज्ञातञ्चैव विज्ञाति मनश्च च्छक्वरीस्तथा ।
दर्शञ्च पौर्णमासश्च बृहतं च रथन्तरम् ।
प्रजापति घृतेनैता जयाख्यास्तास्त्रयोदश ।

अथाभ्यातान् यथालिङ्गं अग्न्याश्चाद्यो (?) घृतेन तु।
अत्राधिपतिसंयुक्तं ज्ञेयं तद्देवतापदम्।
अग्निमिन्द्रं यमं वायुं सूर्यं चन्द्रमसं तथा।
क्रमाद् बृहस्पतिं मित्रं वरुणं च समुकद्रम्।
अन्नं सोमं सवितारं रुद्रन्त्वष्टारमेव च।
विष्णुश्च मरुताश्चैव विश्वेशोधिपतीनिति।
साम्राज्यानामधिपतिः स्यान्नपुंसकलिङ्गतः।
पितॄन् पितामहांश्चाथ परानप्यवरांश्च तान्।
मातामहःत्रिरग्निञ्च वैवस्वतमनुस्मरेत्।
मृत्यवे च ततो जालैस्त्रीरग्निश्च भगं सकृत्।
प्रजापतिमथाज्येन स्मरेत् स्विष्टकृतन्तथा।
मृत्युं वाङ्गप्रदानार्थं अहं वक्ष्येऽत्र देवताः।
विष्णुशर्मविवाहाङ्गहोमं करिष्य इत्यतः।
तत्र मे त्वम्भव ब्रह्मा भवामीति वृतो वदेत्।
ब्रह्मोपवेशनायाज्यभागान् चौलिककर्मकृत्।
पवित्रादिव जातानि सादयित्वा प्रकल्पयेत्।
सूर्ये लाजान्समीपर्णमिश्रिता दृषदन्तथा।
रङ्गञ्चानडुहं चर्म आचार्याय वरं तथा।
कर्त्ता दुहितृमांश्चेत्स्याद् द्रव्याधिकशतं गवाम्।
जुहुयादाज्यभागान्ते तिस्रस्थालीघृताहुतीः।
व्याहृतीभिस्ततः पञ्च त्वन्न इत्यादि पञ्चभिः।
ततो राज्यभृतस्थाली घृतेन• द्वादशाहुतीः।
प्रतिमन्त्रमृताषीत्यादौ द्वादशमिश्रितौ।
अभाणिभाष्यकारेण राज्यभृन्मातृलक्षणम्।
तेनैवाज्येन चित्तं च स्वाहा ज्यात्यो जुहोत्यथ।

अत्र कश्चित् चित्तंञ्च चित्तिश्चेत्यत्र नमः स्वस्ति स्वाहेति पाणिनीय-स्मृत्या चतुर्थ्या भवितव्यमिति।

मैवम्; स्यादेतद्यदीयं देवतापदानि स्युः। तदा सम्प्रदानतया चतुर्थी स्यात्।

नन्वेवं किन्त्वेते मन्त्रास्तेषाञ्च यथाम्नातानामेव प्रयोगभावात्। तदुक्तम् भाष्यकारैः—नह्येतानि देवतापदानीति। तथोक्तम्—

अत्र प्रयोगमिच्छन्ति चतुर्थ्यन्तेन केचन।
न देवता पदानि स्युः भाष्यकारैः यतः स्मृता।
ब शब्दो राष्ट्रभिस्तु संयोगार्थं समीरितः।
यथैते कर्मणे ऋद्धिं तथैताञ्जुहुयाज्जयाः।
अतोऽन्यत्र जयाहोमः कर्त्तव्यो भूतिमिच्छतेति।

तत्राभ्यात-जयाहोमयोर्विकल्पः। तथोक्तम्।

अभ्यातानां जयानां च होमो वैकल्पिको भवेत्।
जान छन्दो विकल्पार्थः सूचितः कतिसूनुना।
द्वाविंशतिराख्याता जुहुयाच्च घृतेन ताः।
अग्निर्भूतानामित्याद्या च सप्तदशस्वपीति।

तथा

वधूभ्राताञ्जलौ तान् लाजानञ्जलिना वपेत।
तिष्ठन्त्या तिष्ठतापत्या गृहीत्वाञ्जालिनैव सा।
जुहोत्यर्यमणं देवं नित्याद्यैस्त्रिभिरेव तान्।
अञ्जलिस्थान् त्रिधा सर्वान् प्राङ्मुखी प्रतिमन्त्रतः।
प्राजापत्येन तीर्थेन दैवतीर्थेन बहवृचाम्।

ततो गृभ्णामीति सोमत्वाय हस्तमिति मन्त्रेण दक्षिणकरेण दक्षिण-करतो गृहीत्वाग्नेरुत्तरतोऽदक्षिणेन वधूचरणं दक्षिणं गृहीत्वा शिलामारोहयेत्।

तदुक्तम्।

सव्यमादाय हस्तेन वधूपादन्तु दक्षिणम्।
शिलामारोहयेत्प्रागायतं दक्षिणपाणिना।
आरोहेम ममुंचंतु मुक्त्वा गाथां स गायति।
सरस्वत्यादिकं तिष्ठन् वर एवाऽकारतः।
पुनर्हस्तं समादाय दक्षिणेनैव दक्षिणम्।
तौ परिक्रामतस्तुभ्यमग्ने पर्यध्वमिति।
एवं द्विरपरं (तत्र) लाजाहोमादिकं भवेत्।
आवपत्यखिलान् लाजान् चतुर्थे शूर्पसृष्टया।
लाजान् जुहोति भगायेति सर्वस्यैव सकृत्तमः। इति

ततश्च तुभ्यमग्ने पर्यवहन्नित्यनेन मन्त्रेण द्विरपरं लाजादि चतुर्थं शूर्प-सृष्टया सर्वान् लाजान् वपति भगाय स्वाहेति त्रिः परिणीती प्राजापत्यं जुहुयात्।

**ततःसप्तपदी**। सप्त पदान्यनुक्रामति। एकमिषे विष्णुस्त्वा नयतु, द्वे उर्जे—विष्णुस्त्वा नयतु, त्रीणि रायस्पोषाय, चत्वारि मयोभवाय, पञ्च पशुभ्यः, षड् ऋतुभ्यः, सखे सप्तपदा भवेति। एवं सप्तभिर्मन्त्रैरभिषिच्य वधू आपःशिवाः शिवतमाःइति आपोहिष्टाइति त्र्यृचेन नय, सूर्यमुदीक्ष्यस्वेत्युक्त्वा ततः स्विष्टकृदा-ज्याहुतीर्हुत्वा संस्रवप्राशनं कृत्वा चतुर्वर्षी गामाचार्याय दद्यात्ततो स्तिमिते सूर्ये वरो ध्रुवा द्यौ ध्रुवेति मन्त्रेण ध्रुवं दर्शयेत्। सायमपि न पश्यति त तथापि पश्यामीत्येवं वदेत्। ततोऽधः शय्यायामेव निद्रा, वर्षं ब्रह्मचर्यञ्च। ततः चतुर्थ्या-मपररात्रे विवाहाऽग्नौ दम्पती कुथ उपविश्य तत्रापि बधूं दक्षिणतः उपवेश्य विवहांगचतुर्थीकर्माहं करोमीति संकल्प्य गृहाभ्यन्तरतोऽग्निमुपसमाधाय ब्रह्माणञ्च दक्षिणतः उपवेश्य उदपात्रमुत्तरतः प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वा आज्यभागादि कर्म कुर्यात्। तत्र ऋषिदैवतच्छन्दांसि अग्न इत्यादिपञ्चमां परमेष्ठी ऋषिः लिङ्गोक्ता देवता त्रिष्टुप्छन्दः·······इत्यादि प्रजापति ऋषि वधूरेव······तथोक्तं।

ज्ञप्त्यै कर्मस्वरूपस्य स्मरेद् द्रव्यञ्च देवताम्।
आघारावाज्यभागान्ते स्मरेदाज्यञ्च देवताः।
अग्निं वायुं ततः सूर्यं चन्द्रं गन्धर्वमेव च।
प्रजापतिञ्च वरुणं विशेषात् स्विष्टकृतं स्मरेत्।
नवाहुतीरथाज्येन भूराद्या षोडशैव तु।
एनानङ्गप्रधानार्थानहं वक्ष्येत्र देवताः ॥ ६ ॥

यथाह शौनकः —

विवाहानन्तरं गच्छेत्स्वभार्या स्वस्य मन्दिरम्।
यदि ग्रामान्तरे गच्छेत्तस्य योगेन गम्यते। इति।

आपस्तम्बोऽपि—

तां ततः प्रवाहयेत् प्रवाहीश्येत समाप्येतमग्निमनुहरन्तीति ॥

यस्यार्थः। प्रणीताविमोकब्रह्मोद्वासनपात्राविमोकान्तं कृत्वा तां वधू प्रवाहयेदश्वेन रथेन वा। प्रवाहयेन्मनुष्ययानेन समेथभाण्डे निधायाग्निमनु-

हरन्त्याग्नेरव्यवाये न वधूः पुरो नीयत अयमौपासनाग्निः यावज्जीवं धार्यं इति। अतः ऊर्ध्वं गृह्यकविधिना प्रवेशहोमं कुर्यात्।

**अथोपासनहोमक्रमः**। तत्र बोधायनः। अथ

यस्मिन्नह्नि विवाहाग्निरुत्पन्नोऽहनि तस्य तु।
सायं च तत आरभ्य वह्निं परिचरेत्स्वयम्।
रात्रौ विवाह उत्पन्ने वह्निं परिचरेत्तदा।
रात्रावतीतकालश्चेत् स्वः सायं तदुपक्रमः।

अथैव विशेषमाह बोधायनः—

चतुर्थीहोममध्ये तु जायते यदि पौर्णिमा।
तथापि यागः कर्त्तव्यो अन्वाधानपुरस्सरः।

औपसनोत्यधिकालादूर्ध्वमित्यर्थः।

विवाहदिनमारभ्य चतुर्थी हि तिथिर्भवेत्।
तस्यां नागबलिः कार्यो विप्राशीर्वचनं तथेति।
विवाहेऽहनि निर्वृत्ते चतुर्थेऽहनि रात्रिष्विति।

## अथतृतीयविवाहप्राप्तावर्कविवाहविधिः

शौनकः—

तृतीये यस्य संप्राप्ते विवाहे पुरुषस्य तु।
अर्कविधानं वक्ष्यामि शौनकोहं विधानतः।
अर्कसन्निधिमागत्य ततः स्वस्त्यादिकं चरेत्।
नान्दीश्राद्धं प्रकुर्वीत हिरण्येन विधानतः।
अर्कमभ्यर्च्य सौर्या च समन्तारब्ध एव सन्।
अर्कस्योत्तरदेशे तु स्थण्डिलं कारयेद् बुधः।

आज्याहुतीश्च जहुयात्। सङ्गोभिरनया ऋचा सङ्गोभिराङ्गिरस्य इत्यस्य रूपयास्यो बृहस्पतिस्तृष्टुप् यस्मै त्वं कामकामयेत्पृचा वा ततः। परां यस्मै त्वमित्यस्य वामदेवोग्निस्त्रिष्टुप्!

व्यस्ताभिश्च समस्ताभिः सप्तमी स्विष्टकृद्भवेत् ।
गोयुग्मं दक्षिणा देया श्रोत्रियाय कुटुम्बिने ।
एवं कृत्वा च वस्त्राणि त्यक्त्वान्यानि तु धारयेत् ।

तृतीयविवाहजनितसर्वारिष्टपरिहारार्थं शौनकोक्तविधानेनार्कविवाहं तदङ्गभूतं स्वस्तिवाचनं नान्दीमुखमर्कपूजां करिष्ये ।

**इति शौनकीये अर्कविधानं समाप्तम् ।**

**अथ द्वितीयविवाहनिमित्तानि स्मृतिसारे ।**

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् । स्मृतिभास्करे ।
साधिता स्त्रीप्रजा वन्ध्या उन्मत्ता विगतार्त्तवा ।
अदुष्टा लभते त्यागं तीर्थतो न तु धर्मतः ।

तीर्थतो योनितः ।

एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थस्तोषयित्वार्थैः पूर्वोढामपरां वहेत् ।

याज्ञवल्क्यः —

या रोगिणी स्यात्तुहिता संपन्ना चैव शीलतः ।
सानुज्ञाप्याधिवेतव्या नावमान्या तु कर्हिचित् ।

कात्यायनः —

अग्निशिष्टादिशुश्रूषां बहुभार्यः सवर्णया ।
कारयेत्तद्बहुत्वे च ज्येष्ठा या गर्हिता न चेत् ।

अग्नीनां शुश्रूषा दर्शपूर्णमासादीनि कर्माणि, शिष्टादि शुश्रूषा अतिथ्यभ्यागतादिपूजा अनेनान्येपि गृहमेधीयधर्मा उच्यन्ते । तदेतत्सर्वं सवर्णयैव भार्यया कारयेत् ।

अनेकसवर्णभार्यायुक्तस्तु ज्येष्ठया कारयेत् । यदि सासन्निहिता भवेत्तर्हि अन्यया कारयेत् । एवं ज्येष्ठभार्ययैव कर्त्तव्येऽग्निपरिचरणे सहाधानकाले सहादिकृतज्येष्ठभार्याविषयं शौनकेन तावदयं संसर्गविधानेनैव सर्वासामधिकार उक्तः स्मृतिभास्करे । कात्यायनः प्रथमपत्नीं प्रशंसति—

प्रथमाधर्मपत्नी स्याद् द्वितीया रतिवर्धिनी ।
दृष्टमेव फलन्तत्र नादृष्टमुपपद्यते ।
अन्यजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयंत्याशु ससंतानानि शूद्रताम् ।

कात्यायनः —

सदारोन्यान्पुनर्दारानुद्वोढुं कारणान्तरात् ।
यदीच्छेदग्निमान् कुर्वन् क्व होमोऽस्य विधीयते ।
स्वाग्नावेव भवेद्धोमो लौकिके न कदाचनेति ।

यदुक्तं तत्प्राक्तनगृह्याग्नौ कर्त्तव्यमित्येवं परन्तु सर्वथा लौकिकाग्नौ न कर्त्तव्यमिति ।

ब्रह्मचर्यं समाप्यैकां भार्ययोर्द्वितयन्तथा ।
तृतीयां नोद्वहेद विप्र इति धर्मकृतो विदुः ।

## अथाग्निद्वयसंयोगविधिः ।

अत्राग्नेर्द्वितीयाग्निना सर्गविधिः–प्राणानायम्य तिथ्यादिकं संकीर्त्य आत्मनः भार्याभेदनिमित्तवशाज्जातयोः द्वयोरग्न्योः पृथग्भूतयोः सम्मेलनयोग्यतासिध्यर्थं शौनकाद्युक्तप्रकारेण होमं करिष्ये। तदर्थमुपलेपनाद्यग्निप्रतिष्ठापनं करिष्ये। ततः स्थण्डिले पृथग्विधायाग्निं प्रतिष्ठाप्य पुनः संकल्प्य तदङ्गमन्याधानं करिष्य इति संकल्प्य इत्यादिचक्षुषी आज्येनइत्यन्तमुक्त्वाग्निं प्रधानदेवतामाज्येनैव प्रतिज्ञातकर्मणा सद्यो यक्ष्ये व्याहृतीनां इत्यादि। एवमाज्यभगान्तं कृत्वा पूर्व-पत्न्यग्नौ तया समन्वारब्धः 'अग्निमीले' इति नवर्चेन सूक्तेन नवाज्याहुतीर्हुत्वा समिध्यग्निं समारोपयेत्। शौनकोपि—

पृथक् स्थाण्डिलयोरग्नी समाधाय यथाविधि ।
तन्त्रं कृत्वाज्यभागान्तमन्वाधानादिकं ततः ।
जुहुयात्पूर्वपत्न्यग्नौ तयान्वारब्ध आहुतीः ।
अग्निमीले पुरोहितमिति सूक्तेन नवर्चेन तु ।
समिध्येनं समारोप्य अयन्ते योनिरित्यृचा ।

अग्निमीले इति नवर्चस्य सूक्तस्य वैश्वानरो मधुच्छन्दाग्निर्गायत्री। प्रधानाज्य होमे ततः कनिष्ठाग्नौ प्रत्यवरोपयेत्। प्रत्यवरोहेति मन्त्रेण आचमनादि कृत्वा

पत्नीभ्यां समन्वारब्ध आत्मनः भार्याभेदनिमित्तवशाज्जातयोर्द्वयोरग्न्योः पृथग्भूतयोः संमेलनसम्भारयोरेकाग्नित्वसिद्ध्यर्थं शौनकाद्युक्तमार्गेण होमं करिष्ये इत्यादिचक्षुष्यंतमुक्त्वा षड्वारं अग्निप्रधानदेवतां च चतुर्गृहीताज्यद्रव्येण शेषेण स्विष्टकृतमित्याज्यभागान्तं कृत्वा अग्नावग्निश्चरति अग्निनाग्निः समेध्यते। अस्तीदतमधिमं नमिति। तिस्रःपाहि नो अग्न एकयेत्येका एतैः षड्भिमन्त्रैराज्याहुतीर्हुत्वा स्विष्टकृदादिसमापयेत्।

शौनकोऽपि--

प्रत्यवरोहेत्यनया कनिष्ठाग्नौ निधाय तम्।
आज्यभागान्तन्त्रादिकृत्वारभ्य तदादितः।
समन्वारब्ध एताभ्यां पत्नीभ्यां जहुयाद्धृतम्।
चतुर्गृहीतमेताभिः ऋग्भिः षड्भिर्यथाक्रमम्।
अग्नावग्निश्चरतीत्यग्निनाग्निः समिध्यते।
अस्तीदमिति तिसृभिः पाहि नो अग्न एकया।
ततःस्विष्टकृदारभ्य होमशेषं समापयेत्।
गोयुग्मं दक्षिणा देया ब्राह्मणायाहिताग्नये।
अग्नावग्निश्चरति प्रविष्टः ऋषीणां पुत्रोधिराज एष।

तस्मै जुहोमि हविषा घृतेन भावानामो मुहगधेयस्वामित्यस्य मधुछन्दोग्नागायत्रीप्रधानाज्यहोमे। अस्तीदमधिमन्थनेति तिसृणां विश्वामित्रोऽग्निरनुष्टुप् अन्त्ये द्वेऽनुष्टुभौ। पाहि नो अग्न एकयेत्यस्य प्रागाथाग्नीर्हती। प्रधानाज्यहोमम् एवं समाप्य ब्राह्मणान् भोजयेत्।

**इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्गप्रवर्त्तक सकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाह समस्त साम्राज्यधुरन्धर श्रीमन्महाराजाधिराज दलपतिराजविरचिते श्री नृसिंहप्रसादे संस्कारसारे विवाहप्रकरणे अग्निद्वयसंयोगविधिः।**

## अथ वधूप्रवेशः

अथ उद्वाहप्रसङ्गाद्दूढाया पतिगृहप्रवेशावसरकालमाह—तत्र कालदीपे-
एवं स्थिरांशे पतिवेश्मवेशने शुक्रो पुरो वा गमने न शस्यते ।

गव्यूतिहीने त्वथ नैव निर्गमाभ्यासे दिने वा नवमे पुनर्विशेत् । इति ।

एवमित्युद्वाहकालं परामृशति । गव्यूतिरर्धयोजनं केचिद् द्वादशयोजनादधिकाच्च गमनेऽपि प्रतिशुक्रदोषो न भवतीत्याहुः ।

आगव्यूते दशयोजना परे च प्रतिवामगते दोषः शुक्रस्थित्या न विशः, इति ।

बृहस्पतिः—

वृषांशकोदये सर्वप्रवेशो नभसः सदा ।
चरेषूदयांशा स्यात् सुशोभन इति ।

अथ प्रतिशुक्रगमनस्य क्वचिदपवादमाह—

भार्गवस्य वशिष्टस्य कश्यपाङ्गिरसोरपि ।
भारद्वाजस्य वत्सस्य प्रतिशुक्रं न विद्यते ।
विवाहे तीर्थयात्रायां दुर्भिक्षे राजविग्रहे ।
एकग्रामे चतुःशाले प्रतिशुक्रो न विद्यते ।
स्वभवनात् पुनःप्रवेशे देशानां विप्लवे तथोद्वाहे ।
नूतनवध्वा गमने प्रतिशुक्रविचारणा नास्ति ॥

अन्यत्रापि—

शितमत्वं ? शितं वस्त्रं तारमौक्तिकहेमयुक् ।
दत्त्वा द्विजातये यायात्प्रतिशुक्रेऽप्यशङ्कितः ।

अथवा शुक्रबृहस्पत्युक्तस्तोत्रजपः कार्यः ।

दैत्यमन्त्री दिवादर्शी उशना भार्गवस्तथा ।
वैतोऽथ मण्डली काव्यो मन्तिमान्निगमस्तथा ।
पूतानि नव नामानि प्रातरुत्थाय यः जपेत् ।
प्रतिशुक्रो न तस्यास्ति लक्ष्मीमायुश्च विन्दति ॥

**इति श्रीमन्महाराजाधिराजदलपतिराजविरचिते नृसिंहप्रसादे संस्कारसारे पतिग्रहप्रवेशः ।**

## अथ संवेशनकालः

**संवर्त्तः संवेशनकालमाह—**

चतुर्थे दिवसे प्राप्ते चतुर्थीं होममाचरेत् ।
पर्वाष्टमी च जन्मर्क्षे हुत्वा तत्रैव संविशेत् ।
तदभावे विवाहोक्तग्रहधारोदयादिषु ।

कालदीपोऽपि—

संविशेच्चतुर्थे दिने चतुर्दशीपर्वाष्टमे संक्रमजन्मवर्जिते ।
कन्या विनैवं तदसंभवेद् व्रजेदुद्वाहकालाद्धरिवासरेऽपि ।

चतुर्थे दिने पाणिग्रहणाच् चतुर्थींदिने तदसम्भवे विवाहोक्तनक्षत्रे तिथिवारलग्नादौ संविशेत् ।

## अथ द्विरागमनम्

**अथ समाचारप्राप्तद्विरागभने शुभकामादि ।**

**देवलः—**

आकांक्षेताष्टवर्षाणि भर्त्ताऽति प्रसवां प्रियाम् ।
दश वन्ध्यां च निंद्यां च द्वादशे स्त्रीप्रसूतिनीम् ।
ततो विन्देत विधिना पुत्रार्थी धर्मतः स्त्रियम् ।
पुत्रलाभात्परं लोके नास्ति हि प्रसवा हिताः ।

अतिप्रसवो प्रसवः । पुष्टा रजसः । तद्योगात्कालमतिक्रान्तां तां निषिध्य त्रिरात्रायुक्ता । प्रसवाः फलानि तैः पु[illegible]ाः ।

एकामूढ्वा तु कामार्थमन्यां लब्धु य इच्छति ।
समर्थः तोषयित्वार्थैः पूर्वोढामपरां वहेत् ।

अष्टादशक लप्रती[illegible]ाविकल्पो वयः शक्त्यपेक्षया व्यवस्थितो बोद्धव्यः ।

समर्थस्तोषयित्वार्थैरित्यत्रार्थैरित्युपलक्षणम् । अतः उपायान्तरेणापि आपरितोषनीया येषु तु अधिवेदननिमित्तेषु न कालविशेषः श्रूयते, तेषु यावताकालेन तद्दोषनिश्चयो भवति तावत्प्रतीक्षते ।

तत्र सुरेश्वरः—

वैशाखे सुभगा प्रसूतवविनी मार्गे च पुत्रान्विता ।
फाल्गुने प्रियवल्लभा प्रियतमा नित्यप्रिया पुत्रिणी ।

वन्ध्यानिर्धनदुर्भगाविरहिणी सोद्वेगतामित्यसौ ।
नूनं देवसमापि दुःखमतुलं लेभेऽप्यमासेऽङ्गना ।
मार्गफाल्गुनवैशाखे शुक्लपक्षे शुभे दिने ।
गुर्वादित्यविशुद्धौ स्यान्नित्यपत्नीससंगमः ।

तत्र मनुः—

मद्यमांसप्रवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिताप्यधिवेतव्या हिंस्रार्थघ्नी च सर्वदा ।

मद्यपेति–यद्यत् वापि निषिद्धं मद्यं तत्तत् परित्यज्य परिणेयाभिधीयते । असत्यवृत्ता असदाचारा प्रतिकूला भर्तुरनिष्टकारिणी, हिंस्रा पुत्रदास्यादिनाकुला । अर्थघ्नी उपेक्षादिना अर्थविनाशकारिणी । अधिवेदनं भार्यान्तरपरिग्रहः ।

बादरायणः—

नीहारासुधनोत्तरादितिगुरुत्वाष्ट्रानुराधाश्विनी ।
शक्रो भास्करवायुविष्णुवरुणत्वाष्ट्रेति शस्ते तिथौ ।
कुम्भाजानिगमेगते सुमकरे प्राप्तोदये भास्करे ।
जीवारास्यजितादिने नववधूसद्यः प्रवेशः शुभः ।
भर्तुः शोभनगोचरे हिमकरे नास्तङ्गते भार्गवे
सूर्ये कीटघटाजगे शुभदिने पक्षे तु कृष्णेतरे ।
हित्वा दीधितिशीतगूर्बुधसितौ लालाटगे दिक्पता-
वानीता गुणशालिनी नववधूर्नित्योत्सवैर्नन्दते ।
पूर्वतोऽभ्युदिते शुक्रे प्रयायाद्दक्षिणापरे ।
पश्चादभ्युदिते चैव प्रायात्पूर्वोत्तरे दिशि ।
स्वभवनपुरप्रवेशे देशानां विप्लवे तथोद्वाहे ।
नववध्वागृहगमने प्रतिशुक्रविचारणा नास्ति ॥६॥

इति श्रीमन्महाराजधिराजदानपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे विवाहप्रकरणे द्विरागमनम् ॥

## अथाधिवेदनम्

याज्ञवल्क्यः —

अधिविन्ना तु या नारी निर्गच्छेद् दूषिता गृहात् ।
सा सद्यः सन्निरोधव्या त्याज्या वा कुलसन्निधौ ।

मनुः —

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्तेत्वर्द्धं प्रकीर्त्तितम् ।

अधिवेदनिकम् अधिवेदनप्रयोजनमलङ्करणादि यस्यै पूर्वं विवाहादि स्त्रीधनमलङ्कारादि न दत्तं तस्यै समं दातव्यम् । पश्चादूह्यमाना यावदादीयते तावदित्यर्थः । दत्ते तु पूर्वमेवालङ्कारादिके दत्ते अर्धम् । अत्रार्धशब्दोंशमात्रपरो, न तु समांशपरः । पूर्वस्यैव दत्तमलङ्कारादिकं नवोढालंकारान्न्यूनं चेद्यावता तत्साम्यं भवति । तावद्दातव्यमित्यर्थः ।

मनुः —

अधिविन्ना तु भर्त्तव्या महदेनोन्यथा न चेत् ।
यत्रानुकूल्यं दम्पत्योः त्रिवर्गस्तत्र वर्द्धते ।

याज्ञवल्क्यः—

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिपूतामधःशय्यां वासयेद् व्यभिचारिणीम् ।

अत्र विशेषमाह याज्ञवल्क्यः —

चतस्त्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ।

जुंगितः प्रतिलोमजः ।

इत्याधिवेदनम् ।

अथस्त्रीधर्माः ॥

तत्रादौ तासामवश्यरक्षणीयत्वं प्रदर्श्यन्ते —

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगृहवासश्च स्त्रीणां वै दूषाणानि षट् ।

नैता रूपं प्रतीक्षन्ते तासां वयसि संस्थितिः ।
सुरूपं वा कुरूपं वा पुंमानित्येव भुञ्जते ।
एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति ।

शय्याशनमलङ्कारं कामक्रोधमनार्जवम् ।
द्रोहभावं कुकार्यञ्च स्त्रीभ्यो मनुरकल्पयत् ।
यादृग्गुणेन भर्त्ता स्त्री प्रयुञ्जेत यथाविधि ।
तादृग्गुणानुसारेण समुद्रेणेव निम्नगा ।

तत्र मनुः —

प्रजनार्थं महाभागां पूजार्हां गृहदीक्षया ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ।
उत्पादनमजातस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रा च प्रत्यक्षं स्त्रीनिबन्धनम् ।
अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितृणामात्मनस्त्विह ।
तस्माद् यत्नेन रक्षेत भर्त्तव्या मनुरब्रवीत् ।
अस्वतन्त्रा स्त्रियः कार्या पुरुषैश्च दिवानिशम् ।
विषयेषु तु मज्जन्त्यः संस्थाप्या ह्यात्मनो वशे ।
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्राः रक्षन्ति वार्धक्ये न स्वातन्त्र्यं क्वचित्स्त्रियः ।
सूक्ष्मेभ्योपि प्रमादेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ।

अथ रक्षोपायः ।

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैश्च शक्यास्ताः परिरक्षितुम् ।
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्तेश्च परिग्राहस्य रक्षणे ।

**अथस्त्रीकर्त्तव्यधर्माः ।**

तत्र याज्ञवल्क्यः—

संयतोपस्करा दक्षा पुष्टा व्ययपराङ्मुखी ।
कुर्यात्श्वसुरयोः पादवन्दनं भर्तृतत्परा ।
स्त्रीभिर्भर्तृवचः कार्यमेव धर्मपरा स्त्रियः ।
आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः ॥

तत्र मनुः—

बल्यौवनवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित्कार्यं गृहेष्वपि ।
पित्रा भर्त्रा सुतेनापि नेच्छेद्विरहमात्मनः ।
एषां हि रहितेन स्त्री गर्हिता स्याद् कुलद्वये ।
सदा प्रतिष्ठया भाव्यं गृहकार्ये च दक्षया ।
संस्कृतोपस्करया वा व्यये वामुक्तहस्तया ।

स्कन्दे —

प्रसुप्तं तु सुखासीनं रममाणं यद्दृच्छया ।
आतुरेष्वपि कार्येषु पतिं नाज्ञापयेत् क्वचित् ।
स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् ।
स्ववाक्यं श्रावयेद्वापि यावत् स्नाता न शुद्ध्यति ।
सुस्नाता भर्तृवदनमिक्षेन्नान्यस्य कस्यचित् ।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ।
हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकं च ताम्बूलं मङ्गल्याभरणं शुभम् ।
केशसंस्कारकबरीकरकर्णविभूषणम् ।
भर्तुरायुष्यमिच्छन्ती दूरयेन्न क्वचित् सती ।
न रजक्या न कारुक्या तथा श्रमणयापि वा ।
न च दुर्भगया वापि सखित्वं कुरुते तु सा ।
भर्तुर्विद्वेषणीं नारीं न सम्भाषेत कर्हिचित् ।
नैकाकिनी क्वचिद् भूयान्न नग्ना वापि वै क्वचित् ।
नोलूखले न मूसले न वर्द्धन्यां दृषद्यपि ।

न यंत्रके न देहल्यां न स्त्रियोपविशेत् क्वचित् ।
उक्ता प्रत्युत्तरं दद्याद्या नारी क्रोधतत्परा ।
सा शुनी जायते ग्रामे शृगाली निर्जने वने ।
अपवादो न वक्तव्यः कलहं दूरतस्त्यजेत् ।
गुरूणां सन्निधौ क्वापि न ब्रूयान्न च वा हसेत् ।
ताडिता ताडितुं चेच्छेत्सा व्याघ्रीव कदंशिका ।
कटाक्षैर्वीक्षते या तु भर्त्तारं कुपिता दिवा ।
केकराक्षी तु सा नूनं भवेद्वै नात्र संशयः ।
भर्त्तारं वा समुत्सृज्य मिष्टमश्नाति केवलम् ।
ग्रामे वा सूकरी सा स्याद् गर्दभी वास्य विष्टिभुक् ।

मनुः —

विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
उपचर्यः स्त्रिया भर्त्ता सततं देववत्पतिः ।
नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नास्त्युपोषणम् ।
पतिं संसेवते या तु तेन स्वर्गे महीयते ।
पत्यौ जीवति या नारी उपोष्य व्रतचारिणी ।
आयुष्यं हरते भर्त्तुः नरकं चाधिगच्छति ।
सेह कीर्त्तिमवाप्नोति मोदते चोमया सह ।

शङ्खः —

नानुक्ता गृहान्निर्गच्छेत् । न त्वरितं व्रजेत् । न परपुरुषञ्च सम्भाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यः । न नाभिं दर्शयेत् । आगुल्फाद्वासः परिदध्यान्नस्तनौ विवृतौ कुर्यात् । न हसेदपावृत्तं, न भर्त्तारं तद्बन्धून् वा द्विष्यात्, न गणिकाधूर्त्ताभिचारिणिप्रव्रजिताप्रेक्षिणिकामायामूलकुहकानुकारिका दुःशीलादिभिः सहैकत्र तिष्ठेत् । संसर्गेण चारित्रं हि दुष्यतीति । अयञ्च सकलस्त्री-धर्मो विवाहादूर्ध्वं वेदितव्य इति ।

अथपतिव्रताविशेषधर्माः ।

हारीतः —

मातृकं पैतृकं चैव पत्युश्चैव प्रदीप्यते ।
कुलत्रयं पुनात्यत्र भर्त्तारं यानुगच्छति ।

अयञ्च सर्वासां स्त्रीणां पतिव्रतानाङ्गर्भिणीनां बालापत्यानामाचाण्डालं साधारणो धर्मः, अपतिव्रतानामनधिकारात् ।

ननु च अपतिव्रतानामप्यधिकारोनुगमने श्रूयते ।

तथा च महाभारते ।

अवमत्य भयात्पूर्वं पतिदुष्टेन चेतसा ।
वर्त्तन्ते याश्च सततं भर्तृकं प्रतिकूलताः ।
भर्त्ता तु भरणं काले याः कुर्वन्ति तथाविधाः ।
कामक्रोधाद्भयान्मोहात्सर्वा पुंसा भवन्त्युत ।
आदिप्रभृति या साध्वी पत्युः प्रियपरायणा ।
ऊर्द्ध्वं गच्छति या तत्र भर्त्रा तु मरणं गतेति ।

नैतत्सारम्, ऊर्द्ध्वशब्दश्रवणात् । सर्वाः पूता भवन्त्युतेति । पत्यवमानकर्यादीनामपि पापक्षयोस्ति किमुत आदिप्रभृति या साध्वी तस्याः पापक्षयः परलोकश्च विद्यत इति । साध्या उत्तमलोकप्राप्तिविधायकवाक्यशेषत्वेन स्तावकत्वेनापि चरितार्थत्वात् । साधारणधर्मत्वञ्च भर्त्तारं यानुगच्छतीत्यविशेषोपादानादवगम्यते । यानि च ब्राह्मण्यनुगमननिषेधपराणि पैठीनस्यंगिरःप्रभृतीनां वाक्यानि—

मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् ।
या स्त्रीब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् ।

इत्येवमादीनि तानि पृथक् चितिविषयाणि ।

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासाञ्चैव नारीणां स्त्रीधर्मो यः परःस्मृतः ।

इत्युशनसा विशेषस्मरणात् । इदं चात्यारोहणमनित्यं अन्वारोहणस्य स्वर्गफलयुक्तत्वेन काम्यत्वात् । अतएव विकल्पमाह स विष्णुः—मृते भर्त्तरि ब्रह्मचर्यं चात्यारोहणं चेति ।

देशान्तरमृते पत्यौ ब्राह्मण्यास्तु तदस्थिभिः सहानुगमनं भवत्येव । इतरासान्तु अस्थ्यभावेऽपि पतिपादुकादिकं चिह्नं किमपि गृहीत्वा चिह्नाभावेपि भवति पृथक् चित्यनुज्ञानात् ।

ननु च पतिव्रतायाः इदमनुगमनं नित्यमेव । तथा च हारीतः—

कन्यां विवाहसमये वाचयेयुरिति द्विजाः ।
भार्या सहचरी भूया जीवताजीवतापि वा ।

भर्त्ता देवो गुरुर्भर्त्ता तीर्थदेवव्रतानि च ।
तस्मात्सर्वं परित्यज्य पतिमेकं समर्चयेत् ।

भुक्ते भुङ्क्ते पतौ या तु ह्यासीना चापि चासिते ।
विनिद्रिते विनिद्राति प्रथमं परिबुध्यते ।

अनलङ्कृत्य चात्मानं पत्युर्न दर्शयेत् क्वचित् ।
कार्यार्थे प्रोषिते पत्यौ सर्वमण्डनवर्जिता ।
नच तन्नाम गृह्णीयात् तस्यायुष्यविवृद्धये ।
पुरुषान्तरनामापि न गृह्णाति कदाचन ।

आक्रुष्टापि न चाक्रोशेत् ताडितापि प्रसीदति ।
इदं कुरु कृतं स्वामिन् मन्यतामिति न क्वचित् ।
आहूता गृहकार्याणि त्यक्त्वा गच्छति सत्वरम् ।
पूजोपकरणं सर्वमनुक्ता शोधयेत् स्वयम् ।

नियमोदकवह्नीव पत्रपुष्पाक्षतादिकम् ।
सेवते भर्तृरुच्छिष्टमिष्टमन्नं फलादिकम् ।
महाप्रसादमित्युक्त्वा प्रतिदत्तं प्रतीक्षति ।

तत्र मनुः —

आर्त्तेऽर्त्ता मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया प्रतिव्रता ।

अत्र मृते या म्रियेत पतिव्रतेत्यनेन नित्यत्वं द्योत्यते । अतो अनित्यत्ववर्णनमयुक्तमिति चेन्, मैवं ।

मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः । इति ।

मनुना—पतिव्रतायाश्चानुगमनस्याप्यभिहितत्वात् । अत्र साध्वीत्यनेन पतिव्रताभिधीयते । अन्यथा ब्रह्मचर्ये व्यवस्थितेत्यनेन पौनरुक्त्यप्रसक्तेः । तथाह—महाभारते भगवान् व्यासः—

पतिव्रतायाः सत्यं अग्निप्रवेशं दर्शयति, न तु अग्निप्रवेशेन पतिव्रतात्वम्।

पतिव्रता तु संदीप्तं प्रविशेत हुताशनम्।
तत्र चित्रं गदाधरं भर्त्तारं सा प्रपद्यते। इति।

न च तस्या ह न पुनरायुषः स्वकामी प्रभावादिति श्रुतिविरोधः, विषयभेदात्। श्रुतिर्हि सामान्येन शास्त्रविहितस्वेच्छामरणं निषेधति। स्मृतिस्तु भर्त्तरि मृते ज्वलनप्रवेशेन मरणविशेषं विधत्ते। अतो विषयभेदान्न विरोधः। यथा 'न हिंस्यात् सर्वा भूतानी'ति सामान्यशास्त्रमग्निषोमीयं पशुमालभेतेति विशेषशास्त्रविषयमुत्सृज्य प्रवर्त्तते तद्वदत्रापीति न कश्चिद्विरोधः।

ननु—

ब्रह्मघ्नो वा कृतघ्नो वा सुरापो वा भवेत्पतिः।
पुनात्यविधवा नारी तमादाय म्रियेत या।

इत्येवमादीनि हारीतादिवाक्यानि ब्रह्महत्यादिदोषनिवृत्तिमनुगमनेनाभिदधति, एतदनुपपन्नम्। शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति न्यायेनापूर्वफलयोः कर्त्तृसमवेतत्वात् पतिगतदुरितापूर्वस्य पत्न्यङ्गतानुमनान्निवृत्तिः। निवृत्त्यभ्युपगमे तु कार्यकारणयोः सामानाधिकरण्यं शास्त्रसिद्धं व्याहन्यत इति चेत्, वाढम्। ब्रह्मघ्नो वेत्यादीनि वाक्यानि अनुगमनविधिशेषत्वेनार्थवादत्वादनुगमनस्य प्राशस्त्यं वर्णयन्ति। अतः स्वार्थे प्रमाणानीति। युक्तमेवार्थवादं तं ब्रह्महननादिदोषदुष्टस्य पतितत्वेनासौ संस्कारमेव तावन्नार्हति दूरमनुगमनमतः प्राशस्त्यपराणीति न कदाचिदनुपपत्तिः। एवंविधं कर्म प्रारब्धमप्रारब्धं वेति। तत्र प्रारब्धकर्मणान्तु भोगादेव क्षयात्। आरब्धमपि अनुगमनरूपप्रतिबन्धकेन प्रतिबन्धं विद्यमानमिव सदुदास्ते। तथाचानुगमनफलं स्वर्गादिकमनुभूय पश्चात्प्रारब्धशेषमुपभुंक्ते। अप्रारब्धमपि कर्मं द्विविधम्। फलदानोन्मुखमप्रारब्धं कर्मं तदनुगमनेन भवतीत्येतदेव मनसि कृत्वा व्यासोऽप्याह —

यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः।
सम्प्राप्तो यातनास्थानं गृहीतो यमकिङ्करैः।
तिष्ठते विवशो दीनो विध्यमानः स्वकर्मभिः।
व्यालग्राही यथा व्यालं बलादुद्धरते विलात्।
तद्वद्भर्त्तारमादाय दिवं यान्ति च ता बलादिति।

फलदानानुन्मुखे त्वप्रारब्धकर्मानुगमनसाध्यस्वर्गीयभोगानन्तरमुपयुज्यत इति न विरोधः।

ननु कदा नोन्मुखमप्रारब्धकर्म प्रायश्चित्तस्थानीयेनानुगमनेन यदा विनश्यति तदा फलदानानुन्मुखमपि तेनैवापगच्छेत्तु विशेषाभावादिति चेन्न, पुनातीत्युक्त्या पापनिवृत्तिः कल्प्यते, कल्पनाचानुपपत्तिवशात्। सा चानुपपत्तिर्यावत्कल्पिता शाम्यति तावत्कल्पनीयम्। तथा फलोन्मुखप्रारब्धकर्मनिवृत्त्यापि पुनातीत्यस्य चरितार्थत्वे सकलपापनिवृत्तिः परिकल्पनीया। तत्तूक्तमन्यनिष्ठेनानुगमेनान्यगतदुरितनिवृत्तिरयुक्तेति, तदपेशलम्। पतिपत्न्योः सहकर्तृत्वेनाग्निहोत्रादिसाध्यस्वर्गादिवद् उपपत्तेः। इत्थञ्चदुरितं जन्मान्तरमेव निवर्तते। एतज्जन्मकृतदुरितयुक्तस्य पतितत्वेन सहानुगमनानधिकारात्। वैधव्यपालनेऽपि स्वर्गादिफलविशेषः स्मृत्यन्तरेऽपि स्मर्यते—

पत्यौ मृतेऽपि या योषिद्वैधव्यं पालयेत् क्वचित्।
सा पुनः प्राप्य भर्त्तारं स्वर्गलोकात् समश्नुते।
विधवाया कबरीबन्धो भर्त्तृबन्धाय जायते।
शिरसो वपनं तस्मात् कार्यं विधवया सदा।

एकाहारः सदा कार्यो न द्वितीयः कदाचन।
त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा।
मासोपवासं वा कुर्यात् चान्द्रायणमथापि वा।
कृच्छ्रं पराककं कुर्यात् तप्तकृच्छ्रमथापि वा।

यवान्नेन फलाहारैः शाकाहारैः पयोव्रतैः।
प्राणयात्रां प्रकुर्वीत यावत्प्राणः स्वयं व्रजेत्।
पर्यङ्कशयिता नारी विधवा पातयेत्पतिम्।
तस्माद् भूशयनं कार्यं पतिसौख्यसमीहया।
नैवाङ्गोद्वर्त्तनं कार्यं स्त्रिया विधवया क्वचित्।
गन्ध इत्यस्य सम्भोगो नैव कार्यस्तया पुनः।
तर्पणं प्रत्यहं कार्यं भर्त्तुः कुशतिलोदकैः।

तर्पणं पुत्रपौत्राभावविषयम्।

विष्णोस्तु पूजनं कार्यं पतिबुद्ध्या न चान्यथा।
पतिमेव सदा ध्यायेद् विष्णुरूपधरं परम्।
यद्यदीष्टतमं लोके यद्यत्पत्युः समीहितम्।
तत्तद् गुणवते देयं पतिप्रीणनकाम्यया।

वैशाखे कार्त्तिके मासे विशेषो नियमश्चरेत् ।
स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः ।
ध्रुवं विध्यैश्च विधिवद्विधिस्थैर्नियमव्रतैः ।
वैशाखान् कार्त्तिकान् माघानेवमेवातिवाहयेत् ।
नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ।
कञ्चुके न परीदध्यात् वासो न विकृतं वसेत् ।
अपृच्छ्य वा सुता किञ्चित् न कुर्याद्भर्तृतत्परा ।
एवं धर्मसमायुक्ता विधवाऽपि पतिव्रता ।
पतिलोकानवाप्नोति न भवेत् क्वापि दुःखिता ।

इति श्रीलक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्गप्रवर्त्तक-
सकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाह
समस्तसाम्राज्यधुरन्धर--श्रीमन्महाराजाधिराज-
श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे
संस्कारसारे गृहस्थधर्माः ।

●

# अथ वानप्रस्थाश्रमः

अथ वानप्रस्थाश्रमोऽभिधीयते—कृतगार्हस्थ्योऽग्नियुक्तो ब्रह्मचारी जरा-जर्जरकलेवरः सभार्योऽभार्यो वा वानप्रस्थः स्याद्वने प्रकर्षेण निर्यातं तिष्ठतीति चरतीति वनप्रस्थः वनप्रस्थ एव वानप्रस्थः संज्ञायां दैर्घ्यम् । अस्य सूत्रस्य शाटकं वय इतिवद्भाविनीयं संज्ञा ।

सुतविन्यस्तपत्नीकस्तया वानुगतो वनम् ।
वानप्रस्थो ब्रह्मचारी वनं सोपासनो व्रजेत् ।

इतियोगिस्मरणात् । मनुरपि—

[१]गृहस्थस्तु यदा पश्येद् बलीपलितमात्मनः ।
अपत्यस्यैव वापत्यं तदारण्यं समाश्रयेत् ।
पुत्रे दारान्विनिक्षिप्य तया चानुगतो वने ।
अग्निनुपाचरेन्नित्यं वन्यमाहारमाहरेत् ।
व्यवहारो भवेत्तेन पूजयेत्पितृदेवताः ।
तेनैव पूजयेद्विद्वान् अतिथिं समुपागतम् ।
ग्रामादाहृत्यवाश्नीयाद् अष्टौ ग्रासान् समाहितः ।
स्वाध्यायश्च तथा कुर्याज्जटा च विभृयात्तथा ।
तपसो शोधयेन्नित्यं स्वकं चैव कलेवरम् ।

तथा पराशरः ।

गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ।
ग्रामादाहृत्य वाश्नीयाद् अष्टौ ग्रासान् वने वसन् ।
प्रतिगृह्य पुनश्चैव पाणिना सकलेन वा ।
पूताश्चान्याश्च सेवेत दीक्षां विप्रो वने वसन् । इति ।

ननु अष्टग्रासानिति वचः षोडशारण्यवासिन इति वचसा विरुद्धमिति चेन्मैवम्; शक्ताशक्तविषयत्वेन व्यवस्थोपपत्तेः ।

शङ्खः—

आर्द्रवासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा ।
प्रावृष्याकाशसेवी च नक्ताशी च सदा भवेत् ।

---

१. मनुस्मृतौ पाठभेदो दृश्यते ।

चतुर्थकालिको वा स्यात्षष्ठकालिक एव वा ।
कृच्छ्रैर्वा विनयेत्कालं ब्रह्मचर्यञ्च पालयेत् । इति ।

तथा योगी—

अफालकृष्टेनान्नेन पितृदेवातिथीनपि ।
भृत्याँश्च तर्पयेत् श्मश्रुजटालोमभृदात्मवान् ।

तथा—

यद्भक्ष्यं स्यात्ततो दद्याद् बलिं भिक्षां च शक्तितः ।
अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ।
दन्तोलूखलिकः कालपक्वाशी वाश्मकुट्टकः ।
श्रौतस्मार्तफलार्थं हि कर्मकुर्यात्क्रियास्तथा ।
वैतानिकश्चेज्जुहुयादग्निहोत्रं यथाविधि ।
दर्शमस्कन्दयन्पर्व पौर्णमासं च शक्तितः । इति ।

ननु येन हि पुत्रसन्निधौ भार्या स्थापिता तस्य कथं अग्निहोत्रादौ अधिकारः । 'पत्न्या सह यष्टव्यमि'ति तया सहैवाधिकाराभिधानात् । मैवं; पत्नीनिक्षेपविधिरेव पत्नीनिरपेक्षेक्षाग्निहोत्रमाह । एवंमाह—विधिस्तस्मादपत्नीकोप्यग्निहोत्रमाहरेदिति । पञ्चमपञ्जिकायामैतरेयब्राह्मणमथवापत्नीकोप्याहरेत्किमुत पुत्रनिक्षिप्तपत्नीक इति ।

तथा—

दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् ।
स्वाध्यायवान् दानशीलः सर्वसत्त्वहिते रतः ।
चान्द्रायणैर्नयेत्कालं कृच्छ्रैर्वा तर्पयेत्सदा ।
पक्षे गते वाप्यश्नीयान्मासे वाहनि चागते ।

इति एते सर्वेऽपि कालनियमा शक्त्यपेक्षाः ।

स्वप्याद् भूमौ शुचौ रात्रौ दिवा सम्प्रपदैर्नयेत् ।
स्थानाशनविहारैर्वा योगाभ्यासेन वा तथा ।
विविधाश्चोपनिषदीरात्मसंसिद्धये श्रुतीः ।
यः कण्टकैः वितुदति चन्दनैर्यश्च लिम्पति ।
अक्रुद्धः परितुष्टश्च समस्तस्य यतस्य वा ।

तुदति व्यथयति ।

अग्नीनाप्यात्मसाद् हुत्वा वृक्षवासो मिताशनः ।
वानप्रस्थो गृहस्थो वा यात्रार्थं भैक्षमाचरेत् ।

अग्नीनात्मनि समारोप्येत्यर्थः । वृक्ष एव वासः कुटी यस्येति द्वितीयस्य ।

मनुः—

अग्नीनात्मनि वैतानान् समारोप्य यथाविधि ।
अनग्निरनिकेतः स्यात् मुनिर्मूलफलाशनः । इति ।

मुनिर्मौनवान् ।

फलमूलालाभे देहधारणपर्याप्ता वानप्रस्थगृहे भिक्षापि कार्या । सर्वकार्यासमर्थेन यावच्छरीरपातं निराहारिणा ऐशानीं प्रतिगन्तव्यम् ।

वायुभक्षः प्रागुदीचं गच्छेदावर्ष्म संक्षयादिति स्मरणात् ।

वायुरेव भक्ष्यमस्यासौ वायुभक्षः । प्रागुदीची ऐशानीम् । वर्ष्म शरीरमिति यावत् । महाप्रस्थानाशक्तो भृगुपतनम् । तथा विष्णुः—भृगुपतनश्चानुतिष्ठेदिति ।

तथा मनुरपि—

आसां महर्षिवर्याणां त्यक्त्वान्यतमया तनुम् ।
वीतशोकभयो विप्रो ब्रह्मलोके महीयते । इति ।

ब्रह्मणश्चतुर्मुखादेर्लोकः स्थानविशेषो वा ।

ननु नित्यं ब्रह्मलोकपदसन्निधेः मुक्तिश्चतुर्थाश्रम एव । गृहस्थोपि विमुच्यत इति वचस्तु भवान्तरानुभूतपारिव्राज्यविषयम् । योगाभ्यासेन तु सालोक्यादिप्राप्तेः । अतएव त्रयोधर्मस्कन्धा इत्युपक्रम्य यज्ञोध्ययनं दानमित्युक्तम् । यज्ञस्तु यः वानप्रस्थब्रह्मचारिगृहस्थानामनुक्रमेणैव एतदनुष्ठानं पुण्यलोकप्राप्तिफलम्, मुक्तिरूपामृतत्वप्राप्तिस्तु भवान्तरानुभूततद्भावस्य योगिनो वा । भवान्तरानुभूततद्भावस्यैव योगाभ्याससम्भवादित्यलम् ॥ ६ ॥

**इति श्रीमन्महाराजाधिराजदलपतिराजविरचिते**
**नृसिंहप्रसादे संस्कारसारे**
**वानप्रस्थधर्माः ॥**

# अथ चतुर्थाश्रमः

अथ चतुर्थाश्रमोऽभिधीयते—गृहाद्वनात्समयविशेषसाधितव्रतः शोषितशरीरो विषयकषायपरिपाकवान् पुनर्मदाशंकारहितश्चिरकालालङ्कृतवनवासश्चतुर्थाश्रमे मोक्षे मनः कुर्यात्। तत्र पक्षद्वयं ब्रह्मचारी सन् गृही, गृही सन् वनी, वनी सन् संन्यासी स्यादित्येकः पक्षः। तत्र श्रुतिः—गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेदिति। ब्रह्मचारी गृही वा व्रजेदिति द्वितीयः। तत्र श्रुतिः यदहरेव विरजेत्तदहरेव प्रव्रजेदिति।

व्यासस्तु विकल्पमाह—ब्रह्मचर्यं समाप्य गृही भवेद्, गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदिचेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वनाद्वेति।

गौतमस्तु बाधमाह—एकाश्रम्यन्त्वाचार्याः प्रत्यक्षविधानाद् गार्हस्थस्येति। ततश्चात्र त्रयः पक्षाः। समुच्चयविकल्पबाधरूपास्तेयश्रौत एवेति युक्त ऐच्छिकः विकल्पः। नच गार्हस्थं स्मार्तं नैष्ठिकत्वादिकं बाधते। तेन गार्हस्थावधिकृतांधक्लीबादि वा विषयीक्रियते। इतिमन्तव्यस्य स्वाध्यायाध्ययनवैधुर्यनिबन्धनत्वादित्यलम्।

अत्रेदं विचारणीयम्—किमत्र द्विजानां सर्वेषामधिकारः किम्ब्राह्मणमात्रस्येति। किमत्र प्राप्तं सर्वेषामधिकार इति।

तदुक्तं धर्मविवृत्तौ—

ब्राह्मणःक्षत्रियो वैश्यः ततो गच्छेद्वनं कृती।
संन्यसेद्वाथवा शान्तः सर्वभूतदयापरः। इति।

तथाऽपरार्ककारः—

ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः।
ब्राह्मणःक्षत्रियो वाथ वैश्यो वा प्रजेदिति।

अत्राभिधीयन्ते—ब्राह्मणस्यैवात्राधिकारो न त्रैवर्णिकस्य। तथाहि—श्रुतिरेवामुमर्थं स्पष्टयति—ब्राह्मणाः प्रव्रजन्तीति। इति प्रथमप्रतीतब्राह्मण्योद्देशेनाश्रमविधानस्य कृतार्थत्वात् पश्चात् प्रतीतयौगिकार्थस्वीकरणं न युक्तम्। ननु त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति छन्दोगसूत्रात् सर्वाधिकार

इति चेत्सत्यम्; सूत्रं अन्यार्थन्तत्तथाहि—त्रयाणां वर्णानां यथोचितं चत्वार आश्रमा इति न्यायबलेन श्रुतिविरोधभयेन च ब्राह्मणस्यैव चतुर्थाश्रमविधावौचित्यम्। तदाह—भगवान् दत्तात्रेयः—

मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
बाहुजातोरुजातानामयं धर्मो न विद्यते। इति।
गतिस्तुर्याश्रमे नास्ति बाहुजोरुजयोः क्वचित्।
तुर्याश्रमे गतिः प्रोक्ता मुखजानां स्वयम्भुवा। इति।

ब्रह्मक्षत्रियवैश्यक्रमेण मुखजा बाहुजोरुजाः। अतो ब्राह्मणमात्रस्याधिकारो न सर्वेषामिति।

अन्ये तु—त्रैवर्णिकानां प्रकृतत्वात् त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति छन्दोगसूत्राच्च द्विजातिमात्रस्याधिकारं मन्यन्ते।

नच ब्राह्मणशब्दस्य जातिवाचकतया रूढतैव, अवयवार्थस्यापि सम्भवात्। लब्धात्मिकाया रूढेरवयवार्थरूपयोगबाधकत्वाद्वाजिकर्णादिवत्। असत्सु चावयवार्थेषु रूढेर्लब्धात्मकत्वात्। अत उभयानुग्रहस्य न्यायत्वात् योगोरूढींश्चाङ्गीक्रियत इति योगरूढ एवायमिति।

नचानेकार्थत्वकल्पना दोषः आख्यातादिपदादिवत्, अनेकार्थत्वस्य सहजत्वात्। कल्पनायां हि दोषः स्यान्नान्यथेति। उदाहरन्ति च ब्रह्मवैवर्तवचनम्।

वैराग्योत्पत्तिमानेव संन्यासे परियुज्यते।
रागवान्नतु विप्रोऽपि वेदवेदाङ्गवित्तमः। इति

तथोक्तं ब्रह्मपुराणेऽपि—

त्रैवर्णिकानां संन्यासो विद्यते नात्र संशयः।
शिखायज्ञोपवीतानां त्यागपूर्वकदण्डयुगिति।

सर्वेषां पूर्वमतमेव सम्मतम्। अपरार्कधर्मविवृतिकारवाक्यान्यप्यत्र संगच्छन्त इति। अयमेव पक्षः केषाञ्चित् सम्मतः। पूर्वपक्षस्तु सर्वेषामिति तत्त्वम्।

## अथ यतिधर्मा अभिधीयन्ते

तत्र मनुः—

वाग्दण्डोऽथ मनोदण्डः कर्मदण्डश्च ते त्रयः।
यस्यैते नियता दण्डा स त्रिदण्डीति कथ्यते।

तथा चातुर्विंशतिमते ।

एकदण्डी त्रिदण्डी वा सर्वसङ्गविवर्जितः। इति ।

बौधायनेऽपि—

एकदण्डी त्रिदण्डी वेति ।

योगीश्वर आह च—

सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥ ६ ॥

इति त्रिदण्डीपरिग्रहः ।

दण्डास्तु वैणवा एव । प्राजापत्येऽपरं त्रीन् वैणवान् दण्डान् मूर्धप्रमाणान् दक्षिणेन पाणिना धारयेत् सव्येन सोदककमण्डलुमिति स्मरणात् ।

तथा देवलः—

वरवापीमुंडस्त्रिदण्डी कमण्डलुपवित्रपादुकासनकंथामात्र इति तथा परिशिष्टम् ।

अथ यज्ञोपवीतम् अप्सु—जुहोति । भूः स्वाहेत्यथ दण्डमादत्ते । सखे मां गोपायेति । तथा मन्त्राः ।

अष्टौ मासान् विहारः स्याद् यतीनां संय्यतात्मनाम् ।
एकत्र चतुरो मासान् वार्षिकान्निवसेत् पुनः ।
अविमुक्तप्रविष्ठानां विहारस्तु न विद्यते ।
न देहो भविता तत्र दृष्टं शास्त्रे पुरातने । इति ।

कण्वस्तु विशेषमाह—

एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र, वर्षासु मासांस्तु चतुरो वसेत् । इति ।

मनुः—

एककालं चरेद् भिक्षां न प्रसज्जेत विस्तरे ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ।

अशक्तौ वशिष्ठः—ब्राह्मण कुले वा यद्यत् लभेत् । तदुक्तंतद्‌ भुञ्जीत सायं प्रातर् मधुमांसवर्जमिति । तथा सप्तागाराण्यसंकल्पितान् याचेत ।

संवर्त्तोपि—

अष्टौ भिक्षा समादाय स मुनिः पंच सप्त वा ।
अद्भिः प्रक्षाल्य ताः सर्वाः ततोऽश्नीयाच्च योम्यतमिति ।

तथा—

एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
उपवासात् परं भैक्ष्यं दया दानाद्विशिष्यते । इति ।

मनुः—

यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्यात् वेदाभ्यासे च यत्नवान् । १२।९२ ।

प्रागवो ऽत्र वेदः तदभ्यासस्तत्र ।

नाभिनन्देतमरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ।
अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ।

भिक्षाचरणादिकं कर्म कुर्वन् करिष्यन् तत्तत्कर्मोपयुक्तमृदादि पात्राणि गोपालैश्चावकृष्य प्रक्षाल्य तत्कर्म कुर्यात् ।

यदि पात्राणि मृद्वेगुदार्वलावुमयानि च ।
सलिलादुच्छ्रिते तेषां गोपालैश्चावघर्षणः । इति योगीस्मरणात् ।

मनुश्च—

अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ।
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ।

इत्येवं धर्मानुष्ठाने योगिनोक्तं फलम् ।

सन्निरुद्धेन्द्रियग्रामं रागद्वेषौ प्रहाय च ।
भयं हृत्वा च भूतानाममृतो भवति द्विजः । इति ।

तत्र उक्ता ब्रह्मचारी गृहस्थवानप्रस्थयतिरूपाश्चत्वार आश्रमाः प्रत्येकं चतुर्विधाः । तदुक्तं महाभारते—

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ता एकैकस्य चतुर्विधाः । इति ।

चातुर्विध्यं च कात्यायनस्मृत्या विवृतम् । ब्रह्मचारीगृहस्थवानप्रस्थपरि-
षोडश भेदाः भवन्ति ।
व्राजकश्च चत्वार आश्रमाः, षोडश भेदाः भवन्ति ।

तत्र ब्रह्मचारिणश्चतुर्विधा भवन्ति । गायत्र्यो, ब्राह्मणः, प्राजापत्यो, बृहन्निति । तत्रोपनयनादुपरि त्रिरात्रमक्षारलवणाशी गायत्रीमधीते स गायत्र्यो-ऽष्टाचत्वारिंशत् वर्षाणि वेदब्रह्मचर्यं चरेत् । प्रतिवेदं द्वादश द्वादश यावद् ग्रहणान्तं यावदेव स ब्राह्मणः स्वदारनिरतः ऋतुकालाभिगामी सदा । परदारवर्जितः

स प्राजापत्यः। अत्यन्तदारपरित्यागी स नैष्ठिको बृहन्निति।

तथा गृहिणोऽपि, चतुर्विधा भवन्ति वार्त्ताकवृत्तयः, शालीनवृत्तयो यायावरा घोरसंन्यासिकाश्चेति।

तत्राद्याः कृषिगोरक्षवाणिज्यं तमुपभुञ्जानाः शतसंवत्सराधियजन्ते शक्यान्तरं प्रार्थयन्तः, शालीनवृत्तयो यजन्तो याजयन्तोऽधीयानाध्यापयन्तो ददतः प्रतिगृह्णतः शतसंवत्सराणि क्रियाभिर्यजन्त इति आत्मानं प्रार्थयन्ते। घोरसंन्यासिका उद्धृतपरिपूर्णाभिरद्भिः कार्यं कुर्वन्तः प्रतिदिवसमाश्रितो वृत्तिमुपयुञ्जानः शतसंवत्सराभिः क्रियाभिरात्मानं यजन्ते, आत्मानं प्रार्थयन्ते।

वानप्रस्थाः अपि चतुर्विधा भवन्ति। वैखानसा, बालखिल्याः, फेनपाश्चेति। तत्र वैखानसा आकृष्टपच्या परितः श्रियवनपतिभिर्ग्रामविकृत्याभिरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रिया निवर्त्तयन्ते, आत्मानं प्रार्थयन्ते। बालखिल्याः जटाधरा चीरवर्मवल्कलपरिवृता कार्त्तिक्यां पौर्णमास्यां पूज्यफलं मृत्युंजातः शेषानष्टौ मासान् वृत्युपार्जनं कृत्वाऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञान् निवर्त्तयन्त आत्मानं प्रार्थयन्ते। फेनपा जीर्णफलभोजिनो यत्र तत्र वा वसन्तः आत्मानं प्रार्थयन्ते।

परिव्राजका अपि चतुर्विधा भवन्ति। कुटीरकाः, बहूदकाः, हंसाः, परमहंसाश्चेति। तत्र प्रथमेऽकुटीसुपुत्रगृहेषु-भिक्षाचर्यं कुर्वन्त आत्मानं प्रार्थयन्ते। बहूदकास्त्रिदण्डकमण्डलुजलपवित्रपादुकाशनशिखायज्ञोपवीतकाषायवेषधारिणः साधुवत्तेषु ब्राह्मणकुलेषु भैक्षं चरन्त आत्मानं प्रार्थयन्ते। हंसा एकदण्डधरा शिखायज्ञोपवीतधारिणः कमण्डलुहस्ता ग्रामैकरात्रिवासिनो नगरे तीर्थेषु पञ्चरात्रं वसन्तः एकरात्रं द्विरात्रं कृच्छ्रचान्द्रायणादिचरन्त आत्मानं प्रार्थयन्ते।

परमहंसा एकदण्डधारिणः कन्थाकौपीनवाससो ध्यानलिङ्गा अनुन्मत्तबहून्मत्तवदाचरन्ते, आत्मानं मोहयन्ते दण्डकमण्डलुशिखाजलपवित्रपादुकासनशिखायज्ञोपवीतादित्यागिनः, शून्यागारदेवगृहवासिनो न तेषां सत्यं नानृतं सर्वंसहाः सर्वसमाः समलोष्ठाश्मकांचनाः चातुवर्ण्यं भिक्षां चरन्त आत्मानं मोहयन्ते। तेषां उपचयो धर्मो नियमोवनपानां, दानमेकं गृहस्थानां, शुश्रूषा ब्रह्मचारिणामिति उक्तं परिव्राजकानामात्मविमोक्षणं, तत्त्वज्ञानपर्यवसायित्वात्। तदेवं चतुर्णामाश्रमाणां चतुश्चतुर्भेदा निरूपिताः।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्ग-प्रवर्त्तक सकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाह समस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे चातुर्वर्ण्यधर्माः।

# अथ साधारणधर्माः

व्यासः श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् । इति ।

मनुः--

येनास्य पितरो याताः येन याताः पितामहाः ।
तेन यायात् सतां मार्गन्तेन गच्छन्नरिष्यतीति ।

व्यासः—

नाधार्मिककृते ग्रामे न व्याधिबहुले भृशम् ।
न शूद्रराज्ये निवसेन् न पाखण्डिजनैर्वृते ।
परस्त्रियं न भाषेत नायाज्यं याजयेद् द्विजः ।
न देवायतनं गच्छेत्कदाचिच्चाप्रदक्षिणम् ।
न वीजयेद्वा वस्त्रेण समं वामं च वर्जयेत् ।
नैको वनं प्रपद्येत नाधार्मिकजनैः सह ।
न निन्द्याद्योगिनः सर्वान् न व्रतिनो यतींस्तथा । इति ।

मनुः—

वर्षासु च भवेच्छत्री दण्डी सन्तमसीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् । इति ।

आपस्तम्बः—

अग्न्याधाने गवां गोष्ठे ब्राह्मणानाञ्च सन्निधौ ।
आहारे जपकाले तु पादुके परिवर्जयेत् ।
यः काष्ठपादुकारूढो गेहाद् गेहान्तरं व्रजेत् ।
तन्तु दृष्ट्वा दुराचारं सूर्यश्चैव निमीलति । इति ।

मार्कण्डेयः —

देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा ।
नाक्रामाक्रामतच्छायां बभ्रुणो दीक्षितस्य चेति ।

बभ्रुणः छागस्यः । देवलः—

आत्मानं नाशयेत्क्रोधो नीरुजो न स्वपेद्दिवा ।
न नक्तं विलिखेद् भूमौ गाश्च रात्रौ न संस्पृशेत् ।

ब्राह्मणान् नृपतीन् विद्वान् स्वांश्च शान्तशिशूनपि ।
नावक्रोशेन्नावमन्येत पूजयेद् देवता यथा ।
अभृत्यो श्रियमन्विच्छेन्मैनां मन्येत दुर्लभाम् ।
सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ।
नातिकल्ये नातिसायं नातिमध्यंगते रवौ ।
नग्नेन न समं गच्छेन्नैको न वृषलैः सह । इति ।

संवर्तः—

असत्प्रलापमनृतं वाक्पारुष्यञ्च वर्जयेत् ।
असच्छास्त्रमसद्वाक्यमसत्सेवाञ्च वै नरः । इति ।

चतुर्विंशतिमते—

कृष्णसर्पं द्विजं नष्टं शूद्रं च प्रतिपादकम् ।
गर्दभं जारजातञ्च दूरतः परिवर्जयेत् ।
न म्लेच्छभाषां शिक्षेत नापश्येदात्मनः सकृत् ।
नाधितिष्ठेत्सकृन्मूत्रकेशभस्मकपालिकाः ।
तुषाङ्गारास्थिशीर्णानि रज्जुवस्त्राविकानि च ।
वर्जयेन्मार्जनीरेणुं नापेयं च पिबेद् द्विजः । इति ।

स्मृतिसंग्रहे—

कपालं मङ्गलं ब्रूयादभद्रं भद्र इत्यपि ।
छिद्रं धनुर्मणिधनुर्निजं नाम न कीर्त्तयेत् । इति ।

एतेषामिति शेषः ।

मनुः—

यत्कर्म कुर्वतोऽस्य स्यात्परितोषोन्तरात्मन ।
तत्प्रयत्नेन कुर्वीत विपरीतन्तु वर्जयेत् ।
न दिवीन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद् बुधः । इति ।

देवलः—

नैकः प्रपद्येदध्वानं न चिरं पर्वते वसेत् ।
लोष्ठमर्दी तृणच्छेदी नखखादी च यो नरः ।

स विनाशं व्रजत्याशु शूचकोऽशुचिरेव च ।
न विगृह्य कलिं कुर्यात् बहिर्माल्यं न धारयेत् ।
गवां च यानं पृष्ठेन सर्वदैव विगर्हितम् ।
अद्वारेण तु नानीयात् ग्रामं वा वेश्म वार्हते ।
कुलानुकूलो रहस्यं सञ्चरेन्नानिमित्ततः ।
रात्रौ तु वृक्षमूलानि इच्छतः परिवर्जयेत् ।
भद्रं भद्रमिति ब्रूयाद् भद्रमित्येव वा वदेत् ।
शुष्कं वैरं विवादश्च न कुर्यात्केनचित् सह ।
बालातपं प्रेतधूमं वर्ज्यं भिन्नं तथासनम् ।
नाक्षैः क्रीडेत् कदाचिचच्च स्वयन्नोपनहौ हरेत् ।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ।
अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः ।
न कार्यमस्मिनतुषा न दीर्घमायुर्जिता विष्णुः । इति ।

अपरार्कः -

नैकः शून्याटवीं गच्छेन्न च शून्ये गृहं वसेत् ।
नासहायो व्रजेद्रात्रौ नोष्यभे न चतुष्पथे । इति ।

मनुः—

वासस्तिरोहितं सूर्यमादर्शे प्रतिबिम्बितम् ।
आयुःकामो निरीक्ष्येत न छायामात्मनो जले ।
मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन् ।
नाग्निं मुखेनोपधमेत्, नग्नां नेक्षेत च स्त्रियम् ।
नाञ्जयन्तीं स्वके नेत्रे नचाभ्यक्तामनावृताम् ।
न पश्येत्प्रसवन्तीं च तेजस्कामो द्विजोत्तमः ।
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ।
अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत् ।
नचैनं पादतः कुर्यान्नप्राणाबाधमाचरेत् ।
नाश्नीयात्सन्धिवेलायां न गच्छेन्नापि संविशेदिति ।

संग्रहे—

मध्यन्दिनेऽर्धरात्रौ च सार्द्धभुक्तं च सामिषम् ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् ।

नचैव विलिखेत् पृथ्वीं नात्मनोऽभिहरेत् स्रजम् ॥
नैकः सुप्येच्छून्यगृहे न शयानं प्रबोधयेत् ।
नोदक्ययाऽभिभाषेत न यज्ञमवृतो व्रजेत् ।
नमस्कर्तुं व्रजेत्काममवृतो यज्ञमेव च । इति ।

मनुः--

न वारयेद् गां धयन्तीं न चाचक्षीत कस्यचित् ।
न कुर्वीत वृथा चेष्टां न वार्यञ्जलिना पिबेत् ।
उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।
उपवीतमलङ्कारं स्रजं करकमेव च ।
न संवसेच्च पतितैर्न चण्डालैर्न पुल्कसैः ।
नावपन्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ।
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैश्च न संविशेत् ।
न शूद्राय मतिं दद्यात् नोच्छिष्टं न हविष्कृतम् ।
नचास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ।
न स्पृशेत्पाणिनोच्छिष्टो विप्रो गोब्राह्मणानलान् ।
न चापि पश्येदशुचिः सुस्थो ज्योतिर्गणान् दिवा ।
अनातुरः स्वानि खानि न स्पृशेदनिमित्ततः ।
रोमाणि च रहस्यानि सर्वाण्येतानि वर्जयेत् ।
नक्तंचर्यं दिवास्वापमालस्यं मैथुनं मदम् ।
अभियोगमयोगञ्च श्रेयोऽर्थी परिवर्जयेत् ।
परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैव निपातयेत् ।
अन्यत्र पुत्रशिष्याद्वा शिष्यार्थं ताडयेत्तु तौ ।
भार्या पुत्रश्च दासश्च शिष्यो भ्राता सहोदरः ।
प्राप्तापराधास्ताड्या स्यू रज्ज्वा वेणुदलने वा ।
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन ।
अतोऽन्यथापि प्रहरन् प्राप्नुयाच्चौरकिल्विषम् ।८।३००
न विस्मयेन तपसा वदेदिष्ट्वा च नानृतम् ।
नार्तोऽप्यपवदेद्विप्रान्न दत्त्वा परिकीर्त्तयेत् ।
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानन्तु परिकीर्त्तनात् ।४।२३०

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
वलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ।
अधीयानः शुभां विद्यामाददीतावरादपि ।
अंत्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ।
विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनमिति ।

शातातपः—

रात्रौ धाना दधि सक्तून् श्रीकामो वर्जयेदिति ।
भोजनं तिलसम्मिश्रं स्नानं चैव विशेषतः ।
सुतस्त्रियाश्च शयनं सहभोज्यश्च वर्जयेत् ।

देवलः---

शिरोभ्यक्तावशिष्टेन तैलेनाङ्गं न लेपयेत् ।
नावेक्षेतासुविकूपं घर्षयेन्न पदात्पदमिति ।

अपरार्के—

बालवृद्धातुरा आर्या वैद्यसंश्रितवान्धवैः ।
ऋत्विक्पुरोहितापत्यभार्यादिशयनादिभिः ।

मातापितृभ्यां वामीतिर्विवादं न समाचरेत् ।
विवादं वर्जयित्वा तु सर्वान् लोकान् जयेद् गृही ।

यद्यपि स्यात्त्रिकालज्ञः त्रिलोकाकर्षणक्षमः ।
तथापि लौकिकाचारं मनसापि न लङ्घयेदिति ।

**इति श्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते नृसिंहप्रसादे संस्कारसारे साधारणधर्मा एवं ब्रह्मचारी वानप्रस्थधर्मौ निरूप्येते ।।**

•

# वानप्रस्थो निरूप्यते

तस्य कलियुगे निषिद्धत्वात्, चतुर्थाश्रमस्तु अस्माभिः परमहंसमोनलक्षः कृतज्ञो वृद्धसेवकः।

विनीतः सत्यसम्पन्नः कुलीनः सत्यवाक् शुचिः।
अदीर्घसूत्राः स्मृतिमान् दण्डनीत्यां तथैव च।
विनीतस्त्वथ वार्त्तायां तत्राप्यां वै नराधिपः। इति।

व्यासः—

दृढ़प्राकारपरिघं हस्त्यश्वरथसंकुलम्।
ऊर्जस्विनर्नरनागं च चत्वरापणशोभितम्।
प्रसिद्धव्यवहारश्च प्रशान्तमकुतोभयम्।
शूराप्यं प्राज्ञसम्पूर्णं तत्पुरं स्वयमाविशेत्।
तदध्यस्योद्वहेद् भार्यां सवर्णां लक्षणान्विताम्।
कुले महति सम्भूतां हृद्यां रूपसमन्वितामिति।

मनुः—

धान्यदुर्गं महीदुर्गं अब्दुर्गं वार्क्षमेव च।
नृदुर्गं गिरिदुर्गञ्च समाश्रित्य वसेत्पुरम्।
सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत्।
एतेभ्यो बहु गुण्येन गिरिदुर्गं विशिष्यते।
तस्मादायुधसम्पन्नं धनधान्येन वाहनैः।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन वेति।

मनुः—

पुरोहितोऽभीष्टमन्त्री देवतस्थः पतिर्गुरुः।
क्रमागता न सन्त्याज्या भूभृतां भूतिमिच्छतामिति।

याज्ञवल्क्यः—

पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम्।
दण्डनीत्यां च कुशलमथवांगिरसस्तथेति।

मनुः—

तथैव सम्पदां वीजं प्रायश्चित्तं तदेनसः ।
तदेवयशसां मूले यदेवाश्रितपोषणमिति ।

धौम्यः—

पुरोहितं च कुर्वीत कुशलं देवऋत्विजाम् ।
तस्य गृह्याणि कार्याणि कुर्युर्वैतानिकानि च ।
यजेत राजा क्रतुभिः विविधैराप्तदक्षिणैः ।
यज्ञार्थंञ्चैव विप्रेभ्यो दद्याद् भोगो धनानि च ।
सांवत्सरिकमाप्तैश्च राष्ट्रादाहरयेद्बलिं ।
स्याच्चाम्नायपरो लोके बर्त्तेत पित्तृवन्नृषु इति ।

मनुः—

सचिवान् सप्त वाष्टौ वा प्रकुर्वीत परीक्षया । इति ।

स एव मन्त्रस्थानमाह याज्ञवल्क्यः—

मंत्रिणस्तु प्रकुर्वीत प्राज्ञान्मौलान् सत् शुचीन् ।
तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततस्स्वयमिति ।

मनुः—

गिरिपृष्टं समारुह्य प्रासादं वारहो गतः ।
अरण्यनिःशलाके वा मन्त्रयेच्चाहिताहितमिति ।

स एवाह—

मूकान्धवधिरांश्चैव तिर्यग्योन्यांश्च योगिवान् ।
स्त्रीम्लेच्छव्याधितव्यंगान् मन्त्रकाले च शोधयेत् । इति ।

स एवाह—

मध्यन्दिनेऽर्धरात्रे विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्मकामार्थान्सार्धन्तैरेक एव च ।
कन्यानां सम्प्रदानञ्च कुमाराणाञ्च रक्षणम् ।
दूतसम्प्रेषणं चैव कार्यशेषं तथैव च ।
अरेरनन्तरं मित्रं उदासीनन्तयो; परम् ।

तान्सर्वानतिसंदध्यात्सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेन युगेन च ।
सन्धिञ्च विग्रहञ्चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ।

सन्धिश्च विधिवद्विद्यात् राजविग्रहमेव च ।
उभे यानासने चैव द्वैधसंश्रयमेव च ।
तदात्वायतिसंयुक्तः सन्धिर्ज्ञेया विचक्षणैः ।
स्वयं कृतश्च कार्यार्थमकाले काल एव च ।

मित्रेण चैवापकृते द्विविधो विग्रहः स्मृतः ।
एकासनं चात्ययिके कार्ये प्राप्ते यदृच्छया ।
संहतस्य च मित्रेण द्विविधं यानमुच्यते ।
क्षीणस्यैव क्रमशो दैवात्पूर्वकृतेन वा ।

मित्रस्याप्यनुरोधेन द्विविधं स्मृतमासनम् ।
न साम्यं स्वामिनश्चैव स्थितः कार्यस्य सिद्धये ।
द्विविधं कीर्त्तयेद् द्वैधं षाड्गुण्यं गुणवेदिभिः ।
अर्थसम्पादनार्थश्च पीड्यमानस्य शत्रुभिः ।
साधुभिर्व्यपदेशेन द्विविधः संश्रयः स्मृतः ।
आसनञ्चैव यानञ्च सन्धाय च विगृह्य च ।
कार्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ।
उपेतार्थमुपेयश्च सर्वोपायांश्च कृत्स्नशः ।
एतत्त्रयं समाश्रित्य प्रयतेतात्मसिद्धिभिः ।

मनुः—

यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः ।
तद्वानेनविधानेन यायादरिपुरं शमैः ।
मार्गशीर्षे शुभे मासे कुर्याद्यानं महीपतिः ।
फाल्गुने वाथ चैत्रे वा मासौ प्रति यथाबलमिति ।

व्यासः—

स्थानं बुद्धितया ज्ञानं षाड्गुण्यविहितात्मना ।
भवितव्यं नरेन्द्रेण न नामवशवर्त्तिना ।

प्रागृरीत्यामन्त्रिणश्चैव ततो भृत्या महीभृता ।
जित्याश्चानन्तरं पौरा विरुध्येत ततोरिभिः ।
नत्वैनमभिनिर्जित्य वैरिणो विजिगीषतः । इति ।

मार्कण्डेयः—

चैत्र वा मार्गशीर्षे वा सेनायोगः प्रशस्यते ।
पक्वशस्या हि पृथिवी भवत्यापोवती तथेति ।

अपरार्के—

मुक्तकेशोरुगातिश्च कषायाम्बरधारकः ।
उन्मत्तकस्तथाखण्डो दीनश्चाथ नपुंसकः ।
अपापकस्तथाधर्मः केशबन्धनमेव च ।
तथैवोद् धृतसाराणि विव्याकादीति बयानि च ।
वधकाः पात्रकर्माणि गर्भिणीस्त्री तथैव च ।
तुषभस्मकपालास्थिभिन्नभाण्डानि यानि च ।
रिक्तानि चैव पात्राणि मृतं साक्रन्दमेव च ।
एवमादीनि चान्यानि अशस्तान्यासदर्शने ।
अशस्तौ वन्यशब्दश्च भिन्नभैरवभूर्भुवः ।
एहीति पुरतः राष्ट्राः रास्यन्ते न तु पृष्टतः ।
गच्छेति पश्चाच्छन्दस्तु परस्तात्स तु गर्हितः ।
क्व यासि तिष्ठ मा गच्छ किं ते तत्र गतस्य च ।
अन्ये शब्दाश्च ये नष्टास्ते विपत्तिकराः स्मृता ।
ध्वजादिषु तथा स्थानं क्रव्यादानां विगर्हितम् ।
खलनं वाहनानां च वसासङ्गस्तथैव च ।
निर्गतस्य च द्वारादौ शिरस्याहननं च यत् ।

एतान्यशुभकारीणीति शेषः ।

अन्येष्वपि तु कालेषु यदा पश्येद् भुवं जयेत् ।
तदा मायाद्विगृह्योच्च व्यसने चोदिते रिपोः ।
कृत्वा विधानं मूले तु पात्रकं च यथाविधि ।
उपगृह्यास्पदश्चैव सारं सम्यग्विधाय च ।
संशोध्य त्रिविधं मार्गं षड्विधश्च स्वकं बलम् ।

पद्मेन चैव व्यूहेन निर्विशेत यदा स्वयम् ।
सेनापतिबलाध्यक्षान् सर्वदिक्षु निवेशयेत् ।
यतश्च भयमाशङ्केत्तां प्राचीं कल्पयेद्दिशम् ।
गुल्मांश्च स्थापयेद् दीप्तान् कृतसंज्ञान् समन्ततः ।
स्थानयुद्धे च कुशलानभिभूतविकारिणः ।
संयतान्योधयेदल्पान् कामं विस्तारयेद् बलात् ।
शूच्यायंत्रीणि चैतेन व्यूहं व्यूहंन शोधयेत् ।

याज्ञवल्क्यः

उदकतृणवान्मार्गः समो गम्यः प्रशस्यते ।
वारि च विहिताभ्यासः कुशलैर्वनगोचरैः ।
सप्तर्षीन्पृष्ठतः कृत्वा युध्येत्परबलैः सह ।
यतो वायुर्यतः सूर्यो यतः शुक्रस्ततो जयः ।
अकर्दमामनुदकाममर्यादामलोष्टकाम् ।
अश्वभूमिं प्रशंसन्ति ये युद्धे कुशला जनाः ।
समा निरुदकाकाशा रथभूमिः प्रशस्यते ।
नीचद्रुमा महारम्या मोदका हस्तियोधिनाम् ।
बहुदुर्गमहावृक्षा बेणुवेत्रतिरष्क्रिया ।
पदाती तु समा भूमिः पर्वतोपवनानि च ।
पदाती सबला सेना यदावैवु निगद्यते ।
तथाश्वबहुला सेना सुगमेषु प्रशस्यते ।
पदातिनागबहुला प्रावृट्काले प्रशस्यते ।
गुणातेतान्प्रसंख्येय युद्धेऽरातिषु योजयेत् । इति

व्यासः

ये चाहवेषु युध्यन्ते भृत्यर्थर्मपराङ्मुखाः ।
अकूटैरायुधैर्यान्ति स्वर्गं ते योगिनो यथा ।
पदानि क्रतुतुल्यानि भग्नेष्वनिवृत्तितः ।
राजा सुकृतमादत्ते हतानां विपलायिनाम् ।
तवाहं वादिनं क्लीवं न हन्ति परसङ्गतम् ।
न हन्याद्विनिवृत्तञ्च युद्धे च प्रेरणादिकमिति ।

परासरः

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः।
जितेन लभते लक्ष्मीः मृतेनापि सुराङ्गना।
क्षणविध्वंसिनी काया का चिन्ता मरणे रणे। इति

व्यासः

रणेहतं स्वामिनं यस्त्यक्त्वा याति पराङ्मुखः।
पदानि यानि गच्छेच्च समानि ब्रह्महत्यया।
ललाटदेशे रुधिरस्त्रवस्तु यस्याहवे च प्रविशेच्च वक्त्रम्।
स सोमपानेन किलास्य तुल्यः संग्रामयज्ञे विधिवच्च दृष्टमति।

मनुः

जित्वा सम्पूजयेद् देवान् ब्राह्मणाश्चैव धार्मिकान्।
प्रदद्यात्परिहारार्थं ख्यापयेदभयानि ्वेति।

मनुः

सर्वेषां सुविदित्वैषां समासेन चिकीर्षतम्।
स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम्।
प्रमाणानि च कुर्वीत तेषां धर्मान्यथोदितान्।
संग्रामेष्वनिवर्त्तेत प्रजानाञ्चैव पालनम्।
शुश्रूषां ब्राह्मणानां च राज्ञां श्रेयस्करं मतमिति।

व्यासः

सम्यग् पालयतां भागं धर्मस्याप्नोति पुष्कलम्।
यजते यदधीते च यद्ददाति यदर्चति।
राजाषडङ्गभोक्ता स्यात्प्रजा धर्मेण पालयेत्।
यद्यदाचरते राजा तत्प्रजानामरोचतेति॥

मनुः

प्रजानां रक्षणं दानमिज्याध्ययनमेव च।
विषयेष्वविसक्तिं च क्षत्रियस्य समादिशेदिति।

सएवाह—

इन्द्रस्यार्कस्य वातस्य यमस्य वरुणस्य च ।
चन्द्रस्याप:[१] पृथिव्याश्च तेजोवृत्तं नृपश्चरेत् ।
वार्षिकाश्चतुरो मासान्यथेन्द्रोऽभिप्रवर्षति ।
तथाभि वर्षेस्त्वं राष्ट्रं कामैरिन्द्रव्रतश्चरन् ।
अष्टौ मासान्यथादित्यस्तोयं हरति रश्मिभिः ।
तथा हरेद्धनं राज्यान्नित्यमर्कव्रतं हि तत् ।
प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
तथाचारैः प्रवेष्टव्यं व्रतमेतद्धि वारुणम् ।
परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
तथा प्रकृतयो यस्मिन् स चन्द्रव्रतिको नृपः ।
प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु ।
दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ।
यथा सर्वाणि भूतानि मही धारयते समम् ।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ।
राज्ञिधर्मिणि धर्मिष्ठा पापे पापाः समे समाः ।
राजानमनुवर्त्तन्ते यथा राजा तथा प्रजाः । इति

मनुः

क्रयविक्रयमध्वानं भक्ष्यश्च सरितव्ययम् ।
योगक्षेमं च सम्प्रेक्ष्य वणिजं दोषयेत्करान् ।

याज्ञवल्क्यः

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरे जनाः ।
स यत्प्रमाणं कुरुतेति ।

वृद्धपराशरः

साधून् सम्मानयेद्राजा बिपरीतांस्तु घातयेत् ।
अपराधानुसारेण ये च स्युः कौञ्चकारिणः ।
तान् द्रव्ये रहितान्कृत्वा स्वराष्ट्राद्विप्रवासयेत् । इति

---

१. अग्ने इतिमूलो पाठः ।

मनुः

सर्वतोधर्मषड्भागो राज्ञो भवति रक्षतः।
अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः। इति

मनुः

संरक्षेत्सर्वतश्चैनं पितापुत्रमिवौरसम्।
दुष्टानां शासनं धर्म शिष्टानां परिपालनम्।
कर्त्तव्यं भूमिपालेन नित्यं कार्येषु चार्जवम्।
शालाप्रपातटाकाँश्च देवतायतनानि च।
ब्राह्मणावसथश्चैव कर्त्तव्यं नृपसत्तमैः।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः।
कुलमुत्पाटयेयुस्ते क्रोधाविष्टा द्विजातयः।
बालातुरेषु वृद्धेषु परिमाणं महीपतिम्।
शरणागतकारुण्यं कुर्यात्तत्वसमाहितः।
आश्रमेषु यथाकालं चैलभोजनभाजनम्।
स्वयन्तूपहरेद्राजा सत्कृत्य विधिपूर्वकम्।
अलब्धमवलिप्सेत लब्धं रक्षेच्च यत्नतः।
रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत्।
आत्मानं सर्वकार्येषु तापसे राज्यमेव च।
निवेदयेत्प्रयत्नेन तिष्ठेत वा तस्य नित्यतः । इति

व्यासः

यानि वस्त्राण्यलङ्कारान् अन्नानि विविधानि वा।
हरेयुः सह सोपायान् इति राजानुपालयेत्।
एतद्बहुविधं शास्त्रं न कृषिर्न वणिक्पथः।
मज्येद् धर्मोस्त्रयी तस्मात् यदि राजा न पालयेदिति।

स एवाह—

स्त्रियश्च पुरुषामार्गं सर्वालङ्कारभूषिताः।
निर्भयाः प्रतिपद्यन्ते यदा रक्षति भूमिपः।
धर्म एव प्रपद्यन्ते न हिंसन्ति परस्परम्।
अनुगृह्णन्ति चान्योऽन्यं यदा रक्षति भूमिपः।
यजन्ते च महायज्ञैः त्रयोवर्णाः पृथग्विधैः।

युक्ताश्चार्चन्ति देवादीन् यदा रक्षति भूमिपः। इति
व्यसनानि च सर्वाणि नृपतिः परिवर्जयेत्।
लोकसंग्रहणार्थाय व्रताहव्यसनी भवेत्।
व्यसनस्य च मृत्योश्च व्यसनं कर्षमुच्यते।

व्यसनान्धो हि व्रजति स्वार्थस्य व्यसनो मृतः।
द्वेषकामसमुत्थानि तथाष्टौ क्रोधजानि च।
मृगमाक्षादिवास्वप्नपरिवादस्त्रियोऽपि च।
तौर्यत्रिकं वृथाशाप्य कामाक्षो दशको गणः।

पैशुन्यं साहसं द्रोहः ईर्ष्यासूयार्थदूषणम्।
वाग्दण्डं चैव पारुष्यं क्रोधज्यैपि गणाष्टकः।
कामजो हि प्रशक्तो हि व्यसनेषु महीपतिः।
वियुज्यतेऽर्थधर्माभ्यां क्रोधज्येष्ठात्मनेव तु।
द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः।
प्रयत्नेन जयेल्लोभं तज्जितौ च गुणावुभौ।
यानमस्त्राणि स्त्रियश्चैव मृगया च यथाक्रमम्।
एतत्कृष्टतमं विद्याच्चतुर्थे कालजे गणे।
दण्डस्यपातनञ्चैव वाक्पारुष्यार्थदूषणे।
क्रोधजेऽपि गणे विद्यात्कृष्टमेतन्त्रिकं सदा इति।

पाराशरे

ऋत्विक्पुरोहिताचार्यं राशिभिरभिनन्दितः।
दृष्ट्वा ज्योतिर्विदा वैद्यान् दद्याद्गै काञ्चनं महीम्।
नैवेशिका नच तथा श्रोत्रियाणां गृहाणि वा। इति

याज्ञवल्क्यः

प्रातरुत्थाय नृपतिः कुर्याद्दन्तस्य धावनम्।
स्नानशालां समासाद्य स्नात्वा पूतेन वारिणा।
अर्घ्यं दत्त्वा सदेवाय भास्कराय समाहितः।
ततोलङ्कृतगात्रः सन् धृतमालोक्य मन्त्रवत्।
धृतपात्रं तु विप्राय दद्यात्सकनकं नृपः। इति

मनुः

उत्थाय पश्चिमे यामे कृतशौचं समाहितः ।
हुत्वा मुनीन् ब्राह्मणाञ्चार्च्य प्रविशेत्तु शुभां सभाम् ।
तत्र स्थिता प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।
व्यामम्याप्लुत्य मध्याह्ने भोक्तुमन्तः पुरं व्रजेत् ।
तथाभूतैः सकालज्ञैः आचार्यैं परिचारकैः ।
सुपरीक्षितमन्नाद्यं मेध्यं मन्त्रविषापहैः ।
विषघ्नैरुदकैश्चास्य सर्वद्रव्याणि नेजयेत् ।
विषघ्नानि च रत्नानि नियतो धारयेत्सदा ।
परीक्षिता स्त्रियश्चैव व्यञ्जनोदकधूपनैः ।
वेषाभरणसंयुक्ताः संस्पृशेयुः समाहिताः ।
एवं प्रयत्नं कुर्वीत यानशय्यासनाशने ।
स्नाने प्रसाधने चैव सर्वालङ्कारकेषु च ।
भुक्तवान्विचरेच्चैव स्त्रीभिरन्तःपुरैः सह ।
विहृत्य च यथा कामं पुनःकार्याणि चिन्तयेत् ।
अलङ्कृतश्च सम्पश्येत् आयुधानां पृथक्जनम् ।
वाहनानि च सर्वाणि शस्त्राण्याभरणानि च ।
सन्ध्याचोपाश्य शृणुयादन्तेर्वेश्मनि शास्त्रभृत् ।
रहस्याख्यायिनं चैव प्रणिधानं च वष्टि तम् ।
गत्वा कक्षान्तरं सम्यग् समनुज्ञाय तच्चन ।
प्रविशेद्भोजनार्थन्तु स्त्रीभिरन्तःपुरं पुनः ।
तथा भुक्त्वा पुनःकिञ्चित्तूर्यघोषैः प्रहर्षितः ।
सन्दिशेच्च यथाकालमुत्तिष्ठेद्विगतक्लमः ।
एतद्वृत्तं समातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्वमेवैतद् भृत्येषु विनिवेशयेत् । इति

**इति श्रीमन्महाराजादलपतिराजविरचिते नृसिंह-
प्रसादे संस्कारसारे राजधर्माः ॥**

# अथवैश्यधर्माः ॥

मनुः

वैश्यस्तु कृतसंस्कारं कृत्वा दारपरिग्रहम् ।
वार्त्तायां नित्ययुक्तः स्यात्पशूनां चैव रक्षणे । इति ।

पराशरे

स्वाध्यायं यजनं दानं कुसीदं पशुपालनम् ।
गोरक्षकृषिवाणिज्यं कुर्याद्वैश्यो यथाविधि ।
तिलचर्मरसाश्चैव विक्रेया पशुना जितः ।
वणिक्पथमुपासीत वैश्यो वैश्यपथे स्थितः । इति ।

मनुः

मणिमुक्ताप्रवालानां लोहानां तन्तवस्य च ।
गन्धानाञ्च रसानाञ्च विद्यादर्थंवलावलम् ।
वीजानाञ्चैव चोत्पत्तौ क्षेत्रस्य च गुणस्य च ।
मानयोगं च जानीयात्तुलायोगश्च सर्वशः ।
सारं सारं च भाण्डानां देशानाञ्च गुणागुणम् ।
लाभलाभं च पण्यानां पशूनाञ्च विवर्धनम् ।
भृत्यानाञ्च भृतिं विद्याल्लाभश्च विविधा नृणाम् ।
द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ।
धर्मेण च द्रव्यवृद्धौ वातिष्ठेत् मतमुत्तमम् ।
दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः ।
वणिक्धर्ममिमं कुर्वन् देवब्राह्मणपूजकः ।
वणिक् सर्वमवाप्नोति पूज्यमानोप्सरोगणैः । इति ।

व्यासः

यः करोति जडान् साधून् वणिक्कर्मणि वञ्चनम् ।
स याति नरकं घोरं धनं तस्यापि हीयते । इति

इति श्रीमन्ममहाराजाधिराज श्रीदलपतिराजविरचिते
नृसिंहप्रसादे संस्कारसारे वैश्यधर्माः ॥

# अथ शूद्रधर्माः ।

माधवीये

शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते ।
अन्यथा कुरुते किञ्चित्तद्भवेत्तस्य निष्फलमिति ।
विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् ।
शुश्रूषैव च शूद्रस्य धर्मो निश्रेयसः परः ।

शुचिरुत्कृष्टशुश्रूषो मृदुवागनहङ्कृतिः ।
ब्राह्मणायाश्रयो नित्यं उत्कृष्टां जातिमुच्यते ।
द्विजशुश्रूषयैव वै स पाकयज्ञे अधिकारवान् ।
निजाञ्जयति वै लोकान् शूद्रो धन्यतरःस्मृतः ।

रागो द्वेषश्च मोहश्च पारुष्यं च नृसंसती ।
शाप्यश्च दीर्घवैरत्वं अत्तिमानमनार्जवम् ।
अनृतञ्चाविवादस्य पैशुन्यमतिलोमता ।
निःकृतिश्चाप्यविज्ञानं जनने शूद्रमाविशेत् ।

दृष्ट्वा पितामहाशूद्रमभिभूतश्च तापसैः ।
द्विजशुश्रूषणं धर्मं शूद्राणां तु प्रयुक्तवान् ।
नश्यन्ति तामसाभावा शूद्रस्य द्विजभक्तिसः ।
द्विजशुश्रूषया शूद्रो परं श्रेयोऽधिगच्छति ।
दानं यज्ञश्च शुश्रूषा द्विजातीनां त्रिधागता ।
व्याख्यात शूद्रधर्मोऽपि जीविका कारुकर्मता ।
दानञ्च दद्याच्छूद्रोऽपि पाकयज्ञैर्यजंति च ।
पित्रादिकं च वै सर्वं शूद्रः कुर्वीत भक्तिमान् । इति

याज्ञवल्क्यः

स्वाहाकारो नमस्कारो मन्त्रः शूद्रोऽविधीयते ।
तस्माच्छूद्रः पाकयज्ञैर्यजेत् ब्रह्म वा स्वयम् ।
संयमांश्च न कुर्वीत जातु शूद्रः कथञ्चनेति ।

मनुः

भार्या रतिः शुचिर्भूत्वा कर्त्ता श्राद्धक्रियोऽपरः।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेदिति।

व्यासः

कल्पितास्य च निर्वृत्तिं स्वकुटुम्बे यथार्हतः।
शक्तिं वापेक्ष्य तत्किञ्चित् भृत्यानां च परिग्रहम्।
उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च।
पुलकांश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः।
स्वर्गार्थमुभयार्थं वा ब्राह्मणानेव धारयेत्।
जातब्राह्मणकृत्यस्य सत्यस्य कृतकृत्यता।
शूद्रस्य वृत्तिमाकांक्षे क्षेत्रमाराधयेद्यदि।
धनिकं वाप्युपाराध्य वैश्यं शूद्रो जिगीषते। इति।

मनुः

वापिभाद्विधनं लब्ध्वा वशी कुर्याद् गरीयसः।
राजावासमनुज्ञातुं करं कुर्वीत धार्मिकः।
अहिंसकः शुभवरो दैववित् जनपूजकः।
शूद्रो धर्मफलैरिष्टै स्वधर्मेणैव युज्यते।
यश्च कश्चिद्विजातीनां शूद्रः शुश्रूषया व्रजेत्।
कल्पतेऽस्य च तैराहुर्वृत्तिं धर्मविदो जनाः।
वस्त्रं वेष्टनमौष्ट्रश्च रतु पालनह्यंजनानि वा।
यातयामानि देयानि शूद्राय परिवारणमिति।

मनुः

कृषिर्वेदविनाशाय वेदः कृषिविनाशकः।
शक्तिमानुभयं कुर्यादशक्तस्तु कृषिं त्यजेत्।
तथा कृषिं साध्विति मन्येत तां वृत्तिं सद्भिर्गर्हिताम्।
भूमिं भूमिशयांश्चैव हन्ति कष्टमयोमुखः। इति।

नारदः

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरम्।

उभाभ्यामप्यजीवस्तु कथं स्यादिति चेद्भवेत् ।
कृषिगोरक्षमास्थाय स जीवेद्वैश्यकर्मणा ।
वैश्यवृत्या हि जीवँस्तु ब्राह्मणः क्षत्रियोऽपि वा ।
हिंसा प्रायं खरादीनां कृषि यत्नेन वर्जयेदिति ।

धर्मोद्योते–

संवत्सरेण यत्पापं मात्स्यघाती समाप्नुयात् ।
अयोमुखेन काष्ठेन तदेकाहेनैति लाङ्गलीति ।

अयं कृषिनिषेधः बलयज्ञरहितद्विजातिविषयः स एवाह—

वृक्षं भित्वा महीं भित्वा हत्वा च कृमिकीटकान् ।
कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते । इति ।

पराशरः

यूपोऽयं निहितो मध्ये राशिनीमाभिकर्षकैः ।
तस्मादतन्द्रितो दद्यादत्र धान्यार्थिदक्षिणाम् ।
यो न दद्याद्द्विजातिभ्यो राशि कुलमुपागतः ।
अदाताकर्षिकश्चैव सर्वे ते समभागिनः ।

व्यासः

पुत्रे जाते व्यतीपाते संक्रान्तौ ग्रहणेषु च ।
विवाहेषु खले यज्ञे दत्तं भवति चाक्षयम् । इति ।

हारीतः

राज्ञां दत्वा तु षड्भागं दैवानाञ्चैव विंशकम् ।
विप्राणां त्रिंशकं भागं सर्वपापैः प्रमुच्यते ।
देवेभ्यश्च पितृभ्यश्च दद्याद्भागं च विंशकम् ।
त्रिंशद्भागं ब्राह्मणानां कृषिं कुर्वन्न दुष्यति ।

स्वयं वा कर्षणं कुर्याद् वाणिज्यं वा कुसीदकम् ।
तिलान्न पीडयेद्विप्रो यन्त्रचक्रे स्वयं क्षिपेत् ।
प्रक्षिपन् हि द्विजो मोहान्नरकं याति रौरवम् ।
इक्षुवंशोद्भवः सोमः सोमवंशोद्भवो द्विजः ।
य अत्र पीडयेदस्मात् दिक्षु स्यादात्मपातकः ।
तिला रसा न विक्रेया विक्रेया धान्यवत्समा ।

धान्यपरिमाणेन समाः इत्यर्थः ।

विप्रस्यैवं विधा वृत्तिस्तृणकाष्ठादिविक्रये । इति ॥

नारदः

धान्यमुत्पाद्य कृष्यात्तु स्वयमेवकृषीबलः ।
विक्रीणीत तिलान्नैव शुद्धधर्मसमाश्रितः ।
भोजनाभ्यञ्जनादानाद् यदान्यत्कुरुते तिलैः ।
क्रिमिभूतः स विष्ठायाँ पितृभिः सह मज्जति । इति ।

व्यासः

अशस्तौ भेषजस्यार्थे यज्ञदेवार्थमेव च ।
यद्यवश्यन्तु विक्रेयास्तिला धान्येन तत्समाः ।
वर्षावसानयो हेम कृतान्नश्च तिलैः सह ।
अशनं लवणञ्चैव पशूनपि समानुषान् ।
सर्वञ्च तं हरंक्तं सारक्षौमाविकानि च ।
मद्यं नीलीं बला च सर्वांश्चैकशफान् पशून् ।
सद्यः पतति मांसेन लाक्षाया लवणेन च ।
त्र्येहण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ।
इतरेषां च पण्यानां विक्रयेदिह कामुकः ।
ब्राह्मणः सप्तरात्रेण वैश्यभावं निगच्छतीति ।

नारदः

स्नेहद्रव्यरसानां च जीवितामपि कश्चन ।
विक्रेता धान्यपण्यानां प्रोच्यते सर्वदा बुधैः ।
गवां विक्रियकारो तु गोश्च लोमानि यानि तु ।
सततं लोमवर्षाणि गवां गोष्ठे क्रिमिर्भवेत् । इति ।

छागलेयः

कुसुमं नारिकेलञ्च वृन्ताकं फाण्टितं तथा ।
सोमं श्लेषातकञ्चैव तोयं सर्वञ्च सर्वशः । इति ॥

अविक्रेयमिति शेषः ।

मनुः

न कृष्टे विक्रयं कुर्यादग्निविक्रयमेव चेति ।
किञ्चित्तु सुकृतम् ··· ··· ··· ··· ···· ।

नारदः

नियमेन रसादीनां विक्रयो नैव दुष्यति ।
यज्ञार्थं दक्षिणाद्यर्थं प्रजापतिवचो यथेति ।

विज्ञानेश्वरः

ब्राह्मणस्य च विक्रेयं शुष्कं दासतृणादिकम् ।
गन्धद्रव्यैरकाञ्चैव···स्थलीं कृत्तीयते स्वयम् ।
क्षीणं च विदलञ्चैव संस्थानं वदरिं गुदे ।
रक्तकार्पासकं रएयं तच्चेदं विकृतं भवेदिति ।

ऐरका तृणविशेषः ।

आपस्तम्बः

आपद्यपि हि कष्टासु ब्राह्मणस्य न वार्धुकम् ।
समर्घं धनमुद्धृत्य महर्घं यः प्रयच्छति ।
स वै वार्धूषिको नाम ब्रह्मवादिषु गर्हितः । इति ।

यमः

व्याधितस्य दरिद्रस्य कुटुम्बात्प्रच्युतस्य च ।
आधाने चाप्रवृत्तस्य भिक्षाचर्या विधीयते ।

व्यासः

समर्धं धान्यमुद्धृत्य महर्घं यः प्रयच्छति ।
स वै वार्धूषिको नाम यश्च वृद्धिं प्रयोजयेत् ।
भ्रूण हत्यां चतुर्धा च तुलायां समतोलयत् ।
अतिष्ठद्भ्रूणहा कोष्ठं वार्धुषि समं पतति ।

अंगिराः

दुर्भिक्षे राज्यसम्बाधे आशौचमृतसूतके ।
धर्मकाले धनितव्त नियमो नहि लुप्यते ।

दूराध्वगमनाद् विप्रात् द्विजालाभे तु शूद्रकः ।
अकृतान्नश्च यत्किञ्चिद् गृह्णीयादात्मतृप्तये ।
आतुरो दुःखितो वापि तृषार्तो हि बुभुक्षितः ।
भुञ्जन्नविधिना विप्रं प्रायश्चितीयते न चेति ।

व्यासः

तथैव सप्तमे भक्ते भक्तानि षड् नव श्रव ।
अश्वस्तनविधानेन हर्त्तव्यं हि न कर्मणा ।
बलाद् ग्रामादगाराद्वा यतो वाप्युपलभ्यते ।
आख्यातव्यन्तु तत्तस्मै पृच्छते यद्युपस्थितः ।
वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च ।
तृणं गोभ्यो च ग्रासार्थमस्तेयं मनुरब्रवीत् ।

यमः

आपत्सु विहितं स्तैन्यं विशिष्टसमहीनतः ।
ब्राह्मणैस्तन्न कर्तव्यं क्षत्रियो वा कथञ्चन ।
दप्सुतिक्रियया चैवमजीवं हर्त्तुमर्हतीति ।

मनुः

तृणं काष्ठं फलं मूलं प्राकारं वै हरेद् द्विजः ।
गोब्राह्मणार्थं गृह्णाति न स दोषेन लिप्यते । इति ।
शालिब्रीह्यादि धान्यन्तु मुष्टिग्राह्यं विधीयते ।
यवगोधूमयोर्वापि यदि वा मुद्गमाषयोः ।
एतेषां मानवैर्मुष्टिः गृहीतव्यो पथिस्थितैः ।
शाकं शाकप्रमाणेन गृह्यमाणं न दुष्यति ।
गृहीतव्यानि पुष्पाणि देवतार्चनकारणात् ।
अदत्तादापितं विद्यादधिकं यद्यदिच्छति । इति ।

पथिस्थितैः पथिकैरित्यर्थः ।

क्षत्रियोऽपि कृषिं कृत्वा देवान् विप्रांश्च पूजयेत् ।
वैश्यः शूद्रस्तथा कुर्यात् कृषिवाणिज्यशिल्पकम् ।
वैश्यो जीवन् स्वधर्मेण शूद्रवृत्यापि वर्द्धयेदिति ।

याज्ञवल्क्यः

अशक्नुवन्ति शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम् ।
पुत्रदाराव्ययं प्राप्तो जीवेत्कारुकवृत्तिभिः ।
यैः कर्मभिः सुचरितैः शुश्रूषन्ते द्विजातयः ।
तानि कारुककर्माणि शिल्पानि विविधानि च ।
लवणं मधु तैलञ्च दधि तक्रं घृतं पयः ।
न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयम् ।
विक्रीणन्मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम् ।
कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ।
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत् ।

जातूकर्णः

शूद्रस्य द्विजशुश्रूषा तया जीवन् वणिग् भवेत् ।
शिल्पैर्वा विविधैर्जीवैः द्विजातिहितमाचरन्निति ।

पराशरः

इष्टापूर्तौ द्विजातीनां धर्मौ सामान्यतः स्मृतौ ।
अधिकारी भवेच्छूद्रः पूर्त्तधर्मेण वैदिकः । इति ॥

**इति श्रीमन्नृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्गप्रवर्त्तक-सकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाह समस्तसाम्राज्यधुरन्धर-श्रीमन्महाराजाधिराज-श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे संस्कारसारे शूद्रधर्माः ॥**

# अथ जातिविवेकः

ब्रह्मक्षत्रियविट्शूद्रा वर्णाः । सवर्णायां सवर्णासूत्पन्नः सवर्णः ।

ब्राह्मणाद्भिन्नायां क्षत्रियायामुत्पन्नो मूर्धावसिक्तः । ब्राह्मणाद्भिन्नायां वैश्यायामुत्पन्नोऽम्बष्ठः, ब्राह्मणात् शूद्रयां विन्नायामुत्पन्नो निषादः । निषादो नाम मत्स्यघातजीवी स एव पाराशर्यः निषाद इत्युच्यते । राजन्याद्वैश्यायामुत्पन्नो माहिष्यः, राजान्याच्छूद्रायामुत्पन्नो उग्र इत्युच्यते। वैश्याद् शूद्रायां विन्नायां करणः, विन्नासु दुष्टासु ते । ततो मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणा अनुलोमजा षट् ।

क्षत्रियात् ब्राह्मण्यां जातः सूतः, वैश्याद्ब्राह्मण्यामुत्पन्नो वैदेहकः । शूद्राद् ब्राह्मण्यामुत्पन्नश्चाण्डालः सर्वथाः दुष्टः । वैश्यात्क्षत्रियाभुत्पन्नो मागधः, शूद्रात्क्षत्रियायामुत्पन्नाः क्षत्तारः, शूद्राद्वैशाय्रामुत्पन्न आयोगवः । ततः सूतवैदेहिकचंडालमागधक्षत्तायोगवाः षद् प्रतिलोमजाः पुत्राः ।

महिष्येण करिण्यामुत्पन्नो रथकारः पुत्रो जायते इत्यादि सर्वस्मृतिरूपेणाह—सरस्वती ।

याज्ञवल्क्यः

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अग्निन्द्येषु विवाहिषु प्रजाः सन्तानवर्द्धनाः । इति ।

मनुः

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ।

देवलः

ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् ।
एवं क्षत्रियविट्शूद्राः ज्ञेयास्तेभ्यः स्वयोनिजाः । इति

व्यासः

शमो दमस्तथा शौचं क्षान्तिरार्जवमेव च ।
स्वाध्यायो ध्यजनं यानं याजनाध्यापने तथा ।

प्रतिग्रहश्च विप्रस्य षट् कर्माणि तु वृत्तये ।
यागाध्ययनदानानि प्रजानां रक्षणं तथा ।
....दण्डनीतिः क्षत्रियस्य तु वृत्तये ।
शौर्यं तेजो धृतिर्दाक्ष्यं रणे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रकर्म स्वभावजम् ।
स्वाध्यायादीनि कर्माणि कुसीदं पशुपालनम् ।
कृषिक्रिया च वाणिज्यं वैश्यकर्माण्यमूनि च ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजमिति ।
स्त्रीष्वनन्तरजातेषु द्विजैरुत्पादितान् सुतान् ।
सदृसानेव तान्याहुः मातृदोषविवर्जितान् ।

देवलः

तेषां सवर्णजाः श्रेष्ठाः तेभ्यो ये चानुलोमजाः ।
अन्तरालाः बहिर्वर्णाः पतिताः प्रतिलोमजाः । इति ।

मनुः

विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः ।
वैश्यस्य वर्ण एकस्मिन् षडेतेऽपसदा स्मृताः । इति ।
अवरास्तूत्तमा जाता चानुलोम इति स्मृतः ।
नृपायां विप्रतो जातः सवर्णः ब्राह्मणो भवेत् ।
आयुर्वेदं धनुर्वेदान् सदा पठेत् ।
गजास्वारोहणन्तस्य सवणस्तु विधीयते ।
अस्यामनेन कार्येण जातो नक्षत्रजीवकः ।
क्षत्रियाद्वैश्यकन्यायां माहिष्योम्बष्ठ इत्यसौ ।
आयुर्वेदमथागारं पाठाद्यास्य स्ववृत्तये ।
अस्यामनेन चौर्येण जातश्चाश्विक उच्यते ।
अश्वानां विक्रयस्तेषां शुश्रूषावृत्तिरेव तु ।
वैश्यतः शूद्रकन्यायामुग्रको नाम जायते ।
मेषादिविक्रयश्चास्य वृत्तिस्ताम्बूलविक्रयः ।
अन्तःपुराणि वा रक्षेन्नृपाणामाज्ञया सदा ।
चौर्येण कटकारः स्यात्कटविक्रयकर्म च ।

ब्राह्मणाद्वैश्यकन्यायां निषादो नाम जायते ।
मन्त्रौषधिक्रियां कृत्वा नित्यं शालाक्य कर्म च ।
चौर्येण कटकारः स्यादूर्ध्वं नापित एव सः ।
तत्पूर्वं वपनं वृत्तिः कुम्भाणां करणं मृदा ।
क्षत्रियाच्छूद्रकन्यायां जातो दौष्यन्त उच्यते ।
नौकासंग्रहणं चैव मत्स्यानां ग्रहणन्तथा ।
खङ्गादिशस्त्रकरणं दौष्यन्तस्य तदुच्यते ।
अस्यामनेन चौर्येण शूलिको जायते नरः ।
नित्यं शूलरतश्चैव राज्ञां दण्ड्यांस्तु दण्डयेत् ।
ब्राह्मणाच्छूद्रकन्यायां जातः पारशवः स्मृतः ।
भद्रकाल्यर्चनं तस्य नृत्यं वाद्यं च वृत्तये ।
अस्यां वै चोरसंगत्या निषादो जायते सुतः ।
जीवेद्दम्भेन गानेन मृगाणां हिंसयापि वा ।
अवर्ज्यास्तु सवर्णेन जातश्चाग्नेयनर्त्तकः ।
द्विजानामग्निकार्येषु नर्त्तनेनैव नर्त्तयेत् ।
माहिष्यात्करणायान्तु रथकारः प्रजायते ।
अस्य पर्यायनामानि तक्षा शिल्पि च वार्द्धकिः ।
लोहकारः कर्मकारो विद्यते यजनं तथा ।
उपनीतविधानेन कुर्वादाधानमप्यसौ ।
वास्तुशास्त्रमधीयानः प्रासादप्रतिमादिकान् ।
यज्ञपात्रं द्विजातीनां हैमान्याभरणानि च ।
कृष्युपकरणं लेख्यं कर्माण्यस्योदितानि च ।
ब्राह्मण्यां सधवायान्तु जारजातः स कुण्डकः ।
विधवायां गोलकः स्यादेतौ श्राद्धे बहिष्कृतौ ।
नृपायां क्षत्रियाज्जातश्चौर्याद्गज इति स्मृतः ।
नाभिषेकः पवधरो (?) राजकोरन्धयेत्प्रजाः ।
वैश्यायां वैश्यतश्चौर्यात् मणिकारश्च जायते ।
शुक्लाम्बन्धेन शङ्खेन चलनं रतरञ्जनम् ।
अस्यैव मणिकारस्य त्रीणि कर्माणि वृत्तये ।
शूद्रायां शूद्रतश्चौर्याज्जातो माणवको भवेत् ।

अश्वानां तृणदानेन वर्त्तयेदेष नित्यशः।
अवरैरुत्तमस्त्रीषु जातस्याप्रतिलोमजः।

मनुः

क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥
शूद्रादयोगवं क्षत्ता चण्डालश्चाधमो नृणाम्।
वैश्याराजन्यविप्रा सुजायन्ते वर्णसङ्कराः।
आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम्।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः।
वैश्यान्मागधवैदेहौ क्षत्रियात् सूत एव तु।
प्रतीपमेते जायन्ते परेप्यपसदास्त्रयः। इति।

देवलः—

शूद्रादायोगवक्षत्तश्चण्डालाः प्रतिलोमजाः।
वैश्यायां क्षत्रियायाञ्च ब्राह्मण्याञ्च यथाक्रमम्।
तथैव मागधौ वैश्यजातौ वैदेहकस्तथा।
ब्राह्मण्यां क्षत्रियाज्जातः सूतो जात्या तु कर्मणा।
प्रतिलोमनिवासश्च विष्णोरभ्यर्चनन्तथा।
धर्मावबोधनं तस्य रथ्यां च क्रयविक्रयौ।
नित्यं चापि द्विजाचारः इति सूतस्य वृत्तयः।
नृपायां वैश्यतो जातश्चलितो मागधश्च सः।
नृपस्य शासनं कुर्यात्तन्त्रीवीणाँश्च वादयेत्।
अस्यामनेन चौर्येण पुलिन्दो नाम जन्मतः।
हिंसया दुष्टसत्वानामरण्ये वर्त्तयेदयम्।
वैश्यायां शूद्रसंसर्गात् जातः पटहवादकः।
आयोगवस्य तस्यैव नानुवृत्तिर्निगद्यते।
गोजाविपालनं लोहधमनं तक्रविक्रयः।
प्रस्थादिमानपात्राणां करणं कारुकर्म च।
अस्यामनेन चौर्येण चात्रिको जायते पुनः।

तैलपिण्याकलवणविक्रियेणैव वर्त्तयेत् ।
अभोज्यान्नस्त्वयं शूद्रः अस्पृशोऽपि भवेत्पुनः ।
ग्रामादिषु च राष्ट्रेषु प्रविशन्दण्डमर्हति ।
वैश्याद् ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते ।
कर्मणां संस्मृतिर्बृत्तिरस्यान्तःपुरलक्षणम् ।
अस्माद्वंश्यातु चौर्येण म्लेच्छो नाम प्रजायते ।
नर्स्त्रिकपटचित्तो न दर्शयंतेषु वर्त्तयेत् ।
राजन्यां वैश्यतो जातो वैदेहश्चैव पुल्कशः ।
ममानिवृत्तदादायं चिक्रीणीति शकीस्यकम् ।
शूद्रा जातेन राजस्त्री वैणवं सूयते सुतम् ।
वैणवो नर्त्तनेनैव सकुटम्बश्चरेत् सदा ।
शूद्राद्विप्राङ्गना सूते चण्डालमधमं नृणाम् ।
वसां स्कन्धे च सम्बध्य कक्षे धृत्वा तु वल्वलम् ।
पूर्वाह्ले ग्राममासाद्य मलं सर्वं विशोधयेत् ।
अपराह्ले प्रचक्षश्चेद् वध्य एव न संशयः ।
कृष्णायसमलङ्कारो यानं गर्दभ एव च ।
अस्यां वञ्चनजातस्तु ब्राह्मजातस्तु जायते ।
अर्कशूनादितिस्त्वेष वहिर्भावेन वर्तयेत् ।
गणितं प्रश्नसूत्रं वा निकृष्टानाञ्च वेदयन् ।
स्वजातिं वञ्चयित्वा हि संसर्गं कुरुते तु यः ।
चौर्यजातास्तु तत्पुत्रा विज्ञेया जातिवञ्चनात् ।
वर्णास्त्रिष्वनुलोमानां जायन्ते ह्यन्तरालिकाः ।
उग्रायोगवविप्राणां क्षत्रियश्चैव कीर्त्तितः ।
राजाज्ञया वनं स्थित्वा जीवेद्भाण्डारवाहकः ।
वैश्यायां तु महावैश्यः सामुद्रो नाम जायते ।
वर्त्तयेद्वापि निर्दिष्टं पूर्वं मत्स्यादिविक्रयम् ।
निषादाद् ब्राह्मणी सूते नाविकं नाम जातितः ।
रसनागं तथा कुर्याज्जीवनार्थमिदं स्मृतम् ।
राजाङ्गनास्वयोगेन कर्मकारोऽभिजायते ।
लोहादिना स्वनिर्दिष्टे कृत्वा जीवेत्स नित्यशः ।

दौष्यन्ताद्विप्रकन्यायां चलगन्धोऽभिजायते ।
प्रशंसाजीवनं तस्य विचरेत्स यतस्ततः ।
निषादाद्वैश्यकन्यायां निषादो जायते सुतः ।
आनयेत्स सदा मत्स्यान् गृहीत्वा विक्रयेदयम् ।
वर्णास्तु प्रतिलोमभ्यो जात्या व्राता इतीरिता ।
वैदेहकेन ब्राह्मण्यां रजको नाम जायते ।
श्वामांसं भक्षयित्वैव श्मशाने निवसेत्सदा ।
श्वपचेन तु विप्रायां गुहको नाम जायते ।
शैलकान्तारपार्श्वेषु निवसेत्स इतस्ततः ।
अप्रतीक्षः प्रतापी च विक्रयेदोषधं यतः ।
चण्डालाद्विप्रकन्यायां जातो हन्त कचेल्लकः ।
भ्रामकोदन्तदारूणं वर्णानारोपयेत्सदा ।
अस्माकमयकं नाम शूद्रा सूतेङ्गना सुतम् ।
बिलौकसः खनित्रेण स्ववृत्यर्थमाचरेत् ।
खनकस्य नृपायान्तु जात उद्बन्धयः स्मृतः ।
कातुरित्यपि वर्णानां वद्यावद्यं समाचरेत् ।
आयोगवाद् ब्राह्मणस्त्री चर्मकारं प्रसूयते ।
दुष्यन्ताद्वाटधानस्तु ब्राह्मण्यामेव जायते ।
वैश्यानावाट्धान्यास्तु विप्रवात्य उदीरितः ।
नृपाज्ञयान्या शर्माणां व्यभिचारं करोति सः ।
तत्राव्रात्यनृपायां तु मल्लोभल्लानुभवल्लभः ।
मल्लात्तु विच्छविज्ञाने विछवो जायते ततः ।
नटात्करण उत्पन्नः स एव खलु रैवतः ।
खरवात्प्राचीदस्तस्मात्तु नृपायां स च जायते ।
रुद्रमण्डलिकश्चेति जीवेषु नृतदर्शनात् ।
नटमण्डास्यवन्नार्हां नाद्य वेदाधिकारिकम् ।
गीतमस्य विनिर्दिष्टं नायाप्यस्यार्थवृत्तकः ।
वैश्यव्रात्याद्वैश्यायां साधन्या नाम जायते ।

तस्मादाचार्यं आचार्यात् भारुषोसीकषादपि ।
द्विजन्मा तु ततो मैत्रो मैत्रे सातत्व एव च ।
शिवपूजार्चनकृते तेन जीवन्ति नित्यशः ।
द्विजन्मसूतिकादेशे शान्तिं कृत्वा तु वै भवेत् ।
मैत्रोभूतपिशाचादि शान्त्योद्धाटनकर्मवान् ।
भालंवैष्णवापूजां च सदा वृत्यर्थमाचरेत् ।
सौख्यं तद् ब्राह्मणीजात आसीनो नाम नामतः ।
तृणदानेन जीवेत . सर्वदैव गवादिषु ।
आयोगव्यान्तु तस्माच्च दिग्वानाम च जायते ।
चर्मणाश्चैव संस्कारक्रियां कुर्याच्च नित्यशः ।
वैदेहिका तथापि हंतगो नाम जायते ।
सूतादस्युरिता ज्ञेया वनजोवी हृतायजाः ।
प्रतिलोमनिषादात्तु कैवर्त्तो नाम जायते ।
नदीसन्तारवृत्तिश्च नामासौ मांसविक्रया ।
....चौर्यादिदायोगव्यानु जायते ।
नीलादिवर्णविक्रेता जीवनञ्च तदेव तु ।
कारारवं निषादेन चर्मजीवी च सूयते ।
अतो वैदेहिकाज्जातस्तस्य वृत्तिर्निगद्यते ।
हेमादिसकलान् भूमेर्मग्नानादाय नित्यशः ।
प्रातिलोम्यानुलोम्येन वर्णास्तज्ञैस्तु वर्णका ।
षड् वान्ये प्रसूयन्ते तत्प्रसूतेस्त्वनन्ता ।
आर्याश्च यद्वाक्य महावसूनां चाप्यनिर्णयात् ।
अज्ञानाद्वापि वर्णानां जायते जातिसंकरः ।
एते ते संकल्पन्ते पितृमातृव्यतिक्रमाद् ।
प्रदन्नादौ प्रसन्नादौ वेदितव्यास्य कर्मभिः ।
स्व स्व ज्ञातेर्हि यत्कर्म कथितन्तेन वर्त्तयेत् ।
अन्यथा वर्त्तमानो हि स्वयं पतति जातितः ।
इत्येवं जातिसम्भूता प्रवृत्तिः सम्यगीरिता ।

राजा तु धार्मिकः सर्वान् स्वे स्वे कर्मणि योजयेत् ।
स्वजात्युक्तं विना कर्म योऽन्य वृत्या तु जीवति ।
चौरवद्दण्डयेत्तं च पापात्मानं महीपतिः । इति ॥ ६ ॥

इति श्री मल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरवैदिकमार्ग
प्रवर्त्तकसकलभूमण्डलमण्डलसमस्तयवनाधीश्वरश्री
निजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महा-
राजाधिराजश्रीदलपतिराजविरचिते
नृसिंहप्रसादे संस्कारसारे
जातिविवेकप्रकरणं
सम्पूर्णम् ॥

## उपसंहारः

व्युग्रं सिध्वदुत्तमांगमुररीकुर्वन्नपि स्थेयसः ।
कारुण्यादभयप्रदाननिपुणैरालोकनानाक्रमैः ।
आह्लादं निजपादपंकजजुषां यः कल्पयत्यन्वहम् ।
प्रह्लादप्रणयी स नो वितनुतां भद्रम्परः पूरुषः ॥ १ ॥

यो लोकस्य गुराविशापहमनायं भावयन्ते गुरुं ।
येनैतद् गुरुणोदहारि गुरवे तस्मै नमः सर्वदा ।
यस्माद्वेदपथस्थिरो जनिजने यस्य प्रसादाद्रतिः ।
यस्मिन् सर्वगुणाः गुरौ हृदि सदा तं त्वां नृसिंहं भजे ॥ २ ॥

प्रौढ़श्री द्विजराजवंशतिलकालङ्कारहरीः प्रभुः
भारद्वाजकुलानुगःप्रथमया यः शाखयालङ्कृतः ।
श्री मद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारं संस्कृतिकं नयातिचतुरं श्री मान्दलाधीश्वरः ॥ ३ ॥

निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥ ४ ॥ ॥ ६ ॥

# उद्धरणश्लोकानां ग्रन्थानुक्रमेण श्लोकानुक्रमसूची


**अङ्गिरा**

आतुरो दुःखितो वापि २५८
दुर्भिक्षे राज्यसम्बाधे २५७
दूराध्वगमनात् विप्रात् २५८
यत् पूर्वं मनुना प्रोक्तं ३९
षष्ठे तथा द्वादशे च १२२
स्वाभिप्रायकृत कर्म ४१

**अत्रिः**

कुले ऋतुत्रयादर्वाक् १९०

**अपरार्कः**

अन्ये शब्दा च ये नष्टा २४५
असस्तो वन्यशब्दश्च २४५
अन्येष्वपि च कालेषु २४५
अपापकस्तथा धर्मः २४५
आराध्यते स्वधर्मेण २३२
कृत्वाभिधानं मूले तु २४५
खलनं बाहनानां च २४५
गच्छेति पश्चाच्छब्दस्तु २४५
गुल्मांश्च स्थापयेत् २४६
नष्टे चन्द्रेऽष्टमे शुक्रे १२६
बालवृद्धातुरा आर्या २४१
मातापितृभ्यां वामीभिः २४१
मुक्तकेशोरुगार्तिश्च २४५
यद्यपि स्यात् त्रिकालज्ञः २४१
राहोः प्रथमभागस्थो १२६
रिक्तानि चैव पात्राणि २४५
वधकाः पापकर्माणि २४५
संयतान् योधयेदल्पान् २४६
संशोध्य त्रिविधं मार्गं २४५
सेनापतिबलाध्यक्षान् २४६

**अब्दपूर्तिविधानम्**

अब्दपूर्तिं प्रवक्ष्यामि १०६

**आचार्यः**

अकृते च भवेद्दोषः ७६
कृतकौतुकबन्धांश्च ७४
जाते कुमारे तं दृष्ट्वा ८५
तथा विष्णुबलिश्चापि ७६
पतिः पूर्वदिने पितृ ७४
पुराणं मानवो धर्मः २९

**आदित्यपुराणम्**

छत्र छात्रं वस्त्रमाल्यं ८५
जातु श्राद्धे न दद्यात्तु ८४
तत्र दद्यात् सुवर्णन्तु ८५
देवाश्च पितरश्चैव ८५
मानुष्यं यः समासाद्य ४१
यावत् स्वस्थशरीरत्वं ४१

